रिति। न चारोपन्यायेन वक्तुं शक्यम्। तथा सत्यन्यस्य स्यात्। तत्र न प्रकृतेः अग्रे स्वयमेव निषिध्यमानत्वात्। न जीवाना-मस्वातन्त्र्याच्चान्येषामुभयनिषेधादेव। तस्मात् ब्रह्मगतमेव कर्तृत्वम्। एवमोक्तृत्वमपि। नवा काचित् श्रुतिः कर्तृत्वं निषेधति। विरोधभानात् कल्पा तु लौकिकपरा। फल-वाक्येऽप्यश्रुतानां गुणोपसंहारः कर्त्तव्यः। तथाचायं सूत्रार्थः जन्मादिर्यस्येत्यवयवसमासात्तद्गुणसंविज्ञानो बहुव्रीहिः। अथवा जन्मप्रभृति सर्वे भावविकाराः आदिशब्देन गृह्यन्ते। तथाच जन्म च आदिश्चेत्येकवद्भावः। आदिशब्दश्च धर्मवाची स च स्वसम्बन्धिनं लक्षयति। तस्योभयसापेक्षत्वादुत्पत्ते-र्विद्यमानत्वादन्यानेव भावविकाराननुपलक्षयतीत्यादिशब्देनान्ये भावविकाराः। अथवा जन्मनो नादित्वम्। तदाधारस्य पूर्व-मविद्यमानत्वात्। अन्येत्वादिमन्तः तदाधारस्य पूर्वं विद्य-मानत्वात्। अत आदिशब्दः स्वाधारसद्धर्मवाची तद्धर्मोपा-सुपलक्षकः। अथवा गमनप्रवेशयोर्भेदात् जन्म आदिर्येषामिति जात्यपेक्षया एकवचनम्। जन्म तु श्रुतत्वात् सिद्धम्।

अथवा किमनया कुसृष्ट्या जन्माद्यस्य आकाशस्य यत इति। तस्माद्वा एतस्मादात्मन आकाशः सम्भूत इत्येव विचार्यते। फलसम्बन्धित्वात् तेनैकत्रसिद्धः शास्त्रार्थः प्रका-रान्तरेऽपि यतो वा इमानीत्यत्र विस्फुलिङ्गवत्सर्वोत्पत्तिः। अत्र तु क्रमेणेति विशेषः। एतेन सर्वएव प्रकाराः सूचिता वेदितव्याः। ब्रह्मविचारे ब्रह्मणोऽप्यधिकृतत्वात् तद्ब्रह्मे-त्यायाति तत्त्वध्याहारः। शास्त्रे योनिः शास्त्रयोनिः शास्त्रोक्त-

कारणत्वादित्यर्थः। शास्तीति शास्त्रं वेदः। सामान्यग्रहणं पूर्व्वकाण्डे पूर्व्वसृष्टिवाक्यानां संग्रहार्थम्। यथास्यैव कारणत्वमान्यस्य तथोपरिष्टाद्वक्ष्यामः। मतान्तरवज्जन्मादीनाञ्च विकारित्वं किन्त्वाविर्भावतिरोभावावेव तथोत्तरत्र वक्ष्यते तदनन्यत्वाधिकरणे। नामलीलाया अपि न पृथङ्निरूपणं प्रपञ्चमध्यपातात्। केचित् पृथग्रूपनामप्रपञ्चकर्तृत्वं योगविभागेन प्रतिज्ञाय समन्वयादिसूत्रेष्वेव हेतून् वर्णयन्ति। अन्वयसिध्यर्थञ्च अतति व्याप्नोतीति अत्। शास्त्रे योनित्वं प्राप्तं तदिति। नैतत् सूत्रकारसम्मतमिति प्रतिभाति। तस्मात् सर्व्वज्ञत्वं सर्व्वशक्तिमत्त्वञ्च सिद्धं जगत्कर्तृत्वेन।

ननु न सर्व्वो वेदो ब्रह्मणो जगत्कर्तृत्वे मानन्तपोयज्ञादिप्रयुक्त*प्रजापतिप्रभृतीनामेव जगत्कारणत्वस्य पूर्व्वकाण्डे तत्तदुपाख्यानेष्ववगम्यमानत्वात्। तथावान्तरकारणत्वम्। परत्वाश्रवणात्। उत्तरकाण्डे तु द्वयप्रतिपादनाद्विरोधः। सन्देहश्च। मीमांसायाः सन्देहनिवारकत्वेऽप्येकांशस्याप्रामाण्यं स्यात्। उभयसमर्थने शास्त्रवैफल्यं वा। वेदप्रामाण्यादेव तत्सिद्धेः। बाधितार्थवचनं वेदे नास्तीत्यवोचाम।

किञ्च। वेदान्ताः किं वेदशेषा वेदा वा। नाद्यः अनुपयोगात्। अनारभ्याधीतत्वेन तदुपयोगित्वे पूर्व्वकाण्डविचारेणैव गतार्थत्वं विद्याप्रवेशश्च। न द्वितीयः यज्ञाप्रतिपादनात्। मन्त्रब्राह्मणत्वाभावाच्च। तस्माद्वेदोपरा वेदान्ता इति तेषां किं

* इत्र ग०।

स्यादिति चेत्। मैवम्। अस्ति तावद्वेदत्वमध्ययनादिभ्यः स्मर-णाच्च। प्रमाणञ्च सर्व्वोऽपि वेदः स्वार्थे। सच न यत्नश्चेत् ब्रह्म भवतु। न चैतावता अवेदत्वमतिप्रसङ्गात्। शक्यते ह्यग्निहोत्रा-दीनामन्यतरदनन्तर्भाव्यतया वक्तुम्। तस्मात् ब्रह्मापि प्रतिपा-दयन्तो वेदान्ता वेदत्वं न व्यभिचरन्तीति। मन्त्रब्राह्मणरूपत्वं चोत्पश्यामः। क्वचिदेव मन्त्रः ब्रह्मप्रतिपादकं ब्राह्मणञ्चेमाः सृष्ट्यादिप्रतिपादकाः यद्यपि न विशेष्यते तथापि तादृशमेव ज्ञानं फलायेति शुक्रमुत्पश्यामः। पूर्व्ववैलक्षण्यन्तु भूषणाय। काण्डद्वयस्यान्योन्योपकारित्वाय साधारणलक्षणम्। यदेव विद्यया करोतीत्यादिना पूर्व्वशेषत्वं सर्व्वस्य। तमेवं वेदानुवच-नेन ब्राह्मणा विविदिषन्तीत्यादिना सर्व्वस्योत्तरशेषत्वम्। कर्म-ब्रह्मणोः क्रियाज्ञानयोर्धर्मिपरत्वेनैक्यात् कर्त्तृवाक्येषु सर्व्वत्र न विरोधः। तस्माच्छास्त्रयोनित्वं सिद्धम्।

केचिदत्र जन्मादिसूत्रं लक्षणत्वादनुमानमिति वर्णयन्ति। अन्ये पुनः श्रुत्यनुवादकमाहुः। सम्भावनाय श्रुत्यनुमार्थमनु-मानञ्च ब्रह्मणि प्रमाणमिति। तत्तु तन्त्वौपनिषदं पुरुषं पृच्छा-मीति केवलोपनिषद्वेद्यत्वात् उपेक्ष्यम्। अनधिगतार्थगन्तृत्वात् प्रमाणस्य। मनननिदिध्यासनयोः श्रवणाङ्गत्वम्। सन्देह-वारकत्वात् शास्त्रस्यापि तदङ्गत्वमिति। तन्नैतत् स्यात्तच्च किं समवायि निमित्तं कर्त्तृ वा। किमतो यद्येवम्। एवमेतत् स्यात्। यद्येकमेव स्यात् तदा क्रियाज्ञानशक्त्योर्निरतिशयत्वं भज्येत। मृदादिसाधारण्यं च स्यात् मतान्तरवत्। काम-मेवं सन्देहः यावता यतो वा इमानीत्यादिश्रौ निःसन्देहयव-

णात् । एवं हि सः पञ्चमी श्रूयते यत इति । पञ्चम्यास्तसिरिति । आत्मन इत्यपि पञ्चमो निमित्तत्वे न सन्देहः पञ्चम्या निमित्तत्वकथनात् । उपादानत्वे कर्त्तृत्वे च * सन्देहः तद्वाचकाश्रवणात् कल्पनायां प्रमाणाभावात् । समवायित्वे पुनः सुतरां सन्देहः । एवं प्राप्त आह ।

तत्तु समन्वयात् ॥ ४ ॥

। तु शब्दः पूर्व्वपक्षव्यावृत्त्यर्थः । निमित्तत्वस्य श्रुतिसिद्धत्वात् मतान्तरनिराकरणत्वेनापि वक्ष्यते । तत् ब्रह्मैव समवायि कारणम् । कुतः । समन्वयात् सम्यगनुवृत्तत्वात् । अस्ति भाति प्रियत्वेन सच्चिदानन्दरूपेणान्वयात् । नामरूपयोः कार्य्यरूपत्वात् प्रकृतेरपि स्वमते तदंशत्वात् । अज्ञानात् परिच्छेदाप्रियत्वे । ज्ञानेन बाधदर्शनात् । नानात्वं त्वैच्छिकमेव । जड़जीवान्तर्य्यामिष्वेवैकैकांशप्राकट्यात् । कथमेवमिति चेत् । न । सद्रूपे घटरूपक्रियास्विव तारतम्येनाविर्भाववत् जड़ेऽपि भानत्वादिप्रतीतेस्तारतम्येनाविर्भावोऽङ्गीकर्त्तव्यः । भगवदिच्छाया नियामकत्वात् । नच साधारण्येन सर्व्वजगत्प्रति परमाण्वादीनामन्वयः सम्भवति । एकस्मिन्वस्तुनि सम्भवत्यनेककल्पनाया अन्याय्यत्वात् । लोके कर्त्तृविशेषवत् उपादानविशेषग्रहणेऽपि न ब्रह्मणि व्यभिचारः । अलौकप्रतीतेऽस्तित्वादिप्रतीतावपि सम्यगन्वयाभावात् न

* उपादानत्वकर्तृत्वे च क० ।

कार्य्यत्वव्यभिचारी। तस्मात् ब्रह्मण एव समवायित्वम्। एतत् सर्व्वं श्रुतिरेवाह। स आत्मानꣳ स्वयमकुरुतेति। निमित्तत्वन्तु स्पष्टमेव सर्व्ववादिसम्मतम्। केचित्तु शास्त्रयोनित्वपूर्व्वपक्षनिराकरणाय तत्तु समन्वयादिति योजयन्ति। तत् पूर्व्वपक्षसिद्धान्तयोर्द्वयोरप्यसङ्गतत्वादुपेक्ष्यम्। तथाहि।.जैमिनिर्धर्मजिज्ञासामेव प्रतिज्ञाय तत्प्रतिपादकस्य पूर्व्वकाण्डस्य समन्वयमाह। अवान्तरवाक्यानां प्रकारभेदत्वात्। नच सर्व्वस्मिन् वेदे धर्म एव जिज्ञास्यः तद्रूपेणैव व्यासेन ब्रह्मजिज्ञासायाः प्रतिज्ञातत्वात्। सन्देहमात्रवारकत्वाज्जिज्ञासयोः न स्वलौकिकार्थसाधकत्वं तथा सति वेदानामन्याधीनत्वेनाप्रामाण्यं स्यात्। वेदजिज्ञासेत्येवोक्तं स्यात्।

किञ्च।

साधनञ्च फलञ्चैव सर्व्वस्याह श्रुतिः स्फुटम्।
न प्रवर्त्तयितुं शक्ता तथा चेश्वरको न हि।
प्रवर्त्तकस्तु सर्व्वत्र सर्व्वात्मा हरिरेव हि।
यज्ञ एव हि पूर्व्वत्र बोध्यते स्वर्गसिद्धये।
सिद्धएव हि सर्व्वत्र वेदार्थो वेदवादिनाम्।
मन्त्राणां कर्म्मणाञ्चैव दर्शनश्रवणाच्छ्रुतौ।
कृतिश्च सिद्धतुल्यत्वं वेदः स्वार्थे च सम्मतः।

प्रजापतिरकामयत प्रजायेयेति स एतदग्निहोत्रं मिथुनमपश्यत्। प्रजापतिर्यज्ञानसृजताग्निहोत्रञ्चाग्निष्टोमं च पौर्णमासीं चोक्थ्यञ्चामावास्याञ्चातिरात्रञ्च तानुदमिमीत यावदग्निहोत्रमासीत्तावानग्निष्टोम इत्यादि। न ह्युपाख्यानानां

मिथ्यार्थत्वं बुद्धजन्मनः पुरोक्तं युक्तं वा तथा सति वेदानामप्रामाण्यमेव स्यात्। मिथ्योपाख्यानप्रतिपादकलोकवत्। तस्मात् पूर्वमीमांसानभिज्ञाः क्रियापरत्वं सर्वस्यापि वेदस्य वदन्तो मूर्खा एव। उत्तरवादिनोऽपि पूर्वाज्ञानमङ्गीकृत्य पूर्वानुपयोगित्वं ब्रह्मज्ञानस्य वदन्तो वेदानभिज्ञाः। यदेव विद्यया करोति श्रद्धयोपनिषदा वा तदेव वीर्यवत्तरं भवतीति उपनिषद्ज्ञानस्य श्रुतिसिद्धैव कारणता। न च बाधितत्वात् त्यज्यत इति वाच्यम्। ब्रह्मात्मज्ञानवतएव वशिष्ठादेर्यज्ञाधिकारात्। न चैवं किमनेनेति वाच्यम्। इत्यभूतत्वात् यज्ञस्य। किञ्च कर्मफलवत् ब्रह्मफलस्यापि लौकिकत्वात्। य एवं वेद प्रतितिष्ठति अन्नवानन्नादो भवति महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन महान् कीर्त्त्येति। अत्यन्ताविद्यावतो यज्ञानधिकारात्तन्निषेधार्थं ज्ञानमुपयुज्यते। न च देहाध्यासस्य कारणत्वम्। ब्रह्मार्पणं ब्रह्महविरित्यादि स्मृतेः। तस्मादन्योऽन्योपयोगित्वे न कोऽपि दोषः। क्रियाज्ञानयोः स्वातन्त्र्येण पुरुषार्थसिद्ध्यर्थं भिन्नतया शास्त्रप्रवृत्तिः।

किञ्च। वेदान्तवाक्यानामस्मिन् शास्त्रे समन्वय एव प्रतिपाद्यते। सन्देहनिराकरणद्वारा। तत्कथं सिद्धवद्धेतुत्वेन निर्देशः। अधिमवैयर्थ्यं च स्यात्। न च प्रतिज्ञागर्भितहेतुत्वम्। अनुपयोगात्। गौणमुख्यभावे परं विवादः। न च येन रूपेण समन्वयो मतान्तरस्थैर्विचारितः तथापि सूत्रेषु निर्णयोऽस्ति। शास्त्रारम्भस्तु प्रथमसूत्रएव समर्थितः। तस्मात् समवायिकारणत्वमेवानेन सूत्रेण सिद्धम्। ननु कारणत्वमेवास्तु ब्रह्मणः किं समवायिकारणत्वेन विशेषितत्वस्य स्यात्। अनर्थरूपत्वेन

कार्य्यस्यायुक्तता च। तस्मादनारम्भणीयमेवैतत्सूत्रमिति चेत्। नैवम्। सर्व्वोपनिषत्समाधानार्थं प्रवृत्तः सूत्रकारः। तद्यदि ब्रह्मणः समवायित्वं न ब्रूयात् भूयानुपनिषद्भागो व्यर्थः स्यात्। इदं सर्व्वं यदयमात्मा। आत्मैवेदं सर्व्वं स सर्व्वं भवति। ब्रह्मतं परादादित्यादि स आत्मानं स्वयमकुरुत। एकमेवाद्वितीयम्। वाचारम्भणं विकार इत्यादि। एवमादीनि वाक्यानि स्वार्थे बाधितानि भवेयुः। नन्वेवं निःसन्दिग्धत्वात् कथं सूत्रप्रवृत्तिः उच्यते। अस्थूलादिवाक्यान्यपि सन्ति सर्व्वत्र प्रपञ्चतद्धर्मवैलक्षण्य-प्रतिपादकानि। ततोऽन्योन्यविरोधे नैकस्य मुख्यार्थबाधो वक्तव्यः। तत्र स्वरूपापेक्षया कार्य्यस्य गौणत्वात् प्रपञ्चरूपप्रतिपादका-न्यामेव कश्चित् कल्पयेत्। तन्माभूदिति जन्मादिसूत्रवत् समन्वय-सूत्रमपि सूत्रितवान्। तथाच अस्थूलादिगुणयुक्त एव अविक्रिय-माण एव आत्मानं करोतीति वेदान्तार्थः सङ्गतो भवति। विरुद्ध-सर्व्वधर्माश्रयत्वन्तु ब्रह्मणो भूषणाय।

किञ्च। अन्यपदार्थसृष्टौ वैषम्यनैर्घृण्ये स्याताम्। कर्म्मा-धीनत्वेऽनीशिता। ततः कर्त्तृत्वमपि भज्येत। ततः सर्व्व-माहात्म्यनाशएव स्यात्। नन्वेवमेवास्तु अपवादार्थत्वात् रज्जुसर्पवदयुक्तार्थकथनेऽपि न दोषः। सर्व्वं समाप्नोषि ततोऽसि सर्व्व इति स्मृतेश्चेति चेत्। नैवम्। तथा सति पापण्डित्वं स्यात्। एतादृशशास्त्रार्थाङ्गीकर्त्तुरासुरेषु भगवता गणितत्वात्।

असत्यमप्रतिष्ठन्ते जगदाहुरनीश्वरम्।
अपरस्परसम्भूतं किमन्यत् कामहैतुकम्॥

इति शास्त्रानर्थकत्वं । सर्वं समाप्तोपोत्थाणमसङ्गतं स्यात् । यत्परिच्छेदात् । नहि वेदो निःप्रपञ्चरूपकथनमुक्त्वा स्वोक्तं जगत्कर्तृत्वं निषेधति । तस्मादध्यारोपापवादपरत्वेन व्याख्यातृभिर्वेदान्तालिलापः कृता इति मन्यामहे । सर्ववाक्यार्थबाधात् । यथा निर्दोषपूर्णगुणविग्रहता भवति तथोपरिष्टाद्वक्ष्यामः । ननु पुरुषार्थार्थानि शास्त्राणि । इदञ्च शास्त्रं मोक्षरूपपुरुषार्थबोधकम् । मोक्षश्चाविद्यानिवृत्तिरूप इति युक्तम् । अविद्या चाज्ञानं ज्ञानेनैव नश्यति । ततो ज्ञानोपयोगित्वेन व्याख्यातव्ये वेदान्तेऽध्यारोपापवादव्यतिरेकेण व्याख्यानमयुक्तम् । अतो यथाकथञ्चिद्व्याख्यानेऽपि पुरुषार्थसिद्धेर्न कोऽपि दोष इति चेत् । न । पुरुषार्थस्य शास्त्रार्थस्य वा स्वरूपं शास्त्रैकसमधिगम्यं न स्वबुद्धिपरिकल्पितम् । अतः स्वबुद्ध्या शास्त्रार्थं परिकल्प्य तत्र वेदं योजयन्तो महासाहसिकाः सद्भिरुपेक्ष्याः । पुरुषार्थः पुनर्यथा वेदान्तेष्ववगतः । ब्रह्म वेद ब्रह्मैव भवति । ब्रह्मविदाप्नोति परम् । न स पुनरावर्त्तते । ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् । अनावृत्तिः शब्दादनावृत्तिः शब्दादित्येवमादिभिः श्रुतिस्मृतिन्यायैः ब्रह्मप्राप्तिरेव पुरुषार्थत्वं ब्रह्म च पुनर्न जीवस्वात्ममात्रम् अधानवद्या ।

'एकस्यैव ममांशस्य जीवस्यैव महामते ।
बन्धोऽस्याविद्ययानादिर्विद्यया च तथेतरः ॥

इति भगवता जीवस्यैवाविद्यावत्त्वप्रतिपादनात् । तस्मात् न्यायोपबृंहितसर्ववेदान्तप्रतिपादितसर्वधर्मवत् ब्रह्म । तस्य श्रवणमननिदिध्यासनैरन्तरङ्गैः शमदमादिभिश्च बहिरङ्गैरतिशुद्धे

चित्ते स्वयमेवाविर्भूतस्य स्वप्रकाशस्य सायुज्यं परमपुरुषार्थः । तस्मात् सर्व्वे वेदान्ताः स्वार्थएव मुख्यार्था इति न्यायैर्वक्तव्यत्वात् ब्रह्मणः समवायित्वाय समन्वयसूत्रं वक्तव्यम् । एवं ब्रह्मजिज्ञासां प्रतिज्ञाय किंलक्षणकं ब्रह्मेत्याकाङ्क्षायां जन्मादिसूत्रद्वयेन वेदप्रमाणकजगत्कर्तृसमवायि चेत्युक्तम् *। एवं त्रिसूत्र्या जिज्ञासालक्षणविचारकर्त्तव्यता सिद्धा। तत्र ब्रह्मणि चतुर्धा विचारः स्वरूपसाधनफलप्रतिपादकानि वेदान्तवाक्यानि त्रिविधानि मतान्तरनिराकरणञ्च। तत्र स्वरूपे विचारिते मतान्तरनिरासव्यतिरेकेण साधनफलयोरनुपयोगात्। अतः प्रथमं स्वरूपनिर्णयः। तदनु मतान्तरनिरासः। तदनु साधनानि फलं चेति। तत्र प्रथमेऽध्याये स्वरूपवाक्यानि विचार्य्यन्ते। तानि द्विविधानि। सन्दिग्धानि निःसन्दिग्धानि च। तत्र निःसन्दिग्धानां निर्णयो न कर्त्तव्यः। सन्दिग्धानि पुनश्चतुर्विधानि। कार्य्यप्रतिपादकानि। अन्तर्य्यामिप्रतिपादकानि। उपास्यरूपप्रतिपादकानि। प्रकीर्णकानि चेति। तत्र प्रथमपादे कार्य्यवाक्यानां निर्णय उच्यते। सच्चिदानन्दरूपेणाकाशवायुतेजोवाचकवाक्यानि षड्विधान्यपि निर्णीयन्ते। अन्यथान्यवाचकान्यपि वेदान्तेषु भगवद्वाचकानीति। तत्र लक्षणविचारएव सद्रूपाणां वाचकता निर्णीता। चिद्रूपस्य ज्ञानप्रधानस्य निर्णयार्थमीक्षत्यधिकरणमारभ्यते सप्तभिः सूत्रैः। सच्छब्दारत्वात् ज्ञानस्य।

* जगत्कर्त्ता समवायी च इति क०।

तत्रैवं सन्देहः ब्रह्मणः स्वप्रकाशत्वेन सर्व्वप्रमाणाविषयत्वा-द्यतो वाचो निवर्त्तन्त इति श्रुतेश्च विचारः कर्त्तुं न शक्यते। स्वप्रकाशत्वविरोधात् श्रुतिविरोधाच्च। आहोस्विद्विरोधपरिहारेण शक्यत इति। किं तावत् प्राप्तं। न शक्यत इति। कुतः।

ज्ञापनार्थं प्रमाणानि सन्निकर्षादिमार्गतः।
सर्व्वथाऽविषयेऽवाच्येऽव्यवहार्य्ये कुतः प्रमा॥

ऐहिकामुष्मिकव्यवहारयोग्ये पुरुषप्रवृत्तिः। प्रवृत्त्यर्थं हि प्रमाणानि। ब्रह्म पुनः सर्व्वव्यवहारातीतमिति *। नन्वेत-दपि वेदादेवावगम्यत इति चेत्। तर्हि बाधितार्थप्रतिपादकत्वान्न वेदान्ता विचारयितव्या इति प्राप्त उच्यते।

ईक्षतेर्नाशब्दम्। ५।

न विद्यते शब्दो यत्रेत्यशब्दं सर्व्ववेदान्ताप्रतिपाद्यं † ब्रह्म न भवति। कुतः। ईक्षतेः। स देव सौम्येदमग्र आसीदेकमेवा-द्वितीयमित्युपक्रम्य तदैक्षत बहु स्यां प्रजायेयेति। तत्तेजोऽ-सृजत। तथान्यत्र। आत्मा वा इदमेक अग्र आसीत्। नान्यत् किञ्चन मिषत् स ऐक्षत लोकान्नु सृजा इति। स इमान् लोका-नसृजतेति। स ईक्षाञ्चक्रे स प्राणमसृजतेति एवमादिषु सृष्टि-वाक्येषु ब्रह्मण ईक्षा प्रतीयते।

किमतो यद्येवम्। एवमेतत् स्यात्। सर्व्वव्यवहारप्रमा-

* ग पुस्तके सर्व्व इति नास्ति।
† सर्व्ववेदान्तायप्रतिपाद्यं इति क॰।

णातीतोऽपि ईश्वाश्चके लोकसृष्टिद्वारा व्यवहार्य्यो भविष्यामीति अतो यथा यथा कृतवान् तथा तथा स्वयमेवोक्तवान् । पूर्व्वरूपं फलरूपञ्च सृष्टस्यांशपुरुषार्थत्वाय । ततश्च प्रमाणबलेनाविषयः । स्वेच्छया विषयस्त्युक्तम् । ननु सर्व्वप्रमाणविषयत्वे दूषिते केवलवेदविषयत्वं कथं सिद्धान्तोक्रियते । उच्यते । चक्षुरादीनां प्रामाण्यमन्यमुखनिरोक्षकत्वेन न स्वतः भ्रमानुत्पत्तिप्रसङ्गात् । सत्त्वसहितानामेव चक्षुरादोनां प्रामाण्यात् । अतो निरपेक्षा एव भगवन्निःश्वासरूपवेदा एव प्रमाणम् । सङ्केतग्रहस्तु वैदिकएव वेदविद्भिः कृतः । आकृतिमात्रार्थं लोकापेक्षा । अनधिगतार्थगन्तृ च प्रमाणम् । लोकानधिगत इत्यर्थः । धर्म्मब्रह्मणोरलौकिकत्वं सिद्धमेव । लौकिको व्यवहारः सन्निपातरूपत्वात् पुरुषार्थासाधक एव । तर्हि शब्दमात्रस्य कथं ग्रहणम् । वेदव्याख्यात्ववाग्विषयत्वादिति ब्रूमः । एतेन मनसैवानुद्रष्टव्यमित्यपि समर्थितम् । तस्मात् सृष्ट्यादिप्रतिपादका अपि वेदान्ताः साक्षात् ब्रह्मप्रतिपादका इति सिद्धम् ।

स्यादेतत् । कर्त्तृत्वमकर्त्तृत्वं च वेदे प्रतीयते ब्रह्मणः यतो वा इमानि भूतानि जायन्ते स आत्मानं स्वयमकुरुत निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम् असङ्गो ह्ययम्पुरुषः इत्येवमादिवाक्येषु । तत्र द्वेधा निर्णयः सम्भवति । सर्व्वभवनसमर्थत्वात् विरुद्धसर्व्वधर्म्माश्रयत्वेन । अन्यतरबाधाद्वा । अलौकिकापेक्षया लौकिकस्य जघन्यत्वात् कर्त्तृत्वादेर्लौकिकसिद्धत्वात् कर्त्तृत्वबाध एव युक्तः । ईक्षत्यादिकन्तु प्रकृतिगुणसम्बन्धादपि ब्रह्मणो युज्यते । तस्मादलौकिकसर्व्वभवनसमर्थत्वादिकल्पनापेक्षया लौकिक

एवान्तरबाधो युक्तः। ततश्च सत्यस्वरूपादन्यदेवैतदिति स्वयमेवाशंक्य परिहरति सूत्रकारः।

## गौणश्चेन्नात्मशब्दात्। ६।

ईक्षत्यादियुक्तः परमात्मा गौणः प्रकृतिगुणसत्त्वसम्बन्धाद् इति चेत्। न। तथा वक्तुं न शक्यते। कुतः। आत्मशब्दात्। आत्मा वा इदमेक एवाग्र आसीदित्युपक्रम्य स ऐक्षतेत्युक्तम्। आत्मशब्दः पुनः सर्व्वेषु वेदान्तेषु निर्गुणपरब्रह्मवाचकत्वेनैव सिद्धः। तस्यैव जगत्कर्तृत्वं श्रुतिराह। ननु चोक्तमन्यतरबाधो युक्त इति। न युक्तः स्वातन्त्र्याभावेन सगुणस्य कर्तृत्वायोगात्। वेदाश्च प्रमाणभूताः। ततः सर्व्वभवनसामर्थ्यमेव श्रुतिबललभ्यमङ्गीकर्त्तव्यम्।

किञ्च। अस्ति भाति प्रियत्वादिधर्म्मवत् ब्रह्मगतकर्तृत्वं लोके प्रतीयते। कार्य्यत्वात्। तस्मादात्मशब्दप्रयोगात् गुणातीतमेव कर्तृ। नन्वात्मशब्दोऽपि लोकवद्गौणोऽस्तु। लोके हि केनचित् पृष्टो विष्णुमित्र आह। यज्ञदत्तो ममात्मेति अत गौणत्वमुपचार इत्येवं प्राप्तेऽभिधीयते।

## तन्निष्ठस्य मोक्षोपदेशात्। ७।

एवं हि श्रूयते। असद्वा इदमग्र आसीत्। ततो वै सदजायत। तदात्मानं स्वयमकुरुतेत्युपक्रम्य यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते। अथ

सोऽभयं गतो भवतीति। प्रापञ्चिकधर्मरहिते ब्रह्मणि एतस्मिन् पूर्व्वोक्तजगत्कर्त्तरि परिनिष्ठितो मुक्तो भवतीत्यर्थः। तत्र यदि जगत्कर्त्ता गौणः स्यात् तन्निष्ठस्य संसारएव स्यात्। न मोक्षः। किञ्च।

हेयत्वावचनाच्च ॥ ८ ॥

इतोऽपि निर्गुणएव जगत्कर्त्ता। वेदान्तेषु सर्व्वत्र साधनोपदेशे पुत्रादिवत् जगत्कर्त्ता हेयत्वेन नोपदिश्यते। यदि सगुणः स्यात् प्राकृतगुणपरिहारार्थं मुमुक्षुभिर्जगत्कर्त्ता नोपास्यः स्यात्। पुत्रादिवत्। अत ईक्षत्यादयो न सगुणधर्म्माः। सूत्रत्रयस्य ईक्षतिहेतुसाधकत्वात् चकारः। एवं सूत्रचतुष्टयेन ईक्षतिहेतुना जगत्कर्तृत्वोपपत्त्या सृष्टिवाक्यानां ब्रह्मपरत्वमुपपादितम्। अतःपरं स्वतन्त्रहेतूनाह। स्वाप्ययात् गतिसामान्यात् श्रुतत्वाच्चेति सूत्रत्रयेण।

ननु किमर्थं हेत्वन्तराणि। साधकत्वे एकेनापि तत्सिद्धेः। असाधकत्वे शतेनाप्यसिद्धेरिति चेत्। नैवम्। रूपभेदार्थं हेत्वन्तराणि नानाविधान्नभोजनतृप्तिवत्। तथया आत्मशब्दात् तन्निष्ठस्य मोक्षोपदेशात् हेयत्वावचनाच्चेति निर्गुणत्व स्वरूपपरतया कार्य्यपरतया च कार्य्यस्य पुनर्विधिनिषेधभेदात् द्विरूपतेति। एवमुत्तरत्रापि प्रपञ्चियते। तत्र सृष्टिवाक्यानाम् ईक्षतिहेतुना भगवत्परत्वमुक्तम्। इदानीं प्रलयवाक्यानामाह।

स्वाप्ययात् ॥ ९ ॥

ब्रह्मणो न सर्व्वव्यवहारातीतत्वम्। कुतः। स्वाप्ययात्।

स्वमिवययात्। तत्र चित्वकरत्वाज्जीवस्योच्यते। एवं हि श्रूयते। यत्रैतत् पुरुषः स्वपिति नाम सता सोम्य तदा सम्पन्नो भवति तस्मादेनं स्वपितीत्याचक्षते। संप्रपीतो भवतीति स्वपितीति न क्रियापदं किन्तु जीवस्य नाम। तदेव स्वपितीति नामत्वं यदा सता सम्पद्यते। सति स्वशब्दवाच्ये अपीतिं लयं प्राप्नोतीत्यर्थः। अहरहर्लीनो ब्रह्म सम्पद्य ततो सताधिष्ठानं प्राप्य पुनर्नव इव समायाति वासनायोगात्। स्वयमेव चाभेदः। अर्थतः सच्छब्दसामानाधिकरण्यात् निर्गुणत्वम्। ननु प्रलये वक्तव्ये कथं सुषुप्तिः। मोक्षातिरिक्तस्थाने तथा कर्मसम्बन्धाभावादिति ब्रूमः। युक्तिमप्यासामाह।

गतिसामान्यात्॥ १०॥

गतौ सामान्यात् गतिर्मोक्षः समानस्य भावः सामान्यं मोक्षे सर्व्वस्यापि भगवतापि तुल्यत्वात्। एवं हि श्रूयते। स यथा सर्व्वासामपां समुद्र एकायनमित्युपक्रम्य वागेकायनमितिदृष्टान्तार्थं निरूप्य स यथा सैन्धवखिल्य उदके प्राप्त इत्यादिना लयदृष्टान्तं निरूप्य न प्रेत्य संज्ञास्तीति प्रतिपाद्य तन्निरूपणार्थं यत्र हि द्वैतमिव भवति तदितर इतरमित्यादिना सर्व्वस्य शुद्धब्रह्मत्वं प्रदर्शितम्। आदिमध्यावसानेषु शुद्धब्रह्मण एवोपपादनात् सर्व्वेषां वेदान्तानां ब्रह्मसमन्वय * इति। किञ्च।

* उचित इति क०।

आनत्वाच्च ॥ ११ ॥

पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यत इति श्रुत्यैवासन्दिग्धं सर्व्वकार्यत्वं प्रतिपादितम् । सर्व्वे वेदा यत्पदमामनन्तीति च । चकारोऽधिकरणसम्पूर्णत्वद्योतनाय । एवं चिद्रूपस्य कारणतानिरूपणेन वेदान्तानां ब्रह्मपरत्वं निरूपितम् । अतःपरमानन्दरूपस्य कारणत्वोपपादनेन तद्वाक्यानां ब्रह्मपरत्वमुपपाद्यते आनन्दमयाद्यष्टभिः सूत्रैः । तत्र तैत्तिरीयशाखायां ब्रह्मभृगुप्रपाठकद्वयेन । तत्र आनन्दमय इति मयट्प्रत्ययान्तस्याब्रह्मत्वेनाजगत्कर्तृत्वे ब्रह्मप्रपाठकस्याब्रह्मपरत्वं स्यात् इति तन्निराकरणार्थमानन्दमयाधिकरणम् । षड्भिन्द्रियस्वरूपद्वयानन्दभेदेनानन्दस्याष्टविधत्वादष्टसूत्राणि ।

ननु कथं सन्देहः कथं वास्याब्रह्मत्वे प्रपाठकाप्रवृत्तिरिति । उच्यते । ब्रह्मविदः परप्राप्तिं प्रतिज्ञाय श्रेयांसे कारणत्वायानन्दांशप्रवेशस्य जड़त्वपरिहाराय सर्व्वस्यानन्दरूपं फलमुपपाद्य तन्निरूपणार्थं सर्व्वोऽपि प्रपाठक आरब्धः तत्र साधनमेवब्रह्मणो वाक्यादेव निःसन्दिग्धप्रतीतेः फलस्य ब्रह्मत्वं प्रतिपादनीयं तत्राब्रह्मान्नमयादितुल्यवचनात् सुखवाचकशब्दानामेव वचनाच्च सन्देहः । आनन्दांशस्यैव कारणत्वेन ब्रह्मत्वप्रतिपादनार्थत्वात्तदभावे प्रपाठकवैयर्थ्यञ्च फलस्य नैकत्र्यप्रतिपादनायालपदप्रयोगेण फलरूपेण जगत्कारणतामुक्ता तस्यैव मध्ये सर्व्वान्तरत्वमुपपादितम् । तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्माऽऽनन्दमय इति । अन्ते च एतमानन्दमयमात्मानमुपसंक्रामतीति ।

आदिमध्यरूपे अनुयत्फलत्वेनोपयादिवम्। तन्निरूपकस्यापि तत्तुल्यफलत्वं वक्तुमन्नमयादीनामपि ब्रह्मत्वेनोपासनमुक्तम्। तत्र पूर्वपक्षेऽन्नमयादेरिवानन्दमयस्यापि न ब्रह्मत्वम्। अन्नमयादितुल्यवचनात्तथैव फलसिद्धेरिति। एवं प्राप्तेऽभिधीयते।

## आनन्दमयोऽभ्यासात्॥१२॥

आनन्दमयः परमात्मा नान्नमयादिवत् पदार्थान्तरम्। कुतः। अभ्यासात्। अभ्यस्यते पुनः पुनः कीर्त्यत इत्यभ्यासः तस्मात्। अभ्यासस्य भेदकत्वं पूर्वतन्त्रसिद्धम्। यथा पूर्वतन्त्रे शब्दान्तराभ्याससंख्यागुणप्रक्रियानामधेयानां षण्णां कर्मभेदकत्वमेवमेवानन्दमयस्याप्यभ्यासात् पूर्ववैलक्षण्यम्। अतोऽतुल्यत्वात् ब्रह्मत्वम्। एवमभ्यासः श्रूयते। कोह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यात् एष ह्येवानन्दयातीत्यर्थतोऽभ्यासः कृत्वा मयडर्थत्वप्रकृतिस्तु तुल्या। पुनर्वचनेनाभ्यासेन मयडादिभेदे साधिते ब्रह्मत्वम्। न तु इयापत्तिः। उत्तरस्य साधकत्वात्। तस्मादानन्दमयं ब्रह्मैव। अथवा स नैव रेमे तस्मादेकाकी न रमते स द्वितीयमैच्छत् सहैतावानासेत्यादिश्रुतिभिरेष उ एवेति श्रुतेश्च तानि तानि साधनानि कारयित्वा तानि तानि फलानि ददद्भगवान् स्वक्रीडार्थमेव जगद्रूपेणाविर्भूय क्रीडतीति वैदिकैर्निर्णीयते। एतदेव काण्डद्वयेऽपि प्रतिपाद्यते। अन्यथा जीवस्य साधनफले निरूप्यन्त्याः श्रुतेर्जीवपरत्वमेव स्याच ब्रह्मपरत्वम्। कर्मब्रह्मणोरपि जीवशेषत्वं नापेयादेवं सति पूर्वकाण्डेऽवान्तरफलान्युक्तानि

वानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति श्रुतेर्निरवद्यानन्दात्मकमेव परमं फलमिति तद्विवक्षमाण पूर्वं सामान्यत आह। ससाधनं तैत्तिरीये। ब्रह्मविदाप्नोति परमिति। अक्षरब्रह्मवित् परं ब्रह्माप्नोतीत्यर्थः। अत्र परशब्दस्य पूर्वपरत्वे तदित्येव वदेत्। पूर्वं ब्रह्मोक्ताऽपि यत्परमित्याह तेन सान्निध्यात्तत एव परं पुरुषोत्तमरूपमेवात्राभिप्रेतमिति ज्ञायते।

किञ्च। प्रतिवादिना तदात्मिर्ज्ञानात्मिकैव वाच्या तथा सति ब्रह्मप्राप्तो ब्रह्म प्राप्नोतीत्यर्थः स्यात् स चासङ्गतः। साधनसाध्यभावव्याहतिश्च। अतःपरं विशेषतस्तद्विवक्षमाणाऽनुभवैकगम्यं तत्स्वरूपं नान्यमानगम्यमिति ज्ञापयितुमन्यमुखेनाह। तदेषाभ्युक्तेति। अन्यथा सर्व्वार्थतत्त्वप्रतिपादिका श्रुतिरेवं कथं वदेत्। तदित्यव्ययम्। तथा च तत् पूर्व्वोक्तं ब्रह्मविदः परप्राप्तिलक्षणमर्थं विशदतया प्रतिपाद्यत्वेनाभिमुखीकृत्योपरष्टा ऋगेषा विदितपरब्रह्माकैरुक्ता। पूर्व्ववाक्योक्तार्थस्य वैशद्यमनया क्रियत इत्यर्थः सम्पद्यते। तामेवाह। सत्यं ज्ञानमनन्तं ब्रह्म। यो वेद निहितं गुहायां परमे व्योमन्। सोऽश्नुते सर्व्वान् कामान् सह ब्रह्मणा विपश्चिता। सोपपत्तिकमानन्दात्मकत्वमग्रे निरूपणीयमित्यधुना तदनिरूप्य सच्चिदंशौ देशकालापरिच्छिन्नत्वञ्चोक्तयती। अथवा। अक्षरब्रह्मण्यानन्दात्मके* सत्यपि तस्य परिच्छिन्नत्वात्र परमफलत्वमत आनन्देऽपरिच्छिन्नत्वमेव परमफलताव-

---

* आनन्दात्मकत्वे इति ग॰।

च्छेदकमिति तद्धर्मपुरःसरं परमानन्दएवानन्दशब्देनोच्यतेऽत्र। सत्यं विज्ञानमानन्दं ब्रह्म। सच्चिदानन्दविग्रहमित्यादि श्रुतिषु त्रयाणामप्येकप्रक्रमपठितत्वात् द्वितीयोक्तौ तन्नियतसह-चरितत्वेनानुक्तोऽप्यानन्दः प्राप्स्यतएवेत्याशयेन वानन्दः स्फुट-तया नोक्तः।

अथ वेदनपदार्थमाह। यो वेदेत्यादिना। अत्रेदमाकूतम्। नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनुं स्वामिति श्रुत्या वरणेतरसाधनाप्राप्यत्वमुच्यते। एवं सति श्रुतिद्वयविरोधपरि-हारायाक्षरब्रह्मज्ञानेनाविद्यानिवृत्त्या प्राकृतधर्मराहित्येन शुद्धत्वसम्पादनेन पुरुषोत्तमप्राप्तौ स्वरूपयोग्यता सम्पाद्यते। तादृशे जीवे स्वीयत्वेन वरणे भक्तिभावात् सहकारियोग्यता-सम्पत्त्या पुरुषोत्तमप्राप्तिर्भवतीति निर्णीयते। तदैव गुहायां परमव्योम्न्याविर्भावः। परो मोक्षते दृश्यतेऽनेनेति तथा। ज्ञान-मार्गीयजीवज्ञेयप्रकारकाद्वैशिष्ट्येनापि तथा। परमव्योम्नीत्यलौ-किकत्वज्ञापनायालौकिकः प्रयोगः कृतः। अतएवाहनेकधा प्राहुः नाहं वेदैरित्युपक्रम्य भक्त्या त्वनन्यया शक्य इत्यादि स्मृतिरप्येवमेव सङ्गच्छते। अन्यथा ज्ञानमार्गिणामपि ब्रह्मविदां परप्राप्तिरेव स्यात्त्वेवम्।

मुक्तानामपि सिद्धानां नारायणपरायणः।
सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने॥
तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः।
न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह॥

इत्यादिवाक्यैः । एतदेवाह । गुहायां हृदयाकाशे यदाविर्भूतं परमं व्योमाक्षरात्मकं व्यापिवैकुण्ठं तस्य पुरुषोत्तमगृहरूपत्वात् तत्र निहितं स्थापितमिव वर्त्तमानं यो वेद स भक्तो ब्रह्मणा नित्याविकृतरूपेण विपश्चिता विविधं पश्यच्चित्तं हि विपश्चित्त्वं पृषोदरादित्वात् पश्यच्छब्दावयवस्य यच्छब्दस्य लोपं कृत्वा व्युत्पादितो विपश्चिच्छब्दस्तेन विविधभोगचतुरेण सह सर्व्वान् कामानश्नुत इत्यर्थः । एतेन परप्राप्तिपदार्थ उक्तो भवति । शुद्धपुष्टिमार्गीयत्वादस्य भक्तस्य स्वातन्त्र्यं भोग उच्यते । सहभावोक्त्या ब्रह्मणो गौणत्वम् । अतएव भक्ताधीनत्वं भगवतः स्मृतिष्वप्युच्यते । अहं भक्तपराधीनः । वशे कुर्व्वन्ति मां भक्त्येत्यादिवाक्यैः ।

यद्यप्यशभोजन इति धातोरश्नातीत्येवरूपं भवत्यशूङ् व्याप्ताविति धातोर्भवत्यश्नुत इति रूपं विकरणभेदात् पदभेदाच्च तथाप्यत्राशभोजन इति धातोरेव प्रयोग इति ज्ञायते । तथाहि । अत्राशनक्रियायां ब्रह्मणा सहभाव उच्यते । तथाच व्याप्त्यर्थकत्वे ब्रह्मणा सहभूतान् कामान् व्याप्नोतीत्यर्थो भवत्यथवा ब्रह्मणा सहभूतः स जीवः कामान् व्याप्नोतीति । एतौ त्वनुपपन्नौ । नहि कामवज्जीवकर्त्तृकव्यापनक्रियाकर्म्मत्वं ब्रह्मणि सम्भवत्यतिमहत्त्वात् । व्यापनं चात्र स्वाधीनीकरणमेव वाच्यम् । नहि कामानां तथात्वं स्वतः पुरुषार्थरूपं भोगशेषत्वात्तेषाम् । पूर्व्वोक्तपरप्राप्त्याकृतिरूपत्वाच्चास्य तथार्थोऽनुपपन्नः । तेनाशभोजन इति धातोरेवायं प्रयोगोऽर्थस्यालौकिकत्वज्ञापनायालौकिकः प्रयोगः कृतः । व्यत्ययो बहुलमिति सूत्रेण छन्दसि

तद्विधानात् आप्रत्ययपरस्मैपदयोर्व्यत्ययेन अप्रत्ययात्मनेपदे जात इति भोगार्थक एवायं धातुः। एवमेव न तदश्नोति कश्चन न तदश्नोति कश्चनेत्यत्र प्रत्ययमात्रव्यत्ययेन प्रयोगोऽश्धातोरेवेति ज्ञेयम्। अन्यथा सर्वव्यापकस्य ब्रह्मणस्तन्निषेधोऽनुपपन्नः स्यात्।

ननु सकामोऽत्रोपासकस्तदुपास्यश्च सगुणं ब्रह्म इयोरपि कामोपभोगश्रवणात्। यत्र हि द्वैतमिव भवति तदितर इतरं पश्यतीत्युपक्रम्य यत्रत्वस्य सर्वमात्मैवाभूत्तत् केन कं पश्येदित्यादिनाऽन्यदर्शनादिनिषेधात् ब्रह्मविदः कामोपभोगासम्भवश्चेति चेत्। मैवम्। तदेवाभ्युक्तेति वाक्येन पूर्ववाक्योक्तार्थनिरूपकेयमृगित्युक्तत्वेन प्राक्तगुणसम्बन्धस्य तत्र वक्तुमशक्यत्वात्। तथा सति ब्रह्मवित्प्राप्यत्वपरत्वयोरसम्भवापत्तेः। न च वेद्यस्यागुणत्वमुत्तरस्य सगुणत्वमिति वाच्यम्। परत्वानुपपत्तेः। साधनश्रेष्ठभूतस्यागुणत्वं तत्फलस्य सगुणत्वमित्यसङ्गततरञ्च। यद्वि पश्यन्ति मुनयो गुणापाये समाहिता इति श्रीभागवतवाक्येन गुणातीतपुंसां वैकुण्ठदर्शनाधिकार उच्यते यत्र तत्र किमु वाच्यं तत्परदर्शने।

यच्चोक्तं ब्रह्मविदो द्वैतदर्शनानुपपत्त्या कामभोगासम्भव इति तत्राप्युच्यते। यत्र त्वस्य सर्वमात्मैवाभूदिति श्रुतिरखण्डब्रह्माद्वैतभाने ब्रह्मविदः प्रापञ्चिकभेदादर्शनं वदति न तु प्रपञ्चातीतार्थदर्शनं बोधयति निषेधति वा पुरुषोत्तमस्वरूपन्तु यावत् स्वधर्मविशिष्टं प्रपञ्चातीतमेवेति तद्दर्शनादौ किमायातम्। पुरुष एवेदं सर्वं यद्भूतं यच्च भाव्यमित्यनेन ब्रह्मात्मकत्वं प्रपञ्चस्योक्त्वैतदपि तस्य विभूतिरूपं पुरुषस्त्वतो महानित्याह।

एतावानस्य महिमा। अतोज्यायांश्च पूरुषइति श्रुतिरतो न किञ्चित् अनुपपन्नं। एवं सति ब्रह्मविदः परप्राप्तिः पूर्व्वदशा तत् केनेत्यादिनोच्यत उत्तरदशा तु सोऽश्नुत इत्यनेनोच्यत इति सर्व्वं सुस्थम्। छान्दोग्येऽपि यत्र नान्यत् पश्यतीत्यादिना भूमस्वरूपमुक्ता आत्मैवेदंसर्व्वमित्यन्तेन तद्विज्ञायमुक्तोच्यते। स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मरतिरात्मक्रीड़ आत्ममिथुन आत्मानन्दः स स्वराड् भवति सर्व्वेषु लोकेषु कामचारो भवतीति। एतच्च लिङ्गभूयस्त्वात् तद्धि बलीयस्तदपीत्यधिकरणे प्रपञ्चयिष्यते।

अथवा तदेषाभ्युक्तेति वाक्येन पूर्व्ववाक्योक्तब्रह्मनिरूपितेयमृगित्युच्यते। तत्र साधनफले निरूपिते इत्यृच्यपि ते एव निरूप्येते। तथाहि। आनन्दस्य फलात्मकत्वेन साधनशेषभूते ब्रह्मणि तमनुक्ता यो वेदेत्यन्तयर्चा ब्रह्मविदित्येतावतो वाक्यस्य विवरणं क्रियते। एतेन फलाप्तौ स्वरूपयोग्यतासम्पत्तिरुक्ता। ततउक्तरीत्या भगवद्वरणेन भक्तिलाभे गुहायामाविर्भूतं यत्परमं व्योम तस्मिन्निहितः पुरुषोत्तम एवेति तं निहितमिति तृतीयार्थे द्वितीया। तथा च तत्र निहितेन ब्रह्मणेत्यग्रे पूर्व्ववत्। अथ परमफलत्वाभिरव्यानन्दात्मकत्वमन्तरङ्गेभ्योऽप्यन्तरङ्गत्वं तस्मिन् ज्ञापयितुं सर्व्वस्य सर्व्वरूपत्वेन सर्व्वाधिदैविकरूपत्वमपि ज्ञापयितुमाधिभौतिकादिरूपेणाविर्भवितुं भगवानाकाशादिरूपेणाविर्भूतोऽत एव भवत् आकाशस्यैव कर्त्तृत्वमुच्यते। अथैऽन्नमयादीनि चत्वारि रूपाणि पूर्व्वं निरूपितान्युत्तरोत्तरमन्तरङ्गभूतानि। अन्नरसमयशरीरभूतात् प्राणमयस्तस्मान्मनोमयस्तस्मादिज्ञानमयः।

कश्चित्त्वेतानि रूपाणि विकारात्मकत्वात् प्राकृतान्येवैते-भ्योऽप्यन्तरङ्गो विमुक्ताविद्यो जीवएवानन्दमय उच्यत इत्याह । स प्रतिवक्तव्यः । अग्रिमप्रपाठके भृगुणा अधीहि भगवो ब्रह्मेति पृष्टो वरुणस्तदोत्तमाधिकाराभावात् स्वयं ब्रह्मस्वरूपमनुक्त्वा तपसाधिकारातिशयक्रमेण स्वयमेव ज्ञास्यतीति तदेव साधनं सर्वत्रोपदिष्टवान् । तपसा ब्रह्म विजिज्ञासस्वेति । ब्रह्माति-रिक्तेन साधनेन न तत् ज्ञातुं शक्यमिति ज्ञापनाय तपो ब्रह्मेति सर्वत्रोक्तवान् । तथाच तपसा साधनेन ब्रह्मत्वेन ज्ञातानि रूपाणि प्राकृतानीति विचारकेण न वक्तुं शक्यमिति । तर्हि पुनर्ब्रह्मविषयकप्रश्नसाधनोपदेशतत्कारणपूर्व्वातिरिक्तब्रह्मज्ञानानां परम्परा नोपपद्यत इति चेत् । मैवम् । भगवतो हि विभूति-रूपाण्यनन्तानि । तत्र येन रूपेण यत्कार्य्यं करोति तेन रूपेण समर्थोऽपि तदतिरिक्तं न करोति । तथैव तल्लीला यतः । तथा चान्नमयादिरूपैः क्षुद्राण्येव फलानि ददाति । हीनाधिकारिणां तावतैवाकाङ्क्षानिवृत्तिर्भवति । एवं सति यादृशेनाधिकारे-णान्नमयस्वरूपज्ञानं भवति तादृशे तस्मिन् सम्पन्ने तत् ज्ञानमपि तथा । एवमेवोत्तरत्रापि । तथा चाकाशादिरूपमाधिभौतिक-स्वरूपमुक्त्वा आध्यात्मिकं तत् पुरुषरूपं वदन्तो पक्षिरूपमाह । यतस्तेनैव रूपेणाधिभौतिके रूपे आध्यात्मिकस्य पुरुषस्य प्रवेशस्त-दुक्तं वाजसनेयिशाखायाम् । पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः । पुरः स पक्षी भूत्वा पुरः पुरुष आविशदिति । वस्तुतस्तु पुरुष एव परन्तु पुरःसम्बन्धी सन् पक्षी भूत्वा पुरःशरीराण्याविशदित्यर्थः । प्राकृतेषु विविधासु पूर्व्वप्राकृतस्यैकविधस्य प्रवेशोऽनुचितं

यद्यपि तथापि स्वप्रवेशं विना न किञ्चिद्भवतीति गतिप्रतिबन्धक-
मुल्लङ्घ्यालौकिकया गत्या प्रविशामीति ज्ञापनाय पक्षिभवनं।
स हि तादृशः अतएव द्विपदश्चतुष्पद इत्युक्तम्। आधिदैविक
एकएवेति यः पूर्व्वस्येति सर्व्वत्रोक्तम्।

नन्वानन्दमयेऽप्येवमुक्तेनायमपि परमकाष्ठापन्नरूपः किन्तु
पूर्व्वोक्तेभ्योऽतिशयितधर्म्मवान् विभूतिरूपएव। न च शिर आदी-
नामानन्दरूपत्वेनैवोक्तेरयं परमात्मैवेति वाच्यम्। अन्नमये
यथाऽवयवानान्तद्रूपत्वं तथा आनन्दमयेऽपि तेषां तद्रूपत्वादन्यथा
तस्यैषएव शारीर आत्मेति न वदेत्। शरीरं हि पूर्व्वोक्तं तत्स-
म्बन्धी हि शारीरस्तद्भिन्नः प्रतीयते। तथा च परब्रह्मत्वं स्वात्मा-
त्मवत्त्वञ्च धर्म्मं सर्व्वश्रुतिविरुद्धम्। नन्वेतदतिरिक्तश्चेत् ब्रह्म
स्यात्तदानन्दमयादन्योऽन्तर आत्मा ब्रह्मेत्यपि वदेत् नत्वेव-
मतोऽयं परएव इति चेत्। न। आध्यात्मिकरूपाणामेवात्र
निरूपणात् तेषां च पञ्चरूपत्वात् तावतामेव निरूपणं अतोऽस्मा-
दन्य एव पर इति प्राप्ते प्रतिवदति। आनन्दमयोऽभ्यासात्।
आनन्दमयशब्दवाच्यः परएव। कुतः। अभ्यासात्। तस्यैष
एव शारीर आत्मा यः पूर्व्वस्येत्यन्नमयादिषु सर्व्वत्रैवात्मत्वेना-
नन्दमयस्यैव कथनात्।

ननु न किञ्चिन्मानमत्र पश्यामः। किञ्च। आनन्दमयस्यैव
सर्व्वात्मत्वेन कथनमानन्दमयेऽपि तस्यैष एवेत्यादि न वदेदय-
मेव पूर्व्वस्यात्मेति वदेत्ततो नानन्दमयः पर इति चेत्। उच्यते। न
हीश्वरादन्यः सर्व्वेषामेक आत्मा भवितुमर्हति। तस्यानन्दरूपत्वं
चैतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति। रसो

अस्माल्लोकात् प्रेत्येति वाक्ये इदमृशब्दप्रयोगात् प्राकृतगुणमयं प्रपञ्चमतिक्रम्य गुणातीतं प्रपञ्चं साक्षाल्लीलोपयोगिनं प्राप्नोतीत्यवगम्यते। तथात्मैव भगवद्भावे सम्पन्ने पूर्व्वं भगवद्विरहभावेनातितीव्रतेन सर्व्वोपमर्द्दिना शरीरेन्द्रियप्राणान्तःकरणानि नष्टान्येव स्युर्यदि तत्तद्रूपं ब्रह्म यदि तेषु तेषु न प्रविष्टं स्यात्। जीवस्य च ब्रह्मण्येव लयेन लीलारसानुभवेन नाश एव सः। तथा च तत्तद्रूपं ब्रह्म तेषु तेषु स्थितमिति न तेषां नाशः। जीवेत्वानन्दमयः पुरुषोत्तमः प्रविशतीति रसात्मकत्वादानन्दात्मकमेव विरहभावरसाब्धिमनुभूय पश्चात् प्रादुर्भूतप्रभुस्वरूपं प्राप्य न बिभेति कुतश्चनेति वाक्येन लोकात्तद्भावमुक्ता एतं ह वाव न तपति किमहं साधु नाकरवं किमहं पापमकरवमिति वाक्यैर्वेदात्मतयाभाव उच्यते। शरीरप्राणमनोन्तःकरणजीवात्मनां शरीरत्वं वाजसनेयिशाखायामन्तर्यामिब्राह्मणे पठ्यते। यस्य सर्व्वाणि भूतानि शरीरं यस्य प्राणः शरीरं यस्य वाक् शरीरं यस्य चक्षुः शरीरं यस्य श्रोत्रं शरीरं यस्य मनः शरीरं यस्य त्वक् शरीरमित्यादिरन्ते यस्यात्मा शरीरमिति। अत्र पूर्व्वोक्तनिर्गुणदेहानां भगवच्चरणरेणुजत्वेन भूतरूपत्वात्* ब्रह्मशरीरत्वं। तत्रान्नमयतत्प्रवेशेन तत्स्थितिः प्राणेष्वपि तथा। ज्ञानेन्द्रियेषु विज्ञानमयप्रवेशात्तथा। मनसि मनोमयप्रवेशात्तथात्वं। जीवेत्वानन्दमयः प्रविशतीति तथात्वमतोयुक्तं पक्षित्वकथनं आनन्दमयस्य स्वरूपं विशेषतो वक्तुमशक्यमिति यः पूर्व्वस्येति सर्व्वत्रोक्तं। शरीरप्रवेशप्रयोजनकपक्षिरूपित्वं पञ्चस्वपि साधारणमिति तेषु तथा वदन्त्या

* चिन्मूर्त्तिभूतरूपत्वात् इति क॰

नन्दमयेऽपि तथैवोक्तवतो श्रुतिरिति ज्ञेयं । एवं सति स्पर्शमणि-सम्बन्धेन रजतादेर्हेमत्वमिवोक्तप्रकारकप्रवेशादाश्रयाणामपि तत्तदात्मकत्वमित्युच्यते । वस्तुतस्तु परोक्षवादोऽयमिति ज्ञायते । तथाहि । ब्रह्मविदाप्नोति परमिति वाक्येन ब्रह्मविदः परप्राप्तिं सामान्यत उक्त्वा तत्तात्पर्य्यं सत्यं ज्ञानमित्यृचोक्तं । तत्र सर्व्वात्मभाववान् भक्तो भगवता सह तत्स्वरूपात्मकान् कामान् भुंक्त इत्युक्त्याख्यानेन तदर्थोऽवधार्यते । उक्तभक्तस्य सदैव विरहभावे तु विशेषतः प्रियस्वरूपातिरिक्तास्फूर्त्या अन्नप्राणादिरूपः स एवेति ज्ञापनाय तत्तद्रूपत्वमुच्यते । तेन परमप्रेमवत्त्वं सिध्यति । ततो भगवदाविर्भावे सत्यपि पूर्व्वभावस्यातितीव्रत्वेन ज्ञानादिसर्व्वतिरोधानेनाप्रिमरसानुभवो न भविष्यतीति स्वयमेव तदनुभवात्मको भवतीति ज्ञापनाय विज्ञानरूपत्वमुच्यते । तदानुभवविषयः प्रकट आनन्दमय इति तत्स्वरूपमुच्यते । तत्र निरुपधि प्रीतिरेव मुख्या नान्यदिति ज्ञापनाय प्रियस्य प्रधानाङ्गत्वमुच्यते । तदा प्रियेक्षणादिभिरानन्दात्मकएव विविधरसभावसंदोह उत्पद्यते यः स दक्षिणः पक्ष उच्यते । ततः स्पर्शादिभिः पूर्व्वविलक्षणः प्रकृष्टानन्दसंदोहोयः स उत्तरः पक्ष उच्यते । नानाविधपक्षसमूहात्मकत्वात्तयोः पक्षयोर्युक्तं तथात्वं । स्थायिभावस्यैकरूपत्वादात्मत्वमुच्यते यतस्तस्तएव विभावादिभिर्विविधभावोत्पत्तिः । परप्राप्तिसाधनीभूतब्रह्मज्ञानदशायां तदानन्दोऽपि यः पूर्व्वमनुभूतः स गणितानन्द इत्येतदानन्दानुभवानन्तरं तुच्छत्वेन भातीष्टगतावसाधनत्वेन स्वरूपतोऽपि तस्याहीनत्वं चेति पृष्ठभागादपि दूरस्थितपुच्छरूपत्वं ब्रह्मण उच्यते । पुरुषोत्तमाधिष्ठानत्वात् प्रतिष्ठारूपत्वं

च। एवं सत्यचरादप्युत्तमत्वेऽप्रधानीभूय भक्तकामपूरणकर्तृत्वे ऽसम्भावना विपरीतभावना च सम्भवति। तदभावायासत्त्वेव स भवतीत्याद्युक्तं। स्वानुभवाभावेऽपि गुरूपदेशेनापि तदस्तित्वमात्रमपि यो जानाति तं ब्रह्मविदः सन्तं सत्त्वधर्मविशिष्टं वर्त्तमानं च विदुरित्यर्थे यदस्ति ब्रह्मेति चेदित्यादिना। ब्रह्मासत्त्वज्ञानेऽसन् भवतीत्युक्त्वा तदस्तित्वज्ञाने सन् भवतीत्युक्त्वा संतमेनं विदुरिति तत्त्वेनान्यज्ञानं यदुक्तं तेनोक्तपुरुषोत्तमानन्दानुभववन्तं ज्ञानक्रियाविशिष्टं जीवं वर्त्तमानं विदुः। अननुभवे केवलं गुरूपदेशादिना तादृकब्रह्मास्तित्वज्ञाने स्वरूपतः सन्तं तं विदुर्नतु ज्ञानादिमन्तं। तदसत्त्वज्ञाने लसीकतुल्यमितिश्रुतितात्पर्य्यमिति ज्ञायते।

एवं विचारचातुर्य्यवद्भिः सद्भिर्व्रजाधिपे॥
आनन्दमयतानन्दसन्दोहायावधार्य्यते॥

नन्वानन्दमयस्य न ब्रह्मता वक्तुं शक्या। मयटो लोके विकाराधिकारविहितत्वादित्याशंक्य स्वयमेव परिहरति।

## विकारशब्दान्नेति चेन्न प्राचुर्यात्॥ १३॥

अनेनैव पूर्वसूत्रार्थः सिद्धो भविष्यति। विकारवाची शब्दो मयट्प्रत्ययो यस्मिंस्तद्विकारशब्दं तस्मात्तच्छब्दवाच्यं ब्रह्म न भवति। ब्रह्मणोऽविकारित्वादिति चेत्। नात्र विकारे मयट् किन्तु प्राचुर्य्यात्। प्राचुर्यं अतति प्राप्नोतीति प्राचुर्यात्। तथाच पाणिनिः। तत्प्रकृतवचने मयट्। प्राचुर्येण प्रस्तुतं वचनं तत्प्रकृतवचनं तस्मिन् मयट्प्रत्ययो भवती-

त्यर्थः। प्राचुर्येण पूर्व्वापेक्षयाप्याधिक्येन कोह्येवान्यात् कः प्राण्यादिति वाक्ये प्रकर्षेण स्तुतं अतो मयट् पूर्व्वापेक्षया प्राचुर्य-मयते। एकदेशनिर्द्देशेन तदर्थलक्षणया प्राचुर्य्यं। प्राचुर्य्येन प्रस्तुतार्थवाचकत्वादित्यर्थं इति वा। छन्दसि छ्यजव्यतिरिक्तस्थले मयटो विकारे विधानाभावात् व्याकरणमप्यर्थनिर्णायकं विज्ञा-नमयानन्दमयशब्दो पश्यन्नपि पाणिनिर्मयड्वैतयोर्भाषायां छ्यच-श्छन्दसीति कथमवोचत्। अत केचित्सर्व्वविप्लववादिनो विका-रार्थत्वं वदन्ति। श्रुतिसूत्रादीनामर्थाज्ञानात् तत् वेदाद्यर्थ-विज्ञिर्भगवतो नवमावतारकार्यं आलोचेयं। योऽर्थस्तमसो-चाम। शब्दबलविचारेण मयटो विकारार्थत्वं निवारितं। अर्थबलविचारेणापि निराकरोति।

तद्धेतुव्यपदेशाच्च ॥ १४ ॥

हेतुत्वेन व्यपदेशोहेतुव्यपदेशः तस्य हेतुव्यपदेशस्तद्धेतुव्यपदेश-स्तस्मात्। एष ह्येवानन्दयाति। आनन्दयतीत्यर्थः। सर्व्वस्यापि विकारभूतस्यानन्दस्यायमेवानन्दमयः कारणं। यथा विकृतस्य जगतः कारणं ब्रह्म अविकृतं सच्चिद्रूपमेवमेवानन्दमयोऽपि कारणत्वादविकृतोऽन्यथा तद्वाक्यं व्यर्थमेव स्यात्। तस्मान्नानन्द-मयो विकारार्थः। चकारः समुच्चयं वदन् सूत्रद्वयेनैकोऽर्थो मध्ये प्रतिपादित इत्याह।

ननु किमिति निर्ब्बन्धेन सूत्रत्रयेणैवं वर्ण्यते। अन्नमयादिव-दुपासनापरत्वेनापि श्रुत्युपपत्तेः। पक्षपुच्छादित्वेन मोद-प्रमोदादीनामुक्तत्वाच्च। तस्मात् ब्रह्मत्वेन साधितमपि आव-श्यकोपपत्त्यभावात् न ब्रह्मपरत्वमिति शङ्कायामभिधीयते।

मान्त्रवर्णिकमेव च गम्यते ॥ १५ ॥

सत्यं ज्ञानमनन्तं ब्रह्म योवेद निहितं गुहायां परमे व्योमन्। सोऽश्नुते सर्व्वान् कामान् सह ब्रह्मणा विपश्चितेति मन्त्रः। मन्त्रेणाभिधया ह्यत्र प्रतिपाद्यं मान्त्रवर्णिकं। तदुपपादनग्रन्थे तदेव मुख्यतया ज्ञायते। यत्र यदुद्दिष्टं तदेव मुख्यतया ज्ञातव्यं। उपपादनीयं च सन्दिग्धं। तत्र ब्रह्मणा विपश्चितेति सन्दिग्धं सर्व्वज्ञं ब्रह्म तस्य हि फलत्वं वाक्येनोपपाद्यते। फलन्तु सर्व्वैः स्तुतो ह्यानन्दः। अभ्यासात् स्तुतत्वमित्यवोचाम। शिरःपाण्यादिकन्तु मुख्यमेव। पुरुषविधत्वाय। लोके हि अन्तर्भूतं बहिर्वेष्टितं च तदाकारं भवति। जीवोऽत्र मुख्यः। कर्तृत्वेन व्यपदेशात्। स च वस्तुतो हंसरूपः। पुरुषाधिकारकं हि शास्त्रं। तेन पुरुषशरीरे तदाकारः सर्व्वं फलं प्राप्नोति। अतः पुरुषं हंसरूपेणानुवर्णयति। पञ्चस्वपि शारीर आत्मा जीव एव। तत्रान्नमये निःसन्दिग्धत्वात्तस्यैष एव आत्मेति नोच्यते। द्वितीयादि प्रथमोक्तमेवातिदिश्यते। तत्रान्नमये हस्तेन प्रदर्शयन्निव निःसन्दिग्धं व्याख्यातं। तदन्तरो हि प्राण आन्तरव्यवहारकारणं। अन्नभोजनविसर्गादिषूपयोगात्। तस्य सञ्चार आकाशे परिनिष्ठितः पृथिव्यां। एवं लौकिकव्यवहारार्थं बाह्याभ्यन्तरभेदेन द्वयं। तदनु वैदिकव्यवहारः स च मनोमयः पुरुषः। आदेशः कर्म्मचोदना। ब्राह्मणानि सशेषाणि*। अथर्वाङ्गिरसे ब्रह्मकर्म्मत्वात् प्रतिष्ठा। तदनु नानाविधयागादि-

* शेषाणि इति वा पाठः।

साधनवतः फलं विज्ञानमयः। तत्र श्रद्धा आपः। तृतीयाध्याये स्वयमर्थो विस्तरेण वक्ष्यते। यथोक्तकर्तृत्वात् क्रममुक्तिः। ऋतसत्यौ प्रमीयमाणानुष्ठीयमानौ धर्मौ योगश्च मुख्यत्वादात्मा। अधोभागोमहर्लोकः तादृशस्य ततोऽर्वाक्संस्थत्वभावात्। ततोऽपि ब्रह्मविद् आनन्दमयः फलं। तस्य स्वरूपस्यैकत्वात् धर्मभेदेन शिरःपाण्यादि निरूप्यते। तस्य मुख्यतया प्रीतिविषयत्वं धर्मस्तच्छिरः। मोदप्रमोदौ अपरिनिष्ठितपरिनिष्ठितावानन्दातिशयौ। आनन्दस्तु स्वरूपं साधनरूपत्वात्। ब्रह्मपुच्छमिति श्लोकौ तु सच्चिदंशबोधकौ केवलानन्दत्वपरिहाराय। अपरौ तु श्लोकौ माहात्म्यज्ञापनाय वाग्गोचरागोचरभेदेन अवान्तरानन्दास्तु सर्वे तस्मान्न्यूनतया तदुत्कर्षत्वबोधनाय। तस्मात् सर्वत्र प्रपाठके मान्त्रवर्णिकमेव प्रतीयते। अतोमुख्योपपत्तेर्विद्यमानत्वेनानन्दमयः परमात्मैव। चकारौ मध्ये प्रयुक्तौ विधिमुखविचारेणाधिकरणसंपूर्णत्वबोधकः। निषेधमुखेन च चतुःसूत्रेदमेवाधिकरणं पुनर्विचार्यते सुदृढत्वाय।

इदमत्राकूतं। जीवएवानन्दमयो भवतु। फलस्य पुरुषार्थत्वात्। स ब्रह्मविदानन्दमयो भवतीति स्वर्गादिसुखवल्लौकिकमेव रूपं आनन्दमयं जीवस्य फलभूतमिति प्राप्तेऽभिधीयते॥

नेतरोऽनुपपत्तेः॥ १६॥

इतरोजीवः न। आनन्दमयो न भवति। कुतः। अनुपपत्तेः। जीवस्य फलरूपत्वमात्रेणानन्दमयत्वं नोपपद्यते। तथा

सति तस्य स्वातन्त्र्येण जगत्कर्तृत्वेत्यलौकिकमाहात्म्यवत्त्वेन निरूपणं नोपपद्येत। अतो न जीव आनन्दमयः॥

## भेदव्यपदेशाच्च॥ १७॥

इतोपि न जीवः आनन्दमयः। यतो भेदेन व्यपदिश्यते। रसं ह्येवायं लब्ध्वानन्दीभवतीति। आनन्दोऽस्यास्तीत्यानन्दी। एष ह्येवानन्दयाति। आनन्दयतीत्यर्थः। चकारात् सूत्रद्वयेन जीवो नानन्दमय इति निरूपितं। तर्हि जड़ोभवत्वानन्दमयः। न। आन्तरत्वात्र कार्यरूपोभवति। किन्तु कारणरूपः स स्वमतेनाद्वैव। मतान्तरे प्रकृतिर्भवेत्। तन्निवारयति।

## कामाच्च नानुमानापेक्षा॥ १८॥

जडा प्रकृति र्नास्तीति कारणत्वेन निराकृतैव। अथैतद्वाक्यान्यथानुपपत्त्या सत्त्वपरिणामरूपा कल्प्येत। सा कल्पना नोपपद्यते। कुतः। कामात्। आनन्दमयनिरूपणानन्तरं सोऽकामयतेति श्रूयते। सकामश्चेतनधर्मः। अतश्चेतनएवानन्दमय इति। चकारात् स तपोऽतप्यतेत्यादि। अतोऽनुमानपर्यन्तमर्थमवोधयद्वाक्यं न तिष्ठतीत्यर्थः॥

## अस्मिन्नस्य च तद्योगं शास्ति॥ १९॥

इतश्च न जड आनन्दमयः। अस्मिन्नानन्दमये अस्य जीवस्य आनन्दमयमात्मानमुपसंक्रामतीति तेन रूपेण योगं शास्ति फलत्वेन कथयतीति। न हि जीवस्य जड़ापत्तिर्युक्ता। ब्रह्मैव

सन् ब्रह्माप्येतीतिवदस्यार्थः। तस्मान्नायं जीवो नापि जड़ः। पारिशेष्यात् ब्रह्मैवेति सिद्धं।

ये पुनरधिकरणभङ्गं कुर्वन्ति तेषामज्ञानमेव। यतस्तैरप्यानन्दमयः कः पदार्थ इति वक्तव्यं। न तावज्जीवः तस्य ब्रह्मज्ञानफलत्वेन ब्रह्मणा विपश्चितेत्यानन्दमयस्योक्तत्वात्। अथ जड़ः स्वर्गवत् तदा किमाश्रित इति वक्तव्यं। जड़ाश्रितत्वे कर्म्मफलमेव स्यात्। ज्ञानस्याप्यवान्तरफलमिति चेत्। न। तर्हि किमानन्दात् तस्यातिरिक्तं फलं भविष्यति। जड़चिद्रूपतायाः पूर्व्वमेव विद्यमानत्वात् अस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति श्रुतिविरोधश्च। पुच्छत्वेन ब्रह्मवचनात् प्रद्वेष इति चेत्। तर्हि स एको ब्रह्मण आनन्द इत्यत्रापि षष्ठ्या भेदनिर्देशात् ब्राह्मणः परमपुरुषार्थत्वं नाङ्गीकुर्य्यात्। उपक्रमादिसर्व्वविरोधश्च पूर्व्वमेव प्रतिपादितः। यदप्यधिकरणमन्यथारचितं ब्रह्मपुच्छमिति तत्र न पुच्छस्य ब्रह्मत्वं प्रतिपाद्यते। येनान्यथा समाधानं भवेत्। किन्तु ब्रह्मणः पुच्छत्वमिति पूर्व्वन्यायेनेदं पुच्छं प्रतिष्ठेतिवत्। तत्र श्रुतिबाधो ब्रह्मणापत्रयकः। मौर्ख्यं चैतत्। आनन्दमयस्यैव ब्रह्मत्वे न कोऽपि दोषः स्यात्। आनन्दमयस्याब्रह्मत्वं परिकल्प्य तत्पुच्छत्वेन ब्रह्म वेदबोधितमिति ज्ञात्वा तत्समाधानार्थं यतमानो महामूढ़ इति विषयफलयोः किंमुख्यमित्यप्यनुसन्धेयं। पुच्छत्वोक्तिस्तु पूर्व्वभावित्वाय। अतएव ज्ञानविषयत्वं प्रतिष्ठा च आनन्दमयो ब्रह्मणैव प्रतिष्ठित इति अत्राऽवयवावयविभावो भाक्त इति तु युक्तं प्राणमयादीनामपि तथात्वात् अन्तःस्थितस्य बाह्यानुरोधेन तथात्वमिति सर्व्वं सुस्थं।

अन्तस्तद्धर्मोपदेशात् ॥ २० ॥

अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रु-र्हिरण्यकेशः आप्रनखात्सर्व्व एव ससुवर्णस्तस्य यथा कप्यासं पुण्ड-रीकमेवमक्षिणी तस्योदिति नाम स एष सर्व्वेभ्यः पाप्मभ्य उदितः। उदेति ह वै सर्व्वेभ्यः पाप्मभ्यो य एवं वेदेत्यधिदैवत-मथाध्यात्ममथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते इत्यादि। तत्र संशयः। किमधिष्ठातृदेवताशरीरमाहोस्वित् परब्रह्मेति। ब्रह्मणोवा शरीरमिति तदर्थमिदं विचार्य्यते। हिरण्मयशब्दः सुवर्णविकारवाची आहोस्वित् प्रकाशसाम्येनानन्दवाचीति। ब्रह्मविदाप्नोति परमित्युपक्रम्य आनन्दमयस्य फलत्वमुक्त्वा द्वितीयोपाख्याने स यश्चायं पुरुषे यश्चासावादित्ये स एकः सय एवंविदिति साधनस्यानन्दमयमात्मानमुपसंक्रम्येति फलं श्रुतं। तत्र सवितरि विद्यमानस्याब्रह्मत्वे फलं नोपपद्यत इति विचारारम्भः। तत्र हिरण्मयशब्दो विकारवाची केशनखादय-श्चोच्यन्ते शरीरधर्म्माः। सता वा एषात्वगमे ध्यायस्तमेश्मस्युति शरीरमन्तरा नोपपद्यते। परिच्छेदश्च आधिदैविकादिवचनञ्च बाधकं। अतः सर्व्वथा तच्छरीरमिति तु मन्तव्यं चाक्षुषत्वाच्च। इन्द्रियवत्त्वञ्च श्रूयते। यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्येति। कपेरासः आसनं। आरक्तं तस्यासनं भवतीति। असभ्यतुल्यता च। अतो देहेन्द्रिययोर्विद्यमानत्वात् जीवः कश्चिदधिकारी सूर्य्य-मण्डलस्य इति गम्यते। फलं तत्सायुज्यद्वारेति। अथोच्येत एष सर्व्वेभ्यः पाप्मभ्य उदित इति अपहतपाप्मत्वादिधर्म्मश्रवणात्

पूर्व्वदोषस्यापि विद्यमानत्वात् ब्रह्मण एव केनचिन्निमित्तेन शरीरपरिग्रह इति। तस्य च शरीरस्य कर्म्मजन्यत्वाभावादपहतपाप्मत्वादि संगच्छते। सुवर्णशरीरत्वमपि अलौकिकत्वात् ब्रह्मण एव संगच्छते। शरीरवदिन्द्रियस्यापि परिग्रहः। वर्णमात्रपरिग्रहाभासभ्यता। स्थावरापेक्षया जङ्गमस्योत्कृष्टत्वात् स्थावरावयवोपमानवज्जङ्गमावयवोपमानं स्थावरस्यापीति सर्व्वभावाय श्रुत्युक्तत्वाच्च। तस्मात् ब्रह्मणो एवेदं शरीरं इत्येवं मात्र उच्यते। अन्तस्तद्धर्म्मोपदेशात्।

अन्तर्दृश्यमानः परमात्मैव। कुतः। तद्धर्म्मोपदेशात्। तस्य ब्रह्मणो धर्म्मा उदित्वादिधर्म्मा उपदिश्यन्ते। स एष सर्व्वेभ्यः पाप्मभ्य उदित इति। अयमाशयः। ब्रह्म कारणं जगत्कार्य्यमिति स्थितं। तत्र कार्य्यधर्म्मा यथा कारणे न गच्छन्ति तथा कारणासाधारणधर्म्मा अपि कार्य्ये। तत्रापहतपाप्मत्वादयः कारणधर्म्मास्ते यत्र भवन्ति तद्ब्रह्मैत्येवावगन्तव्यं। बलिष्ठत्वात् कारणधर्म्मस्य। नामतुल्यतामात्रमुभयेषामपि धर्म्माणां ते श्रुत्यैकसमधिगम्या ब्रह्मणि लोके प्रमाणान्तरमपि प्रवर्त्तते। अतः सर्व्वरसादयो ब्रह्मनिष्ठा एव धर्म्माः। स्थूलत्वादयस्तु ये ब्रह्मणि निषिध्यन्ते अस्थूलादिवाक्येषु ते कार्य्यधर्म्माः। अणोरणीयानित्यादिषु कारणधर्म्मा एव। अत एकोऽप्यसाधारणो धर्म्मो विद्यमानः शिष्टान् सन्दिग्धानपि ब्रह्मधर्म्मानेव गमयति। इममेव श्रुत्यभिप्रायमङ्गीकृत्य सर्व्वत्र ब्रह्मवाक्यनिर्णयमाह सूत्रकारः। तथाच श्रुतिव्यतिरिक्तस्थले तथैवावगन्तव्यं। अनन्तमित्यनन्तमूर्त्तिता च ब्रह्मणः प्रतिज्ञाता। अन्यथा गुहायां निहितमिति

विरुध्येत। तस्मात्साकारं तादृशमेव ब्रह्म। ब्रह्मणः शरीरमिति तु सर्व्वथा असमर्थं। सर्व्वकर्तृब्रह्मणः का वा अनुपपत्तिः स्यात् येन तस्यापि शरीरं कल्पयेत्। किन्तु लीलया व्यामोहनार्थमन्यथा भासयेन्नटवत्। तस्मादिदातिरिक्तोऽणुपपत्तिपूर्व्वकं यत्र ब्रह्मधर्म्मसद्भावोऽस्ति मन्तव्यं। ब्रह्म तु वेदैकसमधिगम्यं यादृशं वेदे प्रतिपाद्यते तादृशमेवेत्यसकृदवोचाम। प्रकृतेपि हिरण्मय इत्यत्र मयडर्थोपमत्वान्दसः। अतो न दुष्ट्। हिरण्मयश्च आनन्दवाचो। लोकेऽपि तस्यानन्दसाधकत्वात्। अतः केशादयोऽपि सर्व्वे आनन्दमया एव तादृशमेव ब्रह्मस्वरूपमिति मन्तव्यं। अतएव

ध्येयः सदा सवितृमण्डलमध्यवर्त्ती
नारायणः सरसिजासनसंनिविष्टः।
केयूरवान् मकर*कुण्डलवान् किरीटी
हारी हिरण्मयवपुर्धृतशंखचक्रः।

इत्यत्रापि वपुः स्वरूपं। माया ह्येषा मया सृष्टा इत्यादि भगवद्वाक्यं भगवन्मायया भगवन्तमन्यथा पश्यतीत्याह। न तु भगवानेव मायिक इति। शरीरे सति जीवत्वमेवेति निश्चयः। अतो ब्रह्मधर्म्मोपदेशात् सूर्य्यमण्डलस्थः परमात्मैव।

भेदव्यपदेशाच्चान्यः॥२१॥

इतोऽपि सूर्य्यमण्डलस्थः परमात्मा।' भेदव्यपदेशात्। य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद यस्यादित्यः शरीरं

* कनक इति वा पाठः।

य आदित्यमन्तरो यमयत्येष त आत्मान्तर्याम्यमृत इति श्रुत्यन्तरे आधिदैविकं सूर्यमण्डलाभिमानिभ्यां भेदेन निर्दिष्टं । यद्यपि तत्राकारो न श्रूयते तथापि हिरण्मयवाक्येनैकवाक्यत्वात्सर्व्वत्र साकारमेव ब्रह्मेति मन्तव्यं । अन्तर्यामिब्राह्मणे चत्वारोऽर्था उच्यन्ते सर्व्वत्र तिष्ठन् तद्धर्म्मैर्न सम्बध्यते । सर्व्वमुक्तिपरिहाराय स्वधर्म्मैस्तत्र बध्यते । स्वलीलाविषयं तच्छरीरमिति । तस्य नियमनमप्यैश्वर्य्यमिति । चत्वारो धर्म्मा उच्यन्ते । तस्मात् सर्व्व-नियामकत्वात् अन्य एव नाभिमानी । उपचारव्याहत्यर्थमन्यप-देनोपसंहारः । ब्रह्मत्वे सिद्धे ध्यानं वा उपासना वेति नास्मत्सिद्धान्ते कश्चन विशेषः । कारणे कार्य्यधर्म्मारोपस्त्वयुक्त एव कार्य्ये पुनः कारणधर्म्माधिकरणत्वेनोपासना अभेदात् फला-येति सर्व्वत्र व्यवस्थितिः ।

## आकाशस्तल्लिङ्गात् ॥ २२ ॥

अस्य लोकस्य का गतिरित्याकाश इति होवाच सर्व्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते । आकाशं प्रत्यस्तं यन्ति आकाशो ह्येवैभ्यो ज्यायानाकाशः परायणमिति । तत्र संशयः । भूताकाशो ब्रह्म वेति । ननु कथमत्र सन्देहः आकाशव्योमशब्दाः ब्रह्मण्येव प्रयुज्यन्ते ब्रह्मप्रकरणे । कार्य्यनिरूपणे तु महा-भूतवचनः यथा आकाश आनन्दो न स्यात् परमे व्योमन् प्रतिष्ठितेत्यादि । आत्मनः आकाशः सम्भूत इति कार्य्यनिरू-पणम् । अतः प्रकरणादेव सन्दिग्धनिर्णये किमिति सूत्रारम्भः । जन्मादिलक्षणसूत्रेण चायमर्थो निर्णीतः । अन्यथा ब्रह्मशब्देऽपि

सन्देहः स्यात् महाभूतवेदादिवाचकत्वात्। तस्मात्प्रकरणादेव परिज्ञानं भविष्यतीति चेत्। उच्यते। असन्दिग्धे प्रकरणे तथैव निर्णयः। इह पुनः प्रकरणमपि सन्दिग्धम् अतो विचारः। अवान्तरविद्यायां पर्य्यवसितप्रकरणवदस्यापि प्रकरणस्य भूताकाश एव पर्य्यवसानमिति लोकभाष्यन्यायेनाकाशो भौतिक एवेति पूर्व्वपक्षस्तत्राह। आकाशस्तल्लिङ्गात्। आकाशः परमात्मैव। कुतः। तल्लिङ्गात्। श्रुतिलिङ्गादयो नियामकत्वेन पूर्व्वतन्त्रवदिहापि गृह्यन्ते। लिङ्गश्रुतिसामर्थ्यं एकवाक्यता च सर्व्वासां ब्रह्मश्रुतीनां तच ब्रह्मैव जगत्कारणमिति निःसन्दिग्धेषु सिद्धम्। सर्व्वशब्दवाच्यत्वं ब्रह्मण्येव। तत्र वाक्यार्थापेक्षया पदार्थस्य दुर्बलत्वात् वाक्यार्थः सर्व्वगतित्वादिः। तद्वाक्यार्थान्यथाऽनुपपत्त्या आकाशपदार्थो ब्रह्मेति। सर्व्वशब्दवाच्यत्वाच्च न लक्षणा मुख्यत्वाच्च। यावन्मुख्यपरत्वं सम्भवति तावन्न कस्यापि वेदान्तस्यापरब्रह्मपरत्वमिति मर्य्यादा। तस्माद् यदेष आकाश आनन्दो न स्यादितिवद्व्याख्याकाशो ब्रह्मैवेति सिद्धम्।

अतएव प्राणः॥ २३॥

प्रस्तोतर्या देवता प्रस्तावमन्वायत्तेत्युपक्रम्य श्रूयते कतमा सा देवतेति प्राण इति होवाच। सर्व्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते सैषा देवता प्रस्तावमन्वायत्तेति। तत्र संशयः। प्राणः प्राणो ब्रह्म वेति। पूर्व्वपक्षसिद्धान्तौ पूर्व्ववदेवेत्यतिदिशति। नन्वधिकरणानां

न्यायरूपत्वात् सर्व्वत्र गमिष्यति किमित्यतिदिश्यत इति। उच्यते। प्राणस्य मुख्यस्यापि सर्व्वभूतसंवेशनं स्वापादौ श्रुतावेवोपपाद्यते यदा वै पुरुषः स्वपिति प्राणं तर्हि वागप्येतीत्यादिना। तत्र यथा प्राणविद्याया न ब्रह्मपरत्वमेवमेवास्यापि न ब्रह्मपरत्वमिति। न न्यायेन प्राप्नोति। अतोऽतिदिशति। अनेन चायमतिरिक्तो न्याय आपादितः। यत्रैव प्रकरणे ब्रह्मपरत्वे कल्प्यमाने न किञ्चिद्बाधकं तत्रैव ब्रह्मपरत्वं कल्पनीयमिति। सत्यन्यस्मिन् सम्भवे तत्परत्वमिति। अतएव तल्लिङ्गात् प्राणशब्दवाच्यं ब्रह्मेति।

## ज्योतिश्चरणाभिधानात् ॥ २४ ॥

इदमामनन्ति। अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्व्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेषु इदन्वावयदिदमस्मिन्नन्तःपुरुषे ज्योतिरिति। तत्र ज्योतिःशब्देन प्राकृतं ज्योतिराहोस्वित् ब्रह्मैवेति संशयः। अत्रासाधारणब्रह्मधर्म्माभावात् पूर्व्वपक्षः। सिद्धान्ते तु चरणस्य ब्रह्मधर्मत्वमिति। एतावानस्य महिमाऽतो ज्यायांश्च पूरुषः। पादोऽस्य सर्व्वा भूतानि त्रिपादस्यामृतन्दिवीति पूर्व्ववाक्यम्। गायत्री वा इदं सर्व्वभूतं यदिदं किञ्चेति गायत्र्याख्यब्रह्मविद्यां वक्तुं तस्याः पादचतुष्टयं प्रतिपाद्य ब्रह्मणश्चतुष्पात्त्वमुक्तं। पुरुषसूक्तेऽपि आश्रमचतुष्टयस्य जीवाः पादत्वेनोक्ताः। तथा प्रणवब्रह्मविद्यायामपि अकारउकारमकारनादवाच्याश्चत्वारः पादा विश्वतैजसप्राज्ञतुरीया उक्ताः। तद्विष्णोः परमं पदमिति च। ब्रह्मपुच्छमिति च। सत्यकाम-

ब्राह्मणे तु सप्टएव ब्रह्मणश्चत्वारः पादा निरूपिताः। अतः सच्चिदानन्दरूपस्य प्रत्येकसमुदायाभ्याञ्चतूरूपत्वम्। तत्र केवलानां कार्य्यत्वमेव। चतुर्थपादस्य तु ब्रह्मत्वं तत्रापि षड्विधत्व-प्रतिपादनात् भूतपृथिवीशरीराणां परिचायकत्वेन षड्विधत्वमपि निरूप्य हृदयस्य यद्विधत्वं निरूपयन् तस्य हवा एतस्येत्यादिना पञ्च देवपुरुषान्निरूप्य तेषां द्वारपालत्वज्ञानानन्तरं अथ यदतः परो ज्योतिर्दीप्यते इति चतुर्थपादस्य षष्ठविधत्वप्रतिपादनात् चतुर्थपादे पञ्च पुरुषास्ततः परोदिवो ज्योतिः षष्ठस्यैव सर्व्वत्र दीप्यमानत्वं निरूप्य तदेवान्तःपुरुषे उपसंहरति। तस्मात् पूर्व्वं त्रिपादस्यामृतं दिवीत्युक्तत्वात् अस्य त्रिपात्सम्बन्धि अमृतम् उपरितनलोकेष्विति। अतोऽत्र चतुर्थः पादो निरूप्यत इति सिद्धम्। अतः पादानां ब्रह्मधर्म्मपरत्वात् ज्योतिषो ब्रह्मत्वमिति ब्रह्मधर्म्मनिर्णयार्थमिदमधिकरणं चरणानामौपचारिकत्वव्या-हृत्यर्थं। एतन्निर्णयेन प्रणवादिविद्या निर्णीता वेदितव्याः।

छन्दोभिधानान्नेति चेन्न,तथा चेतोऽर्पणनिग-दात्तथा हि दर्शनम्॥ २५॥

ननु नात्र ब्रह्म चतुष्पात् निरूपितं किन्तु गायत्रीछन्दः गायत्री वा इदं सर्व्वं यदिदं किञ्चेत्युपक्रम्य तामेव भूतपृथिवी-शरीरहृदयभेदैर्व्याख्याय सैषा चतुष्पदा षड्विधा गायत्री तदेतदृचाभ्युक्तं तावानस्य महिमेति। तस्यामेव व्याख्यान-रूपायां गायत्र्यामुदाहृतो मन्त्रः कथमकस्मात् ब्रह्म चतुष्पाद्-भिदध्यात्। यदैतद्ब्रह्मेति ब्रह्मपदमपि छन्दसः प्रकृतत्वात

तत्परमेवावगन्तव्यम्। शब्दस्यापि ब्रह्मवाचकत्वसिद्धेः ब्रह्मोपनिषदितिवत् शब्द ब्रह्मेति च। तस्मात् छन्दसएव पादाभिधानात् न ब्रह्मधर्माः पादा इति चेत् नैष दोषः। तथा चेतोऽर्पणनिगदात्। तथा तेन द्वारेण चेतसोऽर्पणं निगद्यते गायत्री वा इदं सर्व्वं यदिदं किञ्चेति न हि वर्णसमाम्नायरूपस्य सर्व्वत्वमनुपचारेण सम्भवति। यथा सूचीद्वारा सूत्रप्रवेशस्तथा गायत्रीद्वारा बुद्धिस्तत्प्रतिपाद्ये ब्रह्मणि प्रविशेदिति। कुत एतदेवं प्रतिपाद्यत इति तत्राह। तथा हि दर्शनं। तथा तेनैव प्रकारेण दर्शनं ज्ञानं भवति स्थूला बुद्धिर्नाड्येव ब्रह्मणि प्रविशेदिति। एतेन सर्व्वा मन्त्रोपासना व्याख्याताः। हि युक्तश्चायमर्थो लोके सती यत्र प्रविशति तदुपायेन विशतीति। नत्वदृष्टद्वारा। दृष्टे सम्भवत्यदृष्टकल्पनाया अन्याय्यत्वात्। तस्मात् पादा ब्रह्मधर्माः।

## भूतादिपादव्यपदेशोपपत्तेश्चैवम्॥ २६॥

किञ्च। भूतादयोऽत्र पादा व्यपदिश्यन्ते। भूतपृथिवीशरीरहृदयानि चत्वारि। न ह्येतानि गायत्र्याः पादा भवितुमर्हन्ति। ब्रह्मपरिग्रहे तूपपद्यन्ते। यावन्मुख्यमुपपद्यते तावन्न गौणं कल्पनीयम्। अयमर्थः। पूर्व्वहेतौ छन्दसोऽपि पादा व्यपदेशाद्भवन्ति तथापि ब्रह्मणएव युक्ता इति पुरुषसूक्ते एतावानस्येत्यस्य ब्रह्मपरत्वात्। अस्मिन्वाक्ये तु गायत्र्याः पादा एव नोपदिष्टाः। किन्तु ते ब्रह्मण एव पादा इति। तद्वाचकत्वेन गायत्र्यामुपचारेणोपसंहारः। चकारादर्थो न शब्दस्य पादा

भवन्ति किन्त्वर्थस्यैवेति। तस्माद्ब्रह्मवाक्यत्वे भूतादीनां पादत्व-
मुपपद्यते नान्यथेति। तस्मात्पादादीनां ब्रह्मधर्मत्वम्।

उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात्॥ २७॥

पादोऽस्य विश्वा भूतानि सर्व्वाणि भूतान्येकः पादः पाद-
त्रयममृतं दिवीत्येकोऽर्थः।

पादेषु सर्व्वभूतानि पुंसः स्थितिपदो विदुः।
अमृतं क्षेममभयन्त्रिमूर्द्ध्नोऽधायि मूर्द्धसु॥

इत्यपरः। पुरुषसूक्तानुरोधे द्वितीय एवार्थः। प्रथमे तावत्
ननु दिवीति मन्त्रे सप्तम्या आधारत्वं प्रतिपाद्यते। अतःपरमि-
त्यत्र पञ्चम्या अनाधारत्वमत उपदेशभेदात् पूर्व्वोक्तपरामर्शा-
भावाच्च ज्योतिषो ब्रह्मत्वमिति चेत् नैष दोषः। उभयस्मिन्नप्य-
विरोधात्। मन्त्रे दिव्येवोक्तमस्मिन् वाक्ये सर्व्वत्रोच्यते। सर्व्वत्र
विद्यमानस्य दिवि विद्यमानत्वं न विरुध्यते। अतः शब्देन न
तत्राविद्यमानत्वम्। किन्तु ततोऽप्यन्यत्र सत्त्वं बोध्यते। तस्मात्
सप्तमीपञ्चमीनिर्देशौ न विरुद्धः। द्वितीयेतु। ननु मन्त्रे अमृत-
पदमत्र ज्योतिःपदमतः उपदेशभेदाच्चतुर्थस्य पादो ब्रह्म
अतः शब्दाच्च सम्बन्धाद्भेदः प्रतिपाद्यते। अत उपदेशभेदान्नैक-
वाक्यता। अस्मिंश्च वाक्ये चरणाभावात् स्वरूपासिद्धो हेतुरिति-
चेत्। नैष दोषः। उभयस्मिन् ज्योतिःपदे अमृतपदे च प्रयुज्य-
माने एकार्थत्वाच्च विरोधः। पादत्रयमुपरितनलोकेषु चतुर्थं
सर्व्वत्रेति। अन्यथा वैजात्यं पादानामापद्येत। परिच्छेदश्च
विरोधश्च। अतोऽमृतज्योतिःशब्दयोरेकार्थत्वेन विरोधाभावात्

एकवाक्यत्वं । अतोऽत्र चरणसद्भावात्तस्य च ब्रह्मधर्मत्वात् ज्योतिर्ब्रह्मैव ।

प्राणस्तथानुगमात् ॥ २८ ॥

अस्ति कौषीतकिब्राह्मणोपनिषदि इन्द्रप्रतर्दनसंवादः । प्रतर्दनो ह वै दैवोदासिरित्यादिना । एष लोकपाल एष लोकाधिपतिरेष लोकेशः स म आत्मेति विद्यात् स म आत्मेति विद्यादित्येतदन्तम् । तत्र वरदाने मामेव विजानीह्येतदेवाहं मनुष्याय हिततमं मन्य इत्युपक्रम्य त्वाष्ट्रवधादिना आत्मानं प्रशस्य स्वोपासनायाः पापाभावं फलत्वेन प्रतिपाद्य कस्त्वमिति विवक्षायाम् प्राणो वा अहमस्मि प्रज्ञात्मानं मामायुरमृतमित्युपास्स्वेत्युक्त्वा आयुषः प्राणत्वमुपपाद्यामृतत्वञ्च प्राणस्योपपाद्य प्राणेन ह्येवामुष्मिन् लोकेऽमृतत्वमाप्नोतीति अमृतत्वे योगम प्रतिपादयति । तत्र सन्देहः । प्राणः किमात्मा ब्रह्म वेति । अतएव प्राण इत्यत्र प्राणशब्दमात्रे सन्देहः । अत्रार्थेऽपि सन्देहः । बाधकञ्च वर्त्तत इति पृथगधिकरणारम्भः । तत्र साधकासाधारणधर्मस्याभावात् बाधकानां विद्यमानत्वात् न ब्रह्मत्वमिति पूर्वपक्षः । सिद्धान्तस्तु चतुर्भिः सूत्रैः प्रतिपाद्यते । तत्र प्रथमं साधकधर्ममाह । एकेन । त्रिभिर्बाधकनिराकरणं । प्राणः परमात्मा भवितुमर्हति । कुतः । तथाऽनुगमात् । तथाहि । पौर्वापर्य्येण पर्यालोच्यमाने वाक्ये पदार्थानां समन्वयो ब्रह्मप्रतिपादनपर उपलभ्यते । उपक्रमे तावद्वरं वृणीष्वेति इन्द्रः प्रतर्दनोक्तः परमपुरुषार्थं वरमुपचिक्षेप । त्वमेव मे वृणीष्व यं त्वं

मनुष्याय हिततमं मन्यसे इति। तस्मै हिततमत्वेनोपदिश्यमानः प्राणः कथं परमात्मा न स्यात्। न हि परमात्मनोऽन्यद्धि-ततममस्ति। परमानन्दस्वरूपत्वात्। शापाभावश्च ब्रह्म-विज्ञानएव। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे इति श्रुतेः। प्रज्ञात्मत्वञ्च तस्यैव सम्भवति। उपसंहारेऽप्यानन्दोऽजरो-ऽमृत इति एष लोकाधिपतिरित्यादि च तस्मात्सर्वत्रानुगमात् प्राणो ब्रह्म।

न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्ध-भूमाह्यस्मिन्॥ २९॥

बाधकमाह। यदुच्यते प्राणो ब्रह्मेति तन्न। कुतः। वक्तु-रात्मोपदेशात्। यस्मा इन्द्रः आत्मानमुपदिशति। मामेव विजानीहीत्युपक्रम्य प्राणो मा अहमस्मि प्रज्ञात्मानं मामा-युरमृतमित्युपास्स्वेति। स एष प्राणो वक्त्रात्मत्वेनोपदिश्यमानः कथं ब्रह्म स्यात्। तथा च वाचो धेनुत्वोपासनवत् देवतायाः प्राणत्वोपासना बोध्यते। अन्ये च ब्रह्मधर्माः प्राणस्तावका इति। कथमस्य ब्रह्मोपाख्यानत्वमिति चेत्। न। अध्यात्मसम्बन्धभूमा-ह्यस्मिन्। अस्मिन् प्रकरणे अध्यात्मसम्बन्धः आत्मानमधिकृत्य यः सम्बन्धः*। आत्मशब्दो ब्रह्मवाची वस्तुतो जीवस्य ब्रह्मत्वाय तथा वचः तस्य सम्बन्धः तद्धर्माः तेषां बाहुल्यं प्रतीयते एष लोकपाल इत्यादि। यावद्यथाकथञ्चिदपि ब्रह्मप्रकरणत्वं सिद्ध्यति ताव-दन्यप्रकरणत्वमयुक्तमिति हि शब्दार्थः। प्राणस्य प्रज्ञात्मत्वं

---

* क पुस्तके आत्मानमधिकृत्येति नास्ति।

स्वातन्त्र्येणायुर्दातृत्वम्। न वाचं विजिज्ञासीत वक्तारं विद्यादिति चोपक्रम्य तत् यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिताः। स एष प्रज्ञात्मानन्दोऽजरोऽमृतो न साधुना कर्म्मणेत्यादिविषयेन्द्रियव्यवहारे अरनाभिभूतं प्रत्यगात्मानमेवोपसंहरति। सम आत्मेति विद्यादिति चोपसंहारः। तस्मादध्यात्मसम्बन्धबाहुल्यात् ब्रह्मोपदेशएवायम्। तर्हि बाधकस्य का गतिरित्यत आह।

## शास्त्रदृष्ट्या तूपदेशो वामदेववत्॥ ३०॥

पूर्व्वसूत्रेणापहृतमत्र परिहरति तुशब्दः। अयं दोषो व्यवहारदृष्ट्योपदेशे अहं ब्रह्मेत्यार्षेण दर्शनेन तूपदेशः। ननु तत्त्वमसि अयमात्मा ब्रह्मेतिवाक्येषु जीवस्य ब्रह्मत्वं बोध्यते तत्र प्रत्यधिकारं शास्त्रप्रवृत्तिरिति न्यायेन स्वात्मनएव ब्रह्मत्वावगतिर्मुख्या न प्रतर्द्दनस्येन्द्रजीवब्रह्मत्वावगतिरूपासनं वा पुरुषार्थाय। अत. शास्त्रदृष्टिरपि नैवंविधा। केवलस्य चैतन्यमात्रस्य तादृशे ब्रह्मणैक्यावगतिः विरोधात्तत्वमस्यादिवाक्यार्थोऽध्यवसीयते। ननु ब्रह्मधर्म्मा जीवे वक्तुं शक्यन्ते इत्याशङ्क्य परिहरति। वामदेववत्। तद्धैतत् पश्यन् ऋषिर्व्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्य्यश्चेति। य एव मत्यवबुद्धात स सर्व्वं भवति तत्र सर्व्वेषां सर्व्वभावे सर्व्वानन्त्यप्रसङ्गात् सर्व्वमेकमेवेति वक्तव्यम्। ततः कारणत्वएव सर्व्वभाव इति मनुरभवं सूर्य्यश्चेत्यवयुज्यानुवादोऽनुपपन्नः। तत्र यथाभाना-

देशात् सर्व्वधर्म्मस्फूर्त्तिः एवमत्रापि ब्रह्मावेशादुपदेश इति त्वाष्ट्रवधादयो ब्रह्मधर्म्मा एव तदावेशेन क्रियमाणत्वात् ।

नन्वेष वज्रस्तव शक्र तेजसा हरेर्दधीचेस्तपसा च तेजितः ।
तेनैव शत्रुं जहि विष्णुयन्त्रितः । इति

इन्द्रवचनं भागवते । तस्माद्युक्तं ब्रह्मधर्म्मवचनम् । ननु स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हीति सूत्रे सुषुप्तौ ब्रह्मसम्पत्तौ च ब्रह्माविर्भावो नत्वन्यदेति कथमेवमिति चेत् । मैवं । उपदेशभावनादिष्वपि कदाचिदुत्तमाधिकारिविषये ब्रह्मभावत्वमित्यङ्गीकर्त्तव्यम् । मय्येव सकलं जातमित्यादिवाक्यानुरोधात् इहैव समवनीयन्ते प्राणाः ब्रह्मैव सन् ब्रह्माप्येतीत्यपि आविर्भावापेक्षं तस्य च प्रायिकत्वात् न सूत्रे पक्षत्वमाह । जीवन्मुक्तानामपि परममुक्तेर्वैकल्यत्वात् च । असम्प्रज्ञातसमाधाविवाविर्भावदशायामेव शरीरवियोगे वियोजकाभावात् वागादिमात्रं लीयते तस्य च प्राप्तत्वादेव नार्च्चिरादिगतिः तथापि प्रायिकत्वात्र सूत्रगीतादिषु तद्वचनम् । सगुणनिर्गुणभेदेन नियमवचनन्त्वप्रामाणिकमेव ब्रह्मवादे । गुणानङ्गीकाराच्च । तस्माद्युक्तमुक्तं शास्त्रदृष्ट्या तूपदेश इति ।

जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्या-
दाश्रितत्वादिह तद्योगात् ॥ ३१ ॥

अन्यत् बाधकद्वयमाशङ्कते । ननु यद्यपि ब्रह्मधर्म्मा भूयांसः प्रकरणे श्रूयन्ते । तज्जीवधर्म्मा मुख्यप्राणधर्म्माश्च बाधकाः

स्ति । न वाचं विजिज्ञासीत वक्तारं विद्यादित्यादि । अत्र हि वागादिकरणाध्यक्षस्य जीवस्य विज्ञेयत्वमभिधीयते । अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयतीति शरीरधारणं मुख्यप्राणधर्मः । मा मोहमापद्यथा अहमेवैतत् पञ्चधात्मानं प्रविभज्यैतद्बाणमवष्टभ्य विधारयामीति श्रवणात् । यो वै प्राणः सा प्रज्ञाया प्रज्ञा स प्राण इति जीवमुख्यप्राणवाचकत्वे प्रज्ञाप्राणयोः सहवृत्तित्वादुपचारो युज्यते । उत्क्रान्तिश्च । नतु सर्वथापि लक्षणस्य ब्रह्मणः । तस्माज्जीवमुख्यप्राणलिङ्गयोर्विद्यमानत्वान्न ब्रह्मप्रकरणमिति चेत् । न । उपासात्रैविध्यात् । अयमर्थः । किमत्र चोद्यते । जीवमुख्यप्राणलिङ्गात् ब्रह्मधर्माणां जीवपरत्वं त्रयाणामपि स्वतन्त्रत्वं वा । लिङ्गद्वयस्यापि ब्रह्मधर्मत्वमुच्यतामिति वा । आद्यः पूर्वमेव परिहृतः । न हि ब्रह्मधर्मा अन्यपरत्वेन परिणातुं शक्या इति । द्वितीये दूषणमाह । उपासात्रैविध्यात् तथा सत्युपासनं त्रिविधं स्यात् । तच्चाक्यभेदप्रसङ्गान्न युक्तं । तृतीये तूपपत्तिरुच्यते । जीवधर्मा ब्रह्मणि न विरुध्यन्ते । आश्रितत्वात् । जीवस्यापि ब्रह्माधारत्वात् तद्धर्मा अपि भगवदाश्रिताएव । इहैत्युभयत्र सम्बन्धो ब्रह्मवादे । मुख्यप्राणे तु तद्योगात् । तेन योगस्तद्योगः तस्मात् । प्राणधर्मा भगवति न विरुध्यन्ते । प्राणस्य भगवत्सम्बन्धात् तद्धर्माणामपि भगवत्सम्बन्धात् । अथवा वक्तृत्वादयो न जीवधर्माः किन्तु ब्रह्मधर्माएव । जीवे आश्रितत्वात् भासन्ते । परात्तु तच्छ्रुतेरिति न्यायात् । प्राणेऽपि तथा । स्वाप्ययसम्पत्त्योर्जीवस्य ब्रह्माश्रितत्वं । आध्यात्मिकाधिदैविकरूप-

त्वान्न संयोगः प्राणस्य तु संयोग एव। तस्मात्सर्वे धर्म्मा ब्रह्मणि युज्यन्ते। सहोत्क्रमस्तु क्रियाज्ञानशक्त्योर्भगवदीययो-र्देहे सहैव स्थानं सहोत्क्रमणमिति भगवदधीनत्वं सर्व्वस्यापि बोध्यते। ननु प्राणस्तथानुगमादिति प्राणशब्देन ब्रह्मैव प्रति-पादितं। तत्कथं धर्म्मयोरुत्क्रमणमिति चेत्। अत्र धर्म-धर्म्मिणोरेकत्वपृथक्त्वनिर्द्देशयोर्विद्यमानत्वात्। प्राणो वा अहमस्मि प्रज्ञात्मेति अत्र क्रियाज्ञानशक्तिमान् निर्द्दिष्टः। तदन्वेकैकस्य धर्म्मप्रशंसा। यो वै प्राणः सा प्रज्ञा या प्रज्ञा स प्राण इत्युपसंहारान्तं। पुनस्तयोरेवोत्क्रमणप्रवेशाभ्यां सह ह्येतावस्मिन् शरीरे वसतः सहोत्क्रामत इत्युपक्रम्य सुषुप्तिमूर्च्छा-मरणेषु प्राणाधीनत्वं सर्व्वेषामिन्द्रियाणामुक्त्वा आशन्यव्याप्-त्यर्थं प्रज्ञयैक्यं प्रतिपाद्योपसंहरति। पुनर्ज्ञानशक्तेरुत्कर्षं वक्तुं। अथ खलु यथा प्रज्ञायामित्यारभ्य न हि प्रज्ञापेतोऽर्थः कश्चन सिद्ध्येदित्यन्तेन ज्ञानशक्त्युत्कर्षं प्रतिपाद्य धर्म्ममात्रत्वनिराकर-णाय ज्ञानशक्तिमन्तं भगवन्तं निर्द्दिशति। न हि प्रज्ञातव्य-मित्यारभ्य मन्तारं विद्यादित्यन्तेन। तदत्र ज्ञानक्रियाशक्त्यो-र्विषयभूतभूतमात्रारूपजगतो भगवदभेदं प्रतिपादयन् स एष प्रज्ञात्मानन्दोऽजरोऽमृत इति उपसंहरति ब्रह्मधर्म्मैः। अतः क्रियाज्ञानविषयरूपो भगवानेवेति प्रतिपाद्य न तावन्मात्रं ततोऽप्यधिक इत्येकोपासनैव विहिता। तस्माज्जडजीवरूपत्वात् सर्व्वात्मकं ब्रह्मैवेति महावाक्यार्थः सिद्धः॥

इति श्रीवेदव्यासमतवर्त्तिश्रीवल्लभाचार्य्यविरचिते ब्रह्मसूत्रा-णुभाष्ये प्रथमस्याध्यायस्य प्रथमः पादः।

## सर्व्वत्र प्रसिद्धोपदेशात् ॥ १ ॥

समन्वये प्रथमेऽध्याये सर्व्वेषां वेदान्तानां ब्रह्मणि समन्वयो वक्तव्यः । ततोद्गीथाद्युपासनावाक्यानां मुख्यवाक्येषु फलोपकार्य्यङ्गत्वम् । ब्रह्मवाक्यानां पुनर्निःसन्दिग्धानां समन्वयः स्वतःसिद्धः । सन्दिग्धानि द्विविधानि । शब्दतोऽर्थतश्च । तदर्थञ्चैतद्विचारितम् ब्रह्मणि व्यवहारोऽस्ति नास्ति वेति । तत्र प्रथमसूत्रएव व्यवहारः स्थापितः यतो वाचो निवर्त्तन्त इत्यादीनां विशेषेणेदमित्थतया निरूपणनिषेधनपरत्वं एवमेव कार्य्यसिद्धेः । अधीतानां ब्रह्मवाक्यानाञ्चतुर्लक्षण्या ब्रह्मपरत्वे सिद्धे श्रवणं सिद्ध्यति । श्रुतस्य कालान्तरेऽप्यसम्भावनाविपरीतभावनानिवृत्त्यर्थं पूर्व्वस्थितानामङ्गानामनपेक्षितानामुद्वापेनान्येषामपेक्षितानामावापेन तस्यैवार्थस्य निर्द्धारणे मननं भवति । ततोऽप्येवंध्यानादिसमाध्यन्तरूपनिदिध्यासनरूपमनसि सर्व्वतोनिवृत्तव्यापारे स्वयमुपलब्धनिजसुखानुभवरूपं ब्रह्म । इदमेव ब्रह्मज्ञानमिति । अतस्तादृशस्यानुभवैकवेद्यत्वादुक्तमविषयत्वं पाकभोजनतृप्तिवत् । अतः श्रवणाङ्गमीमांसायां माहात्म्यज्ञानफलायां भगवद्वाक्यानामन्यपरत्वेऽन्यवाक्यानाञ्च भगवत्परत्वे दिव्यधर्म्मादिव्यधर्म्मव्यत्यासेन वैपरीत्यं फलमापद्येत । तदर्थं दिव्यधर्म्मनिर्द्धारो द्वितीयाधिकरणे विचारितः । वेदा एव वाचका अलौकिकमेव कर्म्मेति ततः पूर्णालौकिकत्वाय विधिनिषेधमुखेनाधिकरणद्वयम् । समन्वये-ऽनतिरूपम् । तदत्र प्रथमे पादे शब्दसन्देहो निवारितो

निश्चितार्थे। तत्रापि प्रथमं प्रत्ययसन्देहो निवारितोद्वयेन। प्रकृतिसम्बन्धोऽप्यधिकरणत्रयेण। पुनरन्तिममधिकरणं संक्षेपनिराकरणाय। एवं प्रथमे पादे शब्दसन्देहो निवारितः। ये पुनः कश्चित्सगुणनिर्गुणभेदं प्रतिपादयन्ति ते स्वयमेव स्वस्य ब्रह्मजिज्ञासानधिकारं बोधयन्ति। ब्रह्मवादे सात्त्विकानामिव गुणानामनङ्गीकारात्। भौतिकगुणानामसम्बन्धार्थमेव व्याख्यारम्भः। अन्यथा सर्वस्यापि तत्कारणत्वेन तत्सम्बन्धस्य विद्यमानत्वात् अन्यनिराकरणेन तत्प्रतिपादकत्वनिर्धारकाधिकरणानां वैयर्थ्यमेव। अर्थसन्देहनिराकरणार्थं द्वितीयाद्यारम्भः। तत्रार्थो द्विविधो जीवजडात्मकः प्रत्येकसमुदायाभ्यां त्रिविधः। तत्र प्रथमं जीवपुरःसरेण सन्देहा निवार्यन्ते। इदमाम्नायते सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत अथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत मनोमयः प्राणशरीर इत्यादि तत्र वाक्योपक्रमे सर्वं खल्विदं ब्रह्मेति सर्वस्य ब्रह्मत्वं प्रतिज्ञाय तज्जलान् इति सर्वविशेषणं हेतुत्वेनोक्त्वा तत्त्वेनोपासनमुक्तं। नचायं भ्रमविधिः। वाक्यार्थे लक्षणाप्रसङ्गात्। कारणत्वेन सामान्यत एव सिद्धत्वाच्च। अतः सर्वजगतो ब्रह्मत्वेनोपासनमुक्तं। इदमेव पुराणादिषु विराट्त्वेनोपासनम्। अतः परं प्रथमवाक्यार्थे सन्देहः। क्रतुं कुर्वीतेति। क्रतुधर्मो यत्न इति यावत्। तस्य स्वरूपं मनोमयः प्राणशरीर इति उपासनाप्रकरणत्वात् उपासनैवैषा। तत्र मनोमय इति प्रमाणभूतो वेद उक्तः। प्राणशरीर इति कार्यकारणयोरभेदोपचारः। अग्रे सत्यसङ्-

त्वादिधर्म्मवचनात् किमयं विज्ञानमयो जीवो ब्रह्मत्वेनोपास्यः उत ब्रह्मैवान्तर्यामी यः पुराणेषु सूक्ष्म उक्तः । तत्र पूर्व्ववाक्ये जड़स्य जगतो ब्रह्मत्वेनोपासनस्योक्तत्वात् जीवस्यापि ब्रह्मत्वेनोपासनमेव युक्तं तत्वाहत्यैव ब्रह्मवाक्यं भवितुमर्हति विज्ञानं ब्रह्म चेद्वेदेति शाखान्तरे स्पष्टत्वात् च । तस्मात्कार्य्यकारणयोरभेदाज्जीव एव ब्रह्मत्वेनोपास्य इत्येवं प्राप्त उच्यते । सर्व्वत्र प्रसिद्धोपदेशात् ।

अथ खल्वित्यादि ब्रह्मवाक्यमेव । कुतः । सर्व्वत्र प्रसिद्धोपदेशात् । कुर्व्वीतेत्युपदेशः ननूपासना । तत्र परमशान्तस्य सर्व्वस्य जगतो ब्रह्मत्वेनोपासनया शुद्धान्तःकरणस्य सर्व्ववेदान्तप्रसिद्धब्रह्मोपदेश एव युक्तो मननरूपः न तु काचित्सिद्धस्य जीवस्योपासना । शाखान्तरे त्वये आनन्दमयस्य वक्तव्यत्वात् तथा युक्तं । नत्विह तथा । तस्मादानन्दरूपप्राणशरीररूपो वाक्यार्थः । ननु क्रतुमयः पुरुष इति यथासङ्कल्पमयिमदेहकथनात् लोकान्तरभाविफलार्थमस्योपासनैव तु युक्ता न तु ब्रह्मज्ञानस्य तादृशं फलं युक्तमित्याशङ्क्य परिहरति ।

## विवक्षितगुणोपपत्तेश्च ॥ २ ॥

विवक्षिता लोकान्तरे तादृशरूपप्राप्तिः सा प्रकृतेऽप्युपपद्यते । भगवत्स्वरूपलाभात् सारूप्यलाभाद्वा । न च व्याप्तिकत्वेऽध-मभावप्राप्यो युक्तः । सत्यसङ्कल्पादिवचनं च ब्रह्मवाक्यत्वपोषकमिति चकारार्थः । नन्वेतावतापि नैकान्ततो ब्रह्मवाक्यत्वमुपपत्तेरुभयत्रापि तुल्यत्वादित्याशङ्क्य परिहरति ।

### अनुपपत्तेस्तु न शारीरः ॥ ३ ॥

न च प्राणशरीररूपो जीवो भवति तिरोहितानन्दत्वेन निराकारत्वात्। अभ्यासेन तथात्वे त्वनुपास्यत्वमेव इदानीमेवोपासकस्यापि तथात्वात्। न च प्राणादेर्लौकिकत्वं। उपदेशानर्थक्यप्रसङ्गात्। अत आनन्दरूपप्राणशरीररूपत्वाभावात् वाक्यार्थो जीवः। पूर्वपक्षस्यात्रैव निरस्तत्वात् तुशब्दः। विज्ञानमये तु प्रमाप्रमाणविवेके न धर्मस्यैवोपासना। ननु प्राप्यता-द्यरूपफलाभिप्रायं भविष्यतीति परिहरति।

### कर्मकर्तृव्यपदेशाच्च ॥ ४ ॥

एतमितः प्रेत्याभिसंभवितास्मीति यस्य स्यादद्धा न विचिकित्सास्तीति ह स्माह शाण्डिल्य इति अग्रे फलवाक्यं एतं प्राणशरीररूपं कर्मत्वेन ध्येयत्वेन प्राप्यत्वेन च व्यपदिशति। कर्तृत्वेन च शारीरं व्यपदिशति। न च भजनीयरूपाकथने तादृशं फलं सिद्ध्यतीति चकारार्थः। अधिकरणसंपूर्णत्वद्योतकश्च।

### शब्दविशेषात् ॥ ५ ॥

इदमाम्नायते यथा व्रीहिर्यवो वा श्यामाको वा श्यामाकतण्डुलो वैवमयमन्तरात्मन् पुरुषो हिरण्मय इति। तत्र सन्देहः। हिरण्मयः पुरुषः किं जीव उत ब्रह्मेति। उपक्रमबलीयस्त्वे जीवः उपसंहारबलीयस्त्वे ब्रह्मेति। यद्येकस्यान्यपरत्वे नैकार्थता सम्भवति तद्बलीयस्त्वमिति सिद्धं पूर्वतन्त्रे। तत्र

चतुर्व्विधभूतनिरूपणार्थं जीवस्यैवारोपमात्रमस्मात्तद्धृदये प्रति-
पादकमिदं वचनं फलतो हिरण्मयत्वमिति न लेताद्याभास-
समानत्वं ब्रह्मणो युक्तमतो जीवप्रतिपादकमेवेदं वाक्यमिति
प्राप्त उच्यते। शब्दविशेषात्। हिरण्मयः पुरुषो न जीवस्य
फलमपि तत्प्राप्तेरेव फलत्वात्। नाप्ययं नियमः तस्यामेव मूर्त्तौ
लय इति। अतः शब्देनैव विशेषस्योक्तत्वात् न हिरण्मयः
पुरुषो जीवः। ननु हृदये विद्यमानत्वात् अभिमान्येव जीवो
युक्त इति चेत् तत्राह।

स्मृतेश्च ॥ ६ ॥

ईश्वरः सर्व्वभूतानां हृद्देशेऽर्ज्जुन तिष्ठति इति। ननु
सर्व्ववेदानां यन्निःश्वासत्वं तस्य भगवतो वाक्यं कथं स्मृति-
रिति। उच्यते। तं त्वौपनिषदं पुरुषं पृच्छामीति श्रुतेः केवलोप-
निषद्वेद्यं ब्रह्म न प्रमाणान्तरवेद्यं। ततस्तस्यार्ज्जुनस्य शिष्यरूपेण
प्रपन्नस्य पुष्टिभक्तत्वाभावात् भगवद्वाक्ये निर्व्विचिकित्सविश्वासा-
भावात् रथित्वेनैव व्याप्यत्वात् न तादृशाय तादृग्देश-
कालयोरुपनिषदामवक्तव्यत्वात् गुरुरूपतादृग्रूपं निःश्वसित-
वेदोक्तमजनकं कृत्वा तदर्थमपि कृत्वा भगवान् पुरुषोत्तमो
वाक्यान्युक्तवान् स्मृतिरूपाणि। ततो ब्रह्मविचारे तान्यप्युदाहृत्य
चिन्त्यन्ते। पुनश्च भगवान् तदधिकारेण अब्रह्मविद्यां निरूप्य स्व-
कृपालुतया सर्व्वगुह्यतममित्यादिना भक्तिप्रपत्ती प्रोक्तवान्।
अतोऽङ्गत्वेन पूर्व्वं सर्व्वनिर्णयाः उक्ताः इत्यध्यवसेयं। तथैवार्ज्जुन
विज्ञानात् करिष्ये वचनं तवेति। चकारात्तन्मूलभूतनिःश्वा-

मोऽप्युच्यते। व्यासस्यापि भगवत्ज्ञानांशत्वाददोषः। उपक्रमबलीयस्त्वमाशङ्क्य परिहरति॥

अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च॥ ७॥

ननु व्यापकस्येश्वरस्य हृदयदेशस्थितिरयुक्ता व्रीह्यादिरूपत्वञ्च। अतः अर्भकमल्पकम्ओकः हृदयस्थानं यस्य तत्त्वात् व्रीह्यादितुल्यत्वाच्च न परमात्मा वाक्यार्थ इति चेत्। न। निचाय्यत्वात्। पूर्वं प्रथमदूषणं परिहरति। हृदयौ ज्ञातुं शक्यत इति तदायतनत्वेन प्रतिपाद्यते। निदिध्यासनानन्तरं हि साक्षात्कारः तदन्तःकरण एवेति निचाय्यत्वं भक्तौ तु बहिरपीति विशेषः। द्वितीयं परिहरति। एवं व्योमवत्। एवं व्रीह्यादितुल्यतया यत् प्रतिपादनं चतुर्विधभूतान्तरत्वख्यापनाय यथा चत्वार उपरवाः प्रादेशमात्रा इति तथा तत्हृदयाकाशे प्रकटस्य सच्चिदानन्दस्वरूपसर्वतःपाणिपादान्तस्य तत्स्वरूपमिति। पूर्वपक्षसिद्धान्तयोश्चकारद्वयमेतादृगवाक्यान्तरे पूर्वपक्षसिद्धान्तयोराधिक्योपपत्तिसमुच्चयार्थं तेनातएव प्राण इतियदधिकरणान्तरमपि सूचितमिति।

सम्भोगप्राप्तिरिति चेन्न वैशेष्यात्॥ ८॥

बाधकमाशङ्क्य परिहरति। यदि सर्वेषां हृदये भगवान् जीववत्तिष्ठेत तदा जीवस्येव तस्यापि सुखदुःखसाक्षात्कार-

---

* क पुस्तके चल्पकमिति नास्ति।

† "हृदय इत्यारभ्य तदन्तःकरण एवेति इत्यन्तं क पुस्तके नास्त्येव।

सत्साधनादिपरिग्रहश्च प्राप्नोतीति चेत् । न । वैशेष्यात् । विशेषस्य भावो वैशेष्यं तस्मात् । सर्व्वरूपत्वमानन्दरूपत्वं स्वकर्तृत्वं विशेषसद्भावो ब्रह्मणि वर्त्तते न जीवे इति जीवस्यैव भोगी न ब्रह्मण इति । वैशेष्यपदाद्‌यमर्थः सूचितः । अपेक्षित एव भोगो नानपेक्षित इति । नतु तस्य भोगाभाव एवाग्रिमाधिकरणविरोधात् । यथेन्द्रियाधिष्ठातृदेवतानां । तत्त्वमस्यादिवाक्येन जीवस्यापि तथात्वे तस्यापि तद्वदेव भविष्यति ।

## अत्ता चराचरग्रहणात् ॥ ९ ॥

कठवल्लीषु पठ्यते । यस्य ब्रह्म च क्षत्रञ्चोभे भवत ओदनं । मृत्युर्यस्योपसेचनं क इत्था वेद यत्र स इति । अत्र वाक्ये ब्रह्मक्षत्रयोरोदनत्वं वदन् यच्छब्दार्थस्य भोक्तृत्वमाह । तत्र संशयः । किं जीवो ब्रह्मवेति । सच्चिदानन्दरूपत्वं सर्व्वोपास्यत्वं पूर्व्वाधिकरणद्वयेन सिद्धं । सर्व्वभोक्तृत्वं साधयति । ब्रह्मक्षत्रयोरभक्ष्यवध्ययोः सर्व्वमारकस्य च मृत्योर्भक्षयित्वा जीवो न भवत्येवेति कथं सन्देह इति चेत् । उच्यते । ओदनोपसेचनरूपकत्वात् जीवधर्मत्वं स्थानाग्रानाच । न हि सर्व्वगतस्य स्वहृदयेऽपि प्रतिभासमानस्य क इत्था वेद यत्र स इत्यज्ञानमुपपद्येत । अलौकिकसामर्थ्याच्च सन्देहः । तत्र निषिद्धत्वाल्लौकिकभोजनवन्निरूप्यमाणत्वात् स्थानाग्रानाच कश्चिदुपासनोपचितालौकिकसामर्थ्यो महादेवादिरत्ता भविष्यति । नतु तद्विरुद्धधर्म्मा भगवान् भवितुमर्हति अक्लिष्टकर्म्मत्वादिधर्म्मवान् । तस्माज्जीव एवोपासनोपचितमहाप्रभावो वाक्यार्थ इत्येवं प्राप्तेऽभिधीयते ।

अत्ता चराचरग्रहणात्। अत्ता भगवानेव। कुतः। चराचर-ग्रहणात्। चरं सर्व्वप्राणिवधार्थं परिभ्रमन्मृत्युः। अचरं ब्रह्म-क्षत्ररूपं कल्पाप्यचाल्यं तयोरत्ता न जीवो भवितुमर्हति यत्राप्यतिशयो दृष्टः स स्वार्थानतिलङ्घनादिति न्यायात्। अस्मदादिप्रतिपत्त्यर्थं तु लौकिकवद्वचनभोक्तृत्वाय। प्रलय-कार्हत्वान्नायुक्तत्वं। सर्व्वत्रविद्यमानस्याप्यज्ञायमानत्वात् फलतः स्थानाज्ञानमुक्तं। ब्रह्मक्षत्रयोरपि मोक्षापेक्षितत्वात् मृत्युसम्बन्ध-मात्रेण भगवति भोक्तरि प्रवेशार्थं योग्यरूपमेवौदनत्वं प्राणानां तत्रैव समवलयान्मृत्युरपि तत्रैव लीनोऽग्रे जन्ममरणाद्यभावाय भगवत्येव प्रविशति। तस्मादस्मिन् वाक्ये ब्रह्मक्षत्रमृत्यूनां भोग्यत्वेन ग्रहणादत्ता भगवानेवेति सिद्धं। ननु किमित्येवं प्रतिपाद्यते। पूर्व्वपक्षन्यायेन यमोऽन्योवा मृत्युं साधनीकृत्य स्ववशे सर्व्वं करोतीति जीववाक्यमेव किं न स्यादित्यत आह।

प्रकरणाच्च ॥ १० ॥

प्रकरणं चेदं ब्रह्मणः न जायत इत्यारभ्यासीनो दूरं व्रजती-त्यादिना माहात्म्यं वदन्नन्ते च ब्रह्मचर्यं चेत्याह। अतः प्रक-रणानुरोधात् पूर्व्वोक्तप्रकारेण ब्रह्मवाक्यत्वमिति। अन्यथा प्रकृत-हानाप्रकृतकल्पने स्यातामिति चकारार्थः।

गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥ ११ ॥

तत्रैवाग्रे पठ्यते। ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ 'परमे परार्द्धे। छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेता इति। किमिदं ब्रह्मवाक्यमाहोस्विदन्यवाक्य-

मिति। अस्य वाक्यस्योत्तरशेषत्वे जीवप्रकरणपठितत्वात् न ब्रह्म-वाक्यत्वं । पूर्व्वशेषत्वे तु ब्रह्मवाक्यमिति हि प्रकरणनिर्णयः । मध्ये पाठादेवं सन्देहः। अर्थविचारे तु द्विवचननिर्देशात् पूर्व्वशेषत्वे बद्धमुक्तजीवौ भविष्यतः। उत्तरशेषत्वे त्विन्द्रियमनसी। उभयथापि न ब्रह्मवाक्यं। द्वयोर्मुख्यत्वेन प्रतिपादनात्। ब्रह्मवाक्यत्वेऽपि न प्रयोजनसिद्धिः। अथ मन्यते उपनिषत्पाठाद्व्यचानिर्धाराज्जीवब्रह्मपरत्वेऽपि तयोरभेदात् ब्रह्मपरतैव वाक्यस्य युक्तेति। तथापि कस्य निर्णायकत्वं प्रकरणस्यार्थस्य वेति। उभयोरपि सन्दिग्धत्वादयुक्तो विचार इति चेत् । उच्यते ।

सन्देहवारकं शास्त्रं पदशक्त्या तु निर्णयः।
जीवादुत्कर्षशब्देन द्वयोर्वाक्येऽपि न क्षतिः ।

गुहातपशब्दाभ्यामित्यर्थः। ऋतं पिबन्तावित्यत्रैवं संशयः। किञ्जीवद्वयं निरूपयति आहोस्विज्जीवब्रह्मणी वेति। तत्र ब्रह्मप्रकरणस्य सामान्यत्वात् यस्त्वविज्ञानवान् भवतीत्यत्र विद्वदविद्वतोर्वक्तव्यत्वात् तदर्थमुभयोः प्रथमनिर्देश उचितः। मन्त्रेऽपि ऋतं स्वर्गापवर्गलक्षणं सुखं। मार्गद्वयस्यापि विहितत्वात् सुकृतलोकत्वम्। गुहा तत्त्वविचारो हृदयं वा। जात्यपेक्षया त्रिकवचनम्। परमपरार्द्धं सत्यलोकः। तत्रोभयोर्भोगात्। अविद्यया पिहितप्रकाशत्वात् अविदुषः छायात्वं। ब्रह्मज्ञानेनातिप्रकाशत्वादातपत्वं विदुषः। अतएव विदुषः स्वरूपं ब्रह्मविदो वदन्ति। पञ्चाग्नयः त्रिणाचिकेतायेतरम्। इन्द्रियमनसोस्त्वचेतनत्वात् न वाक्यार्थसङ्गतिः। वाक्यार्थयोगे हि विशेषणनिर्णयः। तस्मादद्बमुक्तजीवपरतयोपपन्नत्वात्तत्प्रकरणपाठाच

ब्रह्मवाक्यमिति। एवं प्राप्त उच्यते। गुहां प्रविष्टावात्मानौ। गुहा हृदयाकाशः तत्र सहैकस्मिन् प्रविष्टौ जीवपरमात्मानावेव। अनेन जीवेनात्मनानुप्रविश्येत्युभयोः प्रवेशश्रवणात्। न ह्येतस्मिन् हृदयाकाशे जीवद्वयं प्रवेष्टुमर्हति। अर्थस्त्वेवं सम्पत्ति। पूर्वाधिकरणे यथाभिलषितभोगो भगवति साधितः। प्रकारान्तरेणापि ऋतं सत्यं परं ब्रह्मेति ऋतसत्ययोर्ब्रह्मत्वप्रतिपादनात् स्वरूपामृतपानारौ। सुकृतमपि ब्रह्मैव तस्मात्तत् सुकृतमुच्यत इति श्रुतेः। स एव लोक उपचारात् षष्ठी। अक्षरं वा परमपरार्द्धोपरि तत्स्थानां परिदृश्यमानत्वात्। छायाप्रतिसारूप्यं सायुज्यङ्गतस्य जीवस्यापि तथात्वात्ततोऽपि विशिष्टं ब्रह्म प्रकटानन्दत्वात् आतपः परोक्षवादः वाक्यत्रयेऽपि तद्वाद इति चयाणां ग्रहणं। अतो युक्तपवाक्यमिति छिन्नद्रार्थः। नन्वप्रकृतत्वात् कथमेवमिति तत्राह। तद्दर्शनात्। तयोर्दर्शनं तद्दर्शनं तस्मात्। जीवब्रह्मणोः प्रतिपादनीयत्वात्। येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नायमस्तीति चैके एतद्विद्यामनुशिष्टस्त्वयाहमिति जीवः पृष्टः। अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात् कृताकृतात् अन्यत्र भूतात् भव्याच्च यत्तत् पश्यसि तद्वदेति ब्रह्मापि पृष्टं। तत्र ब्रह्म निरूप्य जीवन्निरूपयन् उभयोस्तुल्येन सङ्गाभोगं निरूपयन् फलार्थं मध्ये स्वरूपं कीर्त्तयति। अतो ब्रह्मवाक्यमेवेति सिद्धम्।

विशेषणाच्च॥ १२॥

विशेषणानि पूर्वोक्तानि। जीवब्रह्मणोरेव सङ्गतानि। अपिमं वाक्यमात्मानं रथिनं विद्धि सोऽध्वनः पारमाप्नोति

तद्विष्णोः परमं पदमिति । जीवमाद्यं ब्रह्माह । अत उभयोरेव सर्व्वव्याहृत्या कथनाद्विभयग्रन्थपर्य्यालोचनयापीदं ब्रह्मवाक्यमेव । द्वा सुपर्णेति निःसन्दिग्धं । चकारः प्रकरणोक्तसर्व्वोपपत्तिसमुच्चयार्थः ।

## अन्तर उपपत्तेः ॥ १३ ॥

य एषोऽक्षिणि पुरुषो दृश्यते । एष आत्मेति होवाचैतदमृतमभयमेतत् ब्रह्मेति । तद्यद्यप्यस्मिन् सर्पिर्वोदकं वा सिञ्चति वर्त्मनी एव गच्छतीत्यादि श्रूयते । तत्र संशयः । प्रतिबिम्बपुरुषस्य ब्रह्मत्वेनोपासनापरमिदं वाक्यं ब्रह्मवाक्यमेवेति वा । विरुद्धार्थवाचकत्वात् सन्देहः । तत्र दृश्यत इति वचनात् प्रतिबिम्बएवार्थं ब्रह्मप्रकरणस्य च समाप्तत्वादेषा तेऽग्निविद्या आत्मविद्या चेत्युपसंहारदर्शनात् तत्सिद्धार्थमुपासनापरतैव वाक्यस्य युक्ता । अविरोधे हि ब्रह्मपरता । उपास्यत्वेन ब्रह्मधर्म्माणामन्वयो भविष्यतीत्येवं प्राप्त उच्यते । अन्तरः अक्षिमध्ये दृश्यत इत्युक्तः परमात्मैव । कुतः उपपत्तेः । उपपद्यते हि तस्य दर्शनमार्यम् । सर्व्वत्र ब्रह्म पश्यन् बहिः सन्निधाने तस्य स्थानस्योत्कृष्टत्वात् तत्र भगवन्तमुपदिशति लोकं वाव तेऽवोचन्नहन्तु ते तद्वक्ष्यामीति महदुपक्रमाच्च । प्रतिबिम्बमात्रस्य च न पुरुषत्वनियमः । तस्माद्विरोधाभावात् ब्रह्मवाक्यमेव ।

## स्थानादिव्यपदेशाच्च ॥ १४ ॥

एतं संयद्वाम इत्याचक्षत एतं हि सर्व्वाणि वामान्यभिसंयन्ति । एष उ एव वामनीरेष हि सर्व्वाणि वामानि नयति

एष उ एव भामनीरेष हि सर्व्वेषु लोकेषु भातीति। वामानि कर्म्मफलानि तेषामेव मनोहरत्वेन तदर्थं कर्म्मकरणात्। कर्म्मफलनयः कर्म्मफलदानञ्च यत इति स्वर्गापवर्गफलदातृत्व-मुक्तं। सर्व्वलोकेषु भानञ्च। एष इति तमेवाक्षिपुरुषं निर्द्दिश्य स्थानादि व्यपदिश्यते। न हि प्रतिबिम्बात्मनः स्थानादि-व्यपदेशः सम्भवति। चकारादेतत्तुल्यवाक्यस्याप्ययमेवार्थः। इन्द्रविरोचनप्रजापतिसंवादे। अथ योऽयं भगवोऽप्सु परिख्यायत इत्यासुरं। ननु य एषोऽक्षिणि पुरुषो दृश्यत इत्यादि। तस्मा-दक्षिपुरुषो ब्रह्मैव।

## सुखविशिष्टाभिधानादेव च ॥ १५ ॥

ननु किमिति निर्बन्धेन ब्रह्मवाक्यत्वं सम्पाद्यते। उपासना-परत्वे को दोष इत्याशङ्क्याह। सुखविशिष्टाभिधानात्। एतद-मृतमभयमेतत् ब्रह्मेति यद्यक्षोपासना विधीयेत एष आत्मेति तदा अमृतादिवचनं व्यर्थं स्यात्। तद्धर्माणां पूर्व्वमेव प्राप्त-त्वात्। तस्मादमृतमानन्दः अभयं चित् ब्रह्म सत् सच्चिदानन्द-रूपमात्मत्वकं भवति। अत एष इति अक्षिपुरुषं निर्द्दिश्य सुखविशिष्टमभिधीयते। सच्चितोर्न ब्रह्मव्यापकत्वमिति सुखमेव निर्द्दिष्टं। अतः सुखविशिष्टाभिधानादेव ब्रह्मवाक्यमिति। एषा मुख्योपपत्तिरित्येवकारः। चकारात् सदादिभिरपि तस्मात् ब्रह्मैवाक्षिपुरुषः।

## श्रुतोपनिषत्कगत्यभिधानाच्च ॥ १६ ॥

स्वरूपतो निर्णीय फलतो निर्णयमाह। श्रुतोपनिषत्कस्य श्रुता उपनिषत्विद्या येन तस्य प्रविदो या गतिः देवयानाख्या

माचिपुरुषविदोऽप्युच्यते। अथ यदु वै वास्मिन् शव्यं कर्म कुर्वन्ति यदि च नार्चिषमेवाभियंतीत्युपक्रम्य चन्द्रमसो विद्युतं तत्पुरुषो मानवः स एतान् ब्रह्म गमयति। एष देवपथो ब्रह्मपथ इत्येतेन प्रतिपद्यमाना इमं मानवमावर्त्तं नावर्त्तन्त] इति ब्रह्मविदोऽप्येषएव मार्गः पुनरावृत्तिरहितः। चकारस्सूत्रसमुच्चयेनाधिकरणपूर्णत्वबोधकः।

अनवस्थितेरसम्भवाच्च नेतरः॥ १७॥

इदमेवाधिकरणं पुनर्निषेधमुखेन विचारयति। ननूपासनापरत्वेऽपि सर्व्वमुपपद्यते। तद्धर्म्मव्यपदेशेनैवोपासनोपपत्तेः। अतः सर्व्वा उपपत्तयो व्यपदेश्यवद्भावेन सङ्गच्छन्त इत्येवं प्राप्त उच्यते। इतरो नाय वाक्यार्थः। अनवस्थितेः अस्थिरत्वात्। उपदेशकवाक्यत्वादुपदेष्टुरेव चक्षुर्गतं भवेत्। तथाच वक्तुर्द्दर्शनाभावात् अनागतं द्रष्टुरपगमे चापगच्छति सद्वितीये सद्वितीयः उपासनाकाले च सुतरामनवस्थितिः। सद्वितीयोपासनायामपि श्रवणमननयोर्भिन्नविषयत्वादनवस्थितिः। वक्तुरेव नियमे गुरोर्निर्ग्गमेन सुतरामनवस्थितिः। किञ्च। मनसा ह्युपासनं कर्त्तव्यं तत्र चासम्भव एव। तादृगधर्म्मवत्त्वं च न सम्भवति। भासरत्वं च भवेदिति चकारार्थः। तस्मादक्षिस्थाने सहजएव यो भगवानस्ति तत्परस्यैतद्वाक्यमिति सिद्धं। व्यापकस्सर्व्वगतस्य सर्व्वतःपाणिपादान्तत्वादानन्दमूर्त्तिर्भगवानेव ब्रह्मवादे स्वैव मर्यादा। सगुणवादो ब्रह्मवादाभानादिति।

## अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॥ १८ ॥

य इमञ्च लोकं परञ्च लोकं सर्व्वाणि च भूतान्यन्तरो यमयतीत्युपक्रम्य श्रूयते यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्मान्तर्याम्यमृत इत्यादि। तथाधिदैवमधिलोकमधिवेदमधियज्ञमधिभूतमध्यात्मञ्च कश्चिदन्तरवस्थितो यमयितान्तर्यामीति श्रूयते। तत्र संशयः। किमन्तर्याम्यधिदैवादिषु सर्व्वत्रैक एव अथाधिदैवादीनां भेदाद्भिन्न इति। सामान्यतस्त्वन्तस्तद्धर्मोपदेशादिति न्यायेनात्रापि ब्रह्मत्वं सिद्धमेव। तथा शब्दभेदात् सन्दिह्यते अधिदैवादिषड्भेदा आधारधर्म्मा भगवत्युपचर्य्यन्ते अथवा संज्ञाविशिष्टा अन्यएवेति। तत्र तत्तदधिकृत्य यो वर्त्तते अभिमानेन तस्य तादृशशब्दप्रयोगः। अधिलोकादयश्च शाखान्तरेऽन्यत्रैव प्रसिद्धाः योगव्यापकाः पञ्चस्वधिकरणेषु। अधिलोकमधिज्यौतिषमित्यादि। अतोऽधिदैविकादिशब्दा यौगिकाः सन्तो न भगवति वर्त्तितुमुत्सहन्ते। नाप्यन्ये कल्पनीया यद्धर्म्मा उपचाराद्भगवति भवेयुः। कल्प्यमानस्य सर्व्वानुस्यूतस्य तादृशस्य भगवद्व्यतिरिक्तस्यासम्भवात्। तस्मादन्तर्याम्यभिमान्यर्थं कुत्राप्ययुक्तं सत् तत्तदभिमानिदेवतास्तुतिपरमेव तत्तदुपासनार्थं भविष्यति। अज्ञातज्ञापकत्वासन्देहे सन्देहवदुपपद्यते। ९ देहासवोक्ता इति न्यायाद्वा। ननु निषिद्धसंज्ञा भगवति कल्पयितुं अशक्येति एवं प्राप्त उच्यते। अन्तर्याम्यधिदैवादिषु। अन्तर्यामी अधिदैवादिषु भगवानेव नान्यस्तादृशो भवितुमर्हति। ननु चोक्तं भगवति कथं निषिद्धकल्पनमिति

तत्राह। तद्धर्म्मव्यपदेशात्। तेषां धर्म्माः तद्धर्म्माः तत्प्रयुक्ति-बोधकाः ते विशेषेण भगवत्यपदिश्यन्ते। सर्व्वेषां तत्तत्कार्य्य-सामर्थ्यञ्च भगवतो न तु स्वतस्तेषामिति। एवं सत्यन्यत्सर्व्वं सङ्गतं भवति तस्माद्ब्रह्मवाक्यमेव। अन्यथात्वधिकरणरचना व्यर्थास्तद्धर्म्माधिकरणेन गतार्थत्वादयुक्तैव॥

## न च स्मार्त्तमतद्धर्म्माभिलापात्॥ १९॥

ननु ब्रह्मवादे अन्तर्यामी न प्रसिद्धः जीवब्रह्मजडानामेव प्रसिद्धत्वात्। अतोऽन्तर्यामिणः साङ्ख्यपरिकल्पितस्य गुणयोगा-त्तादृशस्य ब्रह्मत्वे वा कः पुरुषार्थो भवेत्। नहीश्वरं प्रकृतिधर्म्मा-रूढमन्तर्यामिणं मन्यन्ते तादृशस्योपनिषत्स्वभावात्पूर्व्वपक्षन्या-येन स्मृतिपरता तत्रतस्य चाप्रौतत्वमित्याशङ्क्य परिहरति। नच स्मार्त्तं स्मृतिप्रसिद्धं स्मार्त्तं साङ्ख्यमतसिद्धमिति यावत्। तादृग-न्तर्यामिरूपमत्र भवितुं नार्हति। कुतः। अतद्धर्म्माभिला-पात्। तद्धर्म्माणामनभिलापात्। तद्विरुद्धधर्म्माणां चाभिलापात् नह्यत्र सत्त्वरजस्तमोगुणास्तत्कार्य्यं वा अभिलप्यते तद्विरुद्धाश्चैते धर्म्मा यस्य पृथिवी शरीरमित्यादि। तस्मात् सांख्यपरिकल्पितं नान्तर्यामिरूपमत्र भवितुमर्हतीति सिद्धं। एवं सति ब्रह्मधर्म्मा एवैते भवन्तीति ब्रह्मवादः फलिष्यति॥

## शारीरश्चोभयेऽपि हि भेदेनैनमधीयते॥ २०॥

ननूक्तन्यायेन शारीर एव भवतु को दोषः। किमिति ब्रह्मपरत्वं कल्प्यमिति। तत्राह। शारीरश्च नेत्यनुवर्त्तते। शारीरश्च जीवो

न्तर्यामिब्राह्मणे तत्तदभिमानिरूपो यस्य पृथिवी शरीरमिति वाक्यानुरोधेन भवितुमर्हति। ततोऽपि भिन्नतयान्तर्यामिणो-वचनात्। उभयेऽपि काण्वमाध्यंदिनब्राह्मणद्वयेऽपि एनज्जीवं भेदेनैवाधीयन्ते ब्राह्मणाः। निःसन्देहार्थमुभयग्रहणं यो विज्ञाने तिष्ठन्निति काण्वाः य आत्मनि तिष्ठन्निति माध्यन्दिनाः। न चात्मशब्देनान्यः सम्भवति। अन्येषां पूर्व्वमेव पठितत्वात् अन्ते हि जीवमाह। तस्मादन्तर्यामिब्राह्मणे ब्रह्मैव वाक्यार्थ इति सिद्धं।

## अदृश्यत्वादिगुणकोधर्म्मोक्तेः॥ २१॥

मुण्डके हि श्रूयते कस्मिन्नु भगवो विज्ञात इति पृष्टे द्वे विद्ये वेदितव्ये इत्युत्तरमाह। तत्र नामरूपात्मकजगतो विज्ञानार्थं नामांशे वेदादिः रूपांशे परा च। तत्र वेदादिविद्यायां न सन्देहः। परायां सन्दिह्यते किमेषा साङ्ख्यमतविद्या ब्रह्मविद्या वेति। सांख्यधर्म्माभिलापात् सन्देहः। अथ परा यया तद-क्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तद-पाणिपादं नित्यं विभुं सर्व्वगतं सुसूक्ष्मं तदव्ययं। यद्भूतयोनिं परिपश्यन्ति धीरा इत्यादि अग्रे च दिव्योह्यमूर्त्तः पुरुषः सवाह्याभ्यन्तरोह्यजः। अप्राणोह्यमनाः शुभ्रोह्यक्षरात् परतः पर इति उक्ता एतस्माज्जायत इति निरूप्य अग्निर्मूर्द्धा चक्षुषी चन्द्र-सूर्य्यौ इत्यादिना रूपमुक्ता पुनः पुरुषात् सृष्टिमाह। तत्रैक-प्रकरणत्वादेकवाक्यता वक्तव्या। तत्राक्षरपुरुषयोर्भेदः प्रती-यते। तयोरुभयोरपि सृष्टिः। तद्ब्रह्मवादे न सङ्गच्छते।

तस्मात्ताहृगमतमेवैतत्प्रकृतिपुरुषयोः श्लिष्टत्वादन्यतरप्राधान्येनो-भयोः स्रष्टृत्वं उभयात्मकत्वात् जगतः। रूपमपि समष्टिव्यष्टी-नामप्ये सृष्टिरिति तिरोहितरूपत्वान्न ब्रह्मविद्या किन्तु स्मृतिरेवेति। ब्रह्मविद्या वेदविद्या उपचारादेति। एवं प्राप्त उच्यते। अदृश्यत्वादिगुणकः परमात्मैव ब्रह्मविज्ञानेनैव सर्व्व-विज्ञानात्। ततएव विद्याया अपि परत्वम्। अक्षरस्यापि ब्रह्मत्वम् पुरुषस्यापि तयोः परापरभावः अभेदश्च एतादृश एव ब्रह्मवादः। तत्र प्रथममक्षरस्य ब्रह्मत्वमाह। अदृश्यत्वादि-गुणकः परमात्मैव। कुतः। धर्मोक्तेः तथाक्षरात्संभवतीह विश्व-मिति। इयं चोपनिषत् नह्यत्र ब्रह्मव्यतिरिक्ताज्जगदुत्पत्ति-रस्ति। पुरुषस्य ब्रह्मत्वं निःसन्दिग्धमेव ईषदानन्दतिरोभावेन ब्रह्माक्षरमुच्यते। प्रकटानन्दः पुरुष इति ब्रह्मविदाप्नोति पर-मित्यत्रैव तथा निर्णयात्। तस्माददृश्यत्वादिगुणकः पर-मात्मैव।

## विशेषणभेदव्यपदेशाभ्याञ्च नेतरौ ॥ २२ ॥

ननु पूर्व्वपक्षन्यायेन ब्रह्मविद्याख्यायामपि स्मृतिः ब्रह्म-विद्येयमस्तु द्वे ब्रह्मणी वेदितव्ये मूर्त्तं चामूर्त्तं चेत्यत्र विकार-स्यैव ब्रह्मपदवाच्यत्वम्। अतः प्रकृतिपुरुषावेव वाक्यार्थ इति परिहरति। इतरौ न भवतो वाक्यार्थरूपौ। कुतः। विशे-षणभेदव्यपदेशाभ्यां। विशेषणभेदः व्यपदेशश्च ताभ्यां अदृश्यत्वा-दयो गुणा न प्रकृतेर्भवन्ति सर्व्वस्यापि तद्विकारत्वात्। न हि घटदर्शनेन मृत् न दृश्यत इति वदितुं शक्यम्। ब्रह्मवादे पुन-

सर्व्वभवनसमर्थत्वात् ब्रह्मणि विरोधाभावः। न हि नित्य-सदेकरूपम् विक्रियमाणञ्च भवितुमर्हति। सर्व्वब्रह्मधर्मतुल्यत्वे तदेव ब्रह्मेति जितं ब्रह्मवादिभिः। यः सर्व्वज्ञः सर्व्वविदित्या-दयस्तु सुतरामेव न प्रकृतिधर्म्माः। व्यवधानाच्च न पुरुषसम्बन्धः। अक्षरनिरूपणएव पुरुषविशेषणाच्च। येनाक्षरं पुरुषं वेद सत्य-मिति तस्मादक्षरविशेषणानि न प्रकृतिविशेषणानि नापि पुरुषविशेषणानि सांख्यपुरुषस्य। न हि दिव्यत्वादयो गुणाः पुरुषस्य भवन्ति। न हि तन्मते पुरुषभेदोऽङ्गीक्रियते। जीव-ब्रह्मवत्। न च तस्य वाह्याभ्यन्तरत्वं सर्व्वत्वाभावात्। न हि तस्माज्जायते प्राणादिः। तस्मात् पुरुषविशेषणान्यपि न सांख्यपुरुषविशेषणानि।. अतो विशेषणभेदः व्यपदेशिभेदश्च ब्रह्मविद्यैवैषेति स ब्रह्मविद्यां सर्व्वविद्याप्रतिष्ठामित्युपक्रमे प्रोवाच *तां तत्त्वतो ब्रह्मविद्यामिति मध्ये तेभ्यस्तामेव तां ब्रह्मविद्या-*म्पुरेत्यन्ते। तस्माच्च सांख्यपरिकल्पितौ प्रकृतिपुरुषौ वाक्यार्थः। न हि ब्रह्मा ज्येष्ठपुत्राय स्मृतिरूपां विद्यां वदति इति चकारार्थः।

रूपोपन्यासाच्च ॥ २३ ॥

अग्निर्मूर्द्धा चक्षुषीत्यादिरूपं न हि प्रकृतिपुरुषयोरन्यतरस्य सम्भवति। ब्रह्मवादे पुनर्विराडाकारस्यैतत् रूपम्। सूत्रविभागात् पुनर्मुख्योपपत्तिरेषेति सूचितम्। चकारेण श्रुत्यन्तरविरोध एकवाक्यता च सर्व्वेषां वेदान्तानामिति। तस्मादक्षरशब्देन पुरुषशब्देन च ब्रह्मैव प्रोक्तमिति। ब्रह्मविद्यैवैषेति सिद्धं।

वैश्वानरः साधारणशब्दविशेषात् ॥ २४ ॥

अधिकरणत्रयेण भोगमुपपाद्य पूर्वाधिकरणे अदृश्यत्वादि-
गुणानुक्त्वा प्रसङ्गात् रूपमुपन्यस्तं। अधुना साकारब्रह्मतामुप-
पादयितुमिदमधिकरणमारभते। को न आत्मा किं ब्रह्मेति
आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषितमेव नो ब्रूहीति चोपक्रम्य
द्युसूर्यवाय्वाकाशवारिपृथिवीनां सुतेजस्त्वादिगुणयोगमेकैकोपा-
सननिन्दया च मूर्द्धादिभावमुपदिश्याम्नायते यस्त्वेतमेवं प्रादेश-
मात्रमभिविमानं वैश्वानरमुपास्ते स सर्व्वेषु लोकेषु सर्व्वेषु भूतेषु
सर्व्वेष्वात्मस्वन्नमत्ति तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्द्धैव
सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मात्मा सन्देहो बहुलो बस्तिरेव
रयिः पृथिव्येव पादावुर एव वेदिर्लोमानि बर्हिर्हृदयङ्गार्ह-
पत्यो मनोऽन्वाहार्य्यं पचनमास्यमाहवनीय इत्यादि। तत्र संशयः।
किं वैश्वानरशब्देन ब्रह्म प्रतिपादयितुं शक्यते न वेति। अर्थस्या-
तिसन्दिग्धत्वात्सन्देहः। तत्रोपक्रमे ब्रह्मात्मपदप्रयोगोऽस्ति नान्यत्
किञ्चिदुपपादनेनत्वतद्धर्म्माएव। साकारस्य तु लौकन्यायेना-
ब्रह्मत्वं। वैश्वानरो यद्यप्यग्नावेव प्रसिद्धः तथापि पूर्व्वकाण्डसिद्धत्वा-
द्देवतात्मपरिग्रहो युक्तः। ततश्च संवत्सरो वा अग्निर्वैश्वानर इति
श्रुतिः। संवत्सरस्य प्रजापतित्वाच्च हिरण्यगर्भोपासनापरमिद-
मिति गम्यते। ब्रह्मात्मशब्दावपि हि तत्रैव युक्ततरौ। तदुपासक-
स्यैवान्नभोजनत्वमपि सर्व्वत्र युक्तम्। प्रादेशमात्रत्वमपि सुत्रुजौ-
यत्वादरुदाद्यपेक्षया सूक्ष्मत्वाभिप्रायम्। विराड्भिमानित्वाच्च
लोकावयवत्वं। वेदगर्भत्वादग्नित्रयात्मकत्वमिति। तस्माद्धिरण्य-
गर्भोपासनापरमेवैतद्वाक्यं न भगवदुपासनापरमित्येवं प्राप्ते

रुच्यते। वैश्वानरः परमात्मैव। कुतः। साधारणशब्दविशेषात्। साधारणशब्दात् विशेषः। ये पूर्व्वपक्षे साधारणशब्दा हिरण्यगर्भपरतया ततोऽपि विशेषोऽस्ति येन भगवानेव वैश्वानरो भवति। प्रादेशमात्रस्यैव द्युमूर्द्धत्वादिधर्म्मः। न हि विरुद्धधर्म्माश्रयत्वं भगवद्व्यतिरिक्ते सम्भवति। सर्व्वभवनसामर्थ्याभावात्। साधारणात् धर्म्मात् शब्दएव विशेष इति वा। विशेषादित्येव वक्तव्ये साधारणशब्दशब्दो प्रादेशमात्रस्यैव वैश्वानरशब्दवाच्यत्वं द्युमूर्द्धत्वादिकत्वस्यैवेति समासेन द्योत्यतः। अन्यथाविरोधाभावात्। यदपि लोकात्मकं सूक्ष्मं रूपं तदपि भगवतएव न हिरण्यगर्भस्येति। पुरुषत्वात्तस्य। विश्वस्य जड़स्य नरस्य जीवस्य च भगवदंशत्वेन देवतात्वाद्देवतादंद्वेदेति विश्वानरो तौ निवासो यस्येति तस्य निवास इत्यण्। तेन परमेश्वरएव वैश्वानरो भवति नान्यः। भगवदंशत्वादन्यत्रोपचारात् प्रयोगः। तस्माद्वैश्वानरः परमात्मा॥

स्मर्य्यमाणमनुमानं स्यादिति॥ २५॥

व्याख्यानेन भगवत्परत्वात् वाक्यस्य प्रमाणान्तरमाह।
केचित् स्वदेहे हृदयावकाशे प्रादेशमात्रं पुरुषं वसन्तं।
चतुर्भुजं कञ्जरथाङ्गशङ्खगदाधरं धारणया स्मरंतीति। /

स्मर्य्यमाणं रूपमनुमानं स्यात्। प्रादेशमात्रवैश्वानरस्य ब्रह्मत्वे। स्मरणं हि मननं श्रुतस्य भवति। श्रुतिवाक्येभ्य एव हि-श्रवणं यदि प्रादेशमात्रवैश्वानरप्रतिपादकजातीयानां ब्रह्मवाक्यत्वं स्यात् तदा स्मरणं नोपपद्येत। अत इति हेतोः प्रादेशमात्रवैश्वानरो भगवानेवेति सिद्धं।

**शब्दादिभ्योऽन्तःप्रतिष्ठानान्नेति चेन्न तथा दृष्ट्युपदेशा-दसम्भवात् पुरुषमपि चैनमधीयते ॥ २६ ॥**

किञ्चिदाशङ्का परिहरति । ननु यदि स्मर्यमाणमनुमानं स्यादिति वाक्यार्थो निर्णीयते तदा स्मृत्यन्तरेणान्यथापि व्याख्येयम् ।

अहं वैश्वानरो भूत्वा प्राणिनान्देहमाश्रितः ।

प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधं ॥ इति

जाठरएवाग्निर्वैश्वानरो भवति तस्यैव भगवद्विभूतित्वात् वाक्यार्थो यथाकथञ्चित् योजयिष्यते । ननु विरुद्धधर्म्माणां विद्यमानत्वात् भगवत्परत्वं वाक्यस्य । विरुद्धधर्म्माः शब्दादयः अन्तःप्रतिष्ठानञ्च । अग्निर्वैश्वानरइति शब्दः केवलवैश्वानरपदे भवेत् भगवत्परत्वं योगेन तदग्निसाहचर्य्यात् अग्निरेव भवेत् । तस्यैव च त्रेताग्निकल्पनमुपासनार्थं । प्राणो हि देवतास्तत्यद्भक्तं प्रथममागच्छेत तद्धोमीयमित्यादिना । तदेतेभ्यो हेतुभ्योऽन्तःप्रतिष्ठितत्वमपि न भगवद्धर्म्मः । पुरुषेऽन्तःप्रतिष्ठितं वेदेति भिन्नहेतुर्हेतुर्हेतुश्च भवतीति न चकारः । तस्माद्विरुद्धधर्म्माणां विद्यमानत्वात् न भगवान् वैश्वानर इति चेत् । न । तथा दृष्ट्युपदेशात् । सर्व्वभोक्तृत्वं भगवतो वक्तुं तथा दृष्टिरुपदिश्यते विरुद्धधर्म्माणां तत्तद्भावापत्तिरित्यैश्वर्य्यमेव भगवतो वर्णितं । तर्हि कार्य्यवाक्यमेवास्तु स्मृत्यनुरोधादिति चेत् तत्राह । असम्भवात् । नहि तस्य द्युमूर्द्धत्वादयो धर्म्माः सम्भवन्ति । उपचारादुपासनार्थं परिकल्पनं भविष्यतीति चेत् । न । पुरुषमपि चैनमधीयते वाजसनेयिनः । स एषोऽग्निर्वैश्वा-

नरो यत्पुरुषः स यो हैतमेवाग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तः प्रतिष्ठितं वेदेति। तस्मात् पुरुषत्वं पाठान्तरे पुरुषविधत्वं वा जाठरस्य न सम्भवतीति भगवानेव वैश्वानरः। भगवत्परत्वे सम्भवत्यन्यकल्पनाऽयुक्तेति।

## अतएव न देवता भूतञ्च ॥ २७ ॥

वैश्वानरो न जुष्टेत्यादिमन्त्रैर्देवताया महाभूताग्नेर्वा वाक्यार्थतेति कस्यचित् बुद्धिः स्यात् तदपि अतिदेशेनैव परिहरति। मुख्योपपत्तिर्भगवत्परत्वे सम्भवति नान्यकल्पना युक्तेति।

## साक्षादप्यविरोधं जैमिनिः ॥ २८ ॥

अधुना परिमाणविशेषो विचार्यते। प्रादेशमात्रत्वं* भगवतः स्वाभाविकं कृत्रिमं वेति। अस्मिन् सिद्धएव पूर्व्वोक्तं सिद्धं भवेदिति विचार्यते। तत्रास्मिन्नर्थे चत्वार ऋषयो वेदार्थचिन्तकाः प्रकारभेदेन। तत्र केवलं शब्दबलविचारकाः आचार्य्याः। शब्दार्थयोर्जैमिनिः। आश्मरथ्यस्तु शब्दोपष्टम्भेनैनार्थविचारकः। केवलार्थविचारको बादरिरिति। आचार्य्यः पुनर्विचाराविचारयोर्दोषं पश्यन् विचारमपि वदन् तेषामलबुद्धिख्यापनाय सामान्याह। तत्र जैमिनिरुभयबलविचारकः प्रथमं निर्दिश्यते। व्यापकस्य प्रादेशमात्रत्वे साक्षादपि कल्पनाव्यतिरेकेणापि स्वरूपविचारेणैव विरोधं मन्यते जैमिनिः। आकाशवद्व्यापकं सर्व्वतःपाणिपादान्तं ब्रह्म अतएव साकारत्वमनन्तमूर्त्तित्वं ब्रह्मणः स्वेच्छया परेच्छया स्वभावतय विभक्त-

* सत्प्रादेशमात्रत्वमिति क०।

मिव। तयोऽपि नियतपरिमाणा अनियतपरिमाणास्तु आकाश-वत्परिच्छेदनिरूप्याः। तद्वृद्धिह्रासाभ्यां तथा भवन्ति। स्मृतावप्युक्तं।

विष्णोस्तु त्रीणि रूपाणि पुरुषाख्यान्यथो विदुः।
प्रथमं महतः स्रष्टृ द्वितीयं त्वण्डसंस्थितं।
तृतीयं सर्व्वभूतस्थं तानि ज्ञात्वा विमुच्यत इति॥

भूतेषु पञ्चधा। उदरेऽङ्गुष्ठमात्रः। हृदये प्रादेशो मूर्द्धनि च मनसीन्द्रियेषु चाण्वः। चित्ते व्यापकः। एकस्याप्युपक्रमे सर्व्वेषु तथात्ववादो विभूतिरभेदाय। तस्मात् वैश्वानरस्य पुरुषत्वात् सच्चिदानन्दरूपेणैव प्रादेशमात्रत्वं न विरुध्यते। अतः साकारब्रह्मवाद एव जैमिनेः सिद्धान्तः।

अभिव्यक्तेरित्याश्मरथ्यः॥ २९॥

निराकारमेव ब्रह्म मायाजवनिकाच्छन्नं तदपगमेन पुरुषाकारेणाधिदैविकदेवताधिष्ठितेनाभिव्यक्तः पुरुषोऽन्तर्यामी अतएव पुरुषविध इति। अभिव्यक्तेर्हेतोः साकारत्वमपि मायापगमनकृतत्वात् न स्वाभाविकत्वं तथापि निर्द्दिश्यमानं सच्चिदानन्दरूपमेवाश्मरथ्यो मन्यते।

अनुस्मृतेर्बादरिः॥ ३०॥

बादरिः केवलयौक्तिकचिन्तनवशात् प्रादुर्भूतरूपानुवादिका श्रुतिरिति।

यद्यद्धिया त उरुगाय विभावयन्ति
तत्तद्वपुः प्रणयसे सदनुग्रहाय।

इति वाक्यानुरोधात्। अन्यथा बहुकल्पनायां बुद्धि-सौकर्याभावात् तार्किकादिमतेष्वपि तथात्वात् युक्त्यनुरोधेन ब्रह्मवादोऽप्यन्यथा नेय इति हि मन्यते। अस्मिन् पचेत्व-तात्त्विकत्वं। अथवा मायास्थाने श्रुतस्मृतिः। अभिव्यक्तिस्तु तुल्या। एवं सति बादरिमतेऽपि तात्त्विकमेव रूपं।

सम्पत्तेरिति जैमिनिस्तथाहि दर्शयति॥ ३१॥

जैमिनिमते आकारवादे नियतसाकारं मन्यमानस्तदेकदेशी नियतमेव प्रादेशमात्रभगवद्रूपं मन्यते। तन्निराकरणाय सर्वत्र प्रादेशत्वं सम्पत्तिकृतमित्याह। तत्र का संपत्तिः कथ-मिति स्वयमेव श्रुत्या प्रदर्शयति। वाजसनेयिब्राह्मणे द्युप्रभृ-तीन् पृथिवीपर्यन्तान् वैश्वानरस्यावयवान् अध्यात्मे च मूर्द्ध-प्रभृतिषु चिबुकपर्यन्तेषु सम्पादयन् प्रादेशमात्रमिह वै देवाः सुविदिता अभिसम्पन्नास्तथा तु व एतान् वक्ष्यामि यथा प्रादेश-मात्रमेवाभिसम्पादयिष्यामीति स होवाच मूर्द्धानमुपदिशन्नेष वा अतिष्ठा वैश्वानर इत्यादिना सम्पत्तिनिमित्तमेव प्रादेश-मात्रत्वं वैश्वानरस्याह। न तु प्रादेशमात्र एव वैश्वानर इति तदेकदेशिपरिहारो जैमिनिर्मन्यते।

आमनन्ति चैनमस्मिन्॥ ३२॥

मुख्यं स्वसिद्धान्तमाह। व्यापकएव प्रादेश इति न हि विरुद्धमुभयं भगवत्यनवगाह्यमाहात्म्ये तस्मात् प्रमाणमेवानु-सर्त्तव्यं। न युक्तिः। शब्दबलविचारएव मुख्यः। न तु प्राती-तिकविरोधादन्यथात्वकल्पनं। वैश्वानरस्य पुरुषत्वं पुरुषविधत्वं

पुरुषेऽन्तःप्रतिष्ठितत्वं च वाजसनेयिनः समामनन्ति। न हि तस्य तद्विधत्वं तस्मिन् प्रतिष्ठितत्वं च सम्भवति युक्त्या। अतोऽन्ये ऋषयो भ्रान्ता एव येऽन्यथा कल्पयन्तीत्यभिप्रेत्य स्वमतमाह। एनं वैश्वानरमस्मिन् मूर्द्धचिबुकान्तराले जाबालाः समामनन्ति। एषोऽनन्तोऽव्यक्त आत्मा योऽविमुक्ते प्रतिष्ठित इति सोऽविमुक्तः कस्मिन् प्रतिष्ठित इत्यादिना भ्रुवोः घ्राणस्य च यः सन्धिः स एष द्यौर्लोकस्य परस्य च सन्धिर्भवतीति न ह्यनन्तः संकुचितस्थाने भवति विशेषणवैयर्थ्यापत्तेः। युक्तिगम्या त्वब्रह्मविद्यैव। अविरोधेऽपि वक्ष्यति। श्रुतेस्तु शब्दमूलत्वादिति। ननु तथापि काचित् वेदानुसारिणी युक्तिर्वक्तव्या शास्त्रसाफल्यायेति चेत्। उच्यते। विरोध एव नाशङ्कनीयो वस्तुस्वभावात्। अयःकान्तसंनिधौ लोहपरिभ्रमणे या युक्तिः गर्भस्योदर्यादाहे रेतसो मयूरत्वादिभावेन हि सर्व्वत्र स्वभावदर्शनाभ्यामन्योपपत्तिः कैश्चिदपि शक्यते वक्तुं। तस्मात् सुषिरमित्यादिना श्रुतिरेवमेवाह। यशोदा स्तनन्धयस्य च भगवतो मुखारविन्दे विश्वमेव दृष्ट्वा समायाविद्यानिराकरणाय सिद्धान्तमाह

अथो अमुष्यैव ममार्भकस्य यः कश्चनौत्पत्तिक आत्मयोगः।

इति उलूखलबन्धने चायमर्थो निर्णीतः। तस्मादानन्दांशस्यैवायं धर्मो यत्र स्वाभिव्यक्तिस्तत्र विरुद्धसर्व्वधर्माश्रयत्वमिति सूत्रकारार्थः। तस्मात् प्रादेशमात्रो व्यापक इति वैश्वानरो भगवानेवेति सिद्धं।

इति श्रीवेदव्यासमतवर्त्ति श्रीवल्लभाचार्य्यविरचिते ब्रह्मसूत्राणुभाष्ये प्रथमस्याध्यायस्य द्वितीयः पादः।

## द्युभ्वाद्यायतनं स्वशब्दात् ॥ १ ॥

द्वितीयपादे आधेयरूपो भगवान् प्रतिपादितः। आधाररूपोऽत्र प्रतिपाद्यते। तेन सर्वं ब्रह्मेति फलिष्यति। इदं श्रूयते। यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः तमेवैकं जानथात्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतुरिति।

बाधकानां बलिष्ठत्वात् साधकानामभावतः।
आधारधर्मा वाक्येऽस्मिन्निति पादोऽभिधीयते॥

यस्मिन्नित्यादि वाक्ये च वाक्यार्थः सर्वबाधितः। अर्थात् प्रकरणात् लिङ्गादिति पूर्वं विचार्यते। अत्र संशयः। द्युभ्वाद्यायतनं ब्रह्म आहोस्वित् पदार्थान्तरमिति। पदार्थान्तरमेव भवितुमर्हति। द्युभ्वादीनां सूत्रे मणिगणा इव प्रोतानां भारत्वान्न तद्वाहकः परमात्मा। अन्यथात्मविमोकासङ्गतः। एकविज्ञानेन सर्वविज्ञानस्य दृष्टत्वात् कथमन्यविमोकः सेतुश्च गतिसाधनः तस्मादफलत्वमपि आत्मलाभान्न परं विद्यत इति विरोधश्च। अतो न ब्रह्मविद्यापरमेतद्वाक्यं किन्तु स्मृतिमूलं भविष्यतीत्येवं प्राप्त उच्यते। द्युभ्वाद्यायतनं ब्रह्मैव। द्यौः भूरादिर्येषान्ते द्युभ्वादयः तेषामायतनं। यस्मिन् द्यौरिति वाक्योक्तानां साधकं वदन् प्रथमपरिहारमाह। स्वशब्दात्। आत्मशब्दो व्याख्यातः स्वशब्देन। अत्र न जीवस्यात्मत्वेनोपासनार्थमात्मपदं किन्तु पूर्वोक्तानामात्मभूतं तेन न भारकृतो दोषः। कारणे हि कार्यमोतं भवति सेतुत्वं च युज्यते। तज्ज्ञानेनामृतत्वप्राप्तिः। अभेदेऽपि ब्रह्मविदाप्नोति परमितिवदर्थः।

तस्मादबाधितार्थत्वात्तस्य सर्व्वगतत्वव्युत्पादकत्वात् द्युभाद्यायतनं ब्रह्मैव ।

## मुक्तोपसृप्यव्यपदेशात् ॥ २ ॥

ननु चोक्तं सर्व्वविज्ञानस्योपक्रान्तत्वादन्यवाग्विमोको विरुद्ध इति; नैष दोषः । मुक्तोपसृप्यव्यपदेशात् । मुक्तानां जीवन्मुक्तानां शरीराद्यध्यासरहितानामवान्तरप्रकरणशरधनुर्न्यायेन ब्रह्मत्वेन ज्ञातं पृथक्त्वेन वा जीवं लक्ष्ये योजयितुं तदुपसृप्यता व्यपदिश्यते । तेन शरीराद्यध्यासविशिष्टं न ब्रह्मणि योजनीयमिति । किञ्च । वाग्विमोकएव न वस्तुविमोकः । वस्तुनो ब्रह्मत्वात् । वाचारम्भणमात्रत्वाद्विकारस्य । अतो न सर्व्वविज्ञानबाधः । अतो बाधकाभावादिदं ब्रह्मवाक्यमेव । ये तु श्रुतेरन्यथार्थत्वं कल्पितमतानुसारेण नयन्ति ते पूर्व्वोक्तस्पष्टश्रुतिविरुद्धार्थवादिन उपेक्ष्याः ।

## नानुमानमतच्छब्दात् ॥ ३ ॥

ननु जड़धर्म्माः जड़दृष्टान्ताः प्रकरणे बहवः सन्ति । अरा इव मण्डपुरे मनोमय इत्यादि । तस्मात् प्रकृतिपुरुषनिरूपकसांख्यानुमापकमेवैतत्प्रकरणमस्तु । निर्णीतमप्यचराधिकरणे जड़धर्म्मात् पुनरुज्जीवनं । तस्मात् द्युभाद्यायतनं प्रकृतिरेव भवितुमर्हतीति चेत् । न । अनुमानं तन्मतानुमापकं न भवति । कोऽपि शब्दो निःसन्दिग्धस्तन्मतज्ञापको नास्ति । ब्रह्मवादज्ञापकास्तु बहवः सन्ति यात्मसर्व्वज्ञानन्दरूपादिशब्दाः । अतः सन्दिग्धाः जड़धर्म्मत्वेन प्रतीयमाना अपि ब्रह्म-

धर्मा एवेति युक्तं। न हि ब्रह्मवादः श्रुतिव्यतिरिक्तो* सिद्धोऽस्ति। येन ब्रह्मधर्माभावो निश्चेतुं शक्येत। तस्मात् सर्व्वाधारत्वेन *निरूप्यमाणः परमात्मैव न प्रधानमिति।*

प्राणभृच्च ॥ ४ ॥

नन्वस्ति निर्णायकं प्राणानामोतत्ववचनं मनोमयः प्राणशरीरनेतेति च। अतो जीवधर्माः केचन जड़धर्मा यापरे सर्व्वज्ञत्वादयोऽपि योगप्रभावाज्जीवधर्मा इति। तस्माज्जड़जीवविशिष्टः सांख्यवादएव युक्त इति चेत्। न। प्राणभृज्जीवो न सम्भवति। अतच्छब्दादेव न ह्यानन्दांशतरूपः स भवितुमर्हति तस्मात्। पृथक्‌योगकरणमुत्तरार्थं।

भेदव्यपदेशात् ॥ ५ ॥

विशेषहेतुमाह। तमेवैकं जानथेति कर्म्मकर्त्तृभावः प्रतीयते। अतो भेदव्यपदेशात् न प्राणभृज्जीवः।

प्रकरणात् ॥ ६ ॥

जीवजड़साधारणनिराकरणाय विशेषहेतुमाह। प्रकरणं हीदं ब्रह्मणः। ब्रह्म देवानामित्यारभ्य स ब्रह्मविद्यामिति। तेषामेवैतां ब्रह्मविद्यामित्यन्ते च। ब्रह्मविद्याया एव प्रकरणित्वमवगम्यते ब्रह्मैवेदममृतं पुरस्तादित्यादिभिर्विस्पष्टः ब्रह्मवादः प्रतीयते।

स्थित्यदनाभ्याञ्च ॥ ७ ॥

सर्व्वस्याप्यन्यथाभावशङ्कया विशेषहेतुमाह। द्वा सुपर्णेति वाक्ये अनश्नन्नन्यो अभिचाकशीति केवलस्थितिः परमात्मनः

* श्रुतिव्यतिरिक्त इति क०।

कर्मफलभोगो जीवस्य। अतः स्थित्यदनाभ्यां जीवपरमात्मानावेव मध्ये परामृष्टौ। न हि साङ्ख्यमतमेतादृशं भवति। अतोऽस्य वैशेषिकोपपत्तेर्विद्यमानत्वात् प्रातिलोम्येन सर्वा उपपत्तयोऽदृष्टा इति द्युभ्वाद्यायतनं भगवानेवेति सिद्धं। यद्यपि पैङ्गचुप-निषदि द्वा सुपर्णेत्यस्यान्यथाव्याख्यानं प्रतिभाति तद्वचामदेश-विशेषेऽन्यथाव्याख्यानं न दोषाय। तस्मात् सत्त्वचेतनौ जीव-ब्रह्मणो व्याख्येयो।

भूमा सम्प्रसादादध्युपदेशात् ॥ ८ ॥

इदं च श्रूयते यो वै भूमा तत्सुखमिति लक्षणमुक्त्वा भूम्नो लक्षणमाह। यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमेति। तत्र संशयः। भूमा बाहुल्यमाहोस्वित् ब्रह्मेति। तत्र प्रपाठकारम्भे तत्त्वा ऊर्द्ध्वं वक्ष्यामीति प्रतिज्ञातत्वात् वेदादीनां नामत्वमुक्त्वा ततो भूयस्त्वं वागादीनां प्राणपर्यन्ताना-मुक्त्वा मुख्यप्राणविद्याया अपरब्रह्मविद्यात्वख्यापनायार्धप्रपाठकं समाप्य ततोऽपि विज्ञानादीनामन्तरङ्गाणां सुखान्तानां भूय-स्त्वमुक्त्वा सुखस्य फलत्वात् तस्यैव भूयस्त्वं वदति। यद्यपि तरति शोकमात्मविदिति नारदप्रश्नात् भूम्नो ब्रह्मत्वं प्रकरणात् वक्तुं शक्यते तथापि तस्यैवायात आत्मादेश इति अहङ्कारादेश-वदात्मादेशोऽप्यस्ति तेनाब्रह्मत्वेऽपि प्रश्नसिद्धिः। तस्य सुषु-प्त्याद्युपस्य स्वे महिम्नि प्रतिष्ठितत्वं सर्वतः पूर्णविषयलाभेऽपि भवति सुषुप्तावपीति। तयोरन्यतरद्ग्राह्यं तथाप्यन्तरङ्गत्वात् सुषुप्तिरेवात्र भूमत्वेनोच्यते। न सुखबाहुल्यं सुषुप्तिरूपमेव

भूमेत्येवं प्राप्त उच्यते। भूमा भगवानेव। कुतः। सम्प्रसादादध्युपदेशात्। सम्प्रसादः सुषुप्तिः तस्मादधि आधिक्येन उपदेशात्। यद्यपि नान्यत्पश्यतीत्यादि समानं तथापि स एवाधस्तादित्यादिना तु ततोऽप्यधिकधर्म्मा उच्यन्ते। न हि सुषुप्तेः सर्व्वत्वादिधर्म्माः सम्भवन्ति। आत्मशब्दश्च मुख्यतया परिगृहीतो भवति। भावशब्दस्यापि सर्व्वत्वात् भगवति वृत्तिरदोषः। तस्मात् भूमा भगवानेव।

### धर्म्मोपपत्तेश्च ॥ ८ ॥

नान्यत्पश्यतीत्यादयोऽपि गुणा ब्रह्मणि न विरुध्यन्ते। स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हीति न्यायेन यत्र हि द्वैतमिव भाती*त्यादि श्रुत्या उभयत्राम्नानात् अन्यादर्शनादयो भगवति न विरुध्यन्ते। चकारात् फलं तस्यैवोपपद्यत इत्याह। स वा एष एवं पश्यन्नित्यादिना सहस्राणि च विंशतिरित्यन्तेन। तेन भूमा ब्रह्मैवेति सिद्धं।

### अक्षरमम्बरान्तधृतेः ॥ १० ॥

गार्गिब्राह्मणे कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति स होवाच एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वित्यादि श्रूयते। तत्र संशयः। किमक्षरशब्देन पदार्थान्तरं ब्रह्म वेति। तत्राचेतनसाधारण्याहरणतुल्यत्वादाकाशवदस्याप्य-ब्रह्मत्वमेव। द्युभ्वाद्यायतनविरोधस्तु तुल्यः। अतएवागतार्थता अदृश्यत्वाद्यधिकरणेन। न हि तत्र विरुद्धधर्म्मा आशङ्का

* भवतीति क०।

निराक्रियन्ते। अतोऽचेतनतुल्यत्वात् ब्रह्मवादस्यासमाप्तत्वात् आग्रहाविष्टत्वाद्वा स्तोत्वाच्च अरो वाच आकाशाद्ययानितिवत् कयाचिदुपपत्त्या अरणकालभूतसूक्ष्मप्रकृतिजीवविशेषाणामन्यतरपरिग्रह इति वक्तव्यमुपासनार्थं। अत्र हि प्रापञ्चिकसर्व्वधर्म्मराहित्यं ब्रह्मधर्म्मत्वञ्च प्रतीयते। तदुपासनार्थत्व उपपद्येत। ब्रह्मत्वपरिग्रहे तु वैयर्थ्यमेव उपदेष्टृत्वाभावात्। तस्मादक्षरमन्यदेव ब्रह्मधर्म्मत्वेनोपास्यमित्येवं प्राप्त उच्यते। अक्षरं परमात्मैव। कुतः। अम्बरान्तधृतेः। श्रुतिं व्याख्याय सिद्धं हेतुमाह। अवैकएव प्रश्न उत्तरं च्चैकं। आकाशस्यावान्तरत्वमेव। तेनाम्बरान्तानां पृथिव्यादीनां विधारकः परमात्मैव। द्युभ्वाद्यायतनसिद्धो धर्म्मोऽत्र हेतुः। न तदश्नोति कश्चनेति मुख्यतया परिच्छिनो भवति। अन्यथा मूर्द्धा विपतनञ्च भवेत्। न ह्यन्यः सर्व्वाधारो भवितुमर्हति। परोक्षेण ब्रह्मकथनार्थमक्षरपदमन्यनिराकरणार्थं तद्धर्म्मोपदेशश्च। तस्मादक्षरं परमात्मैव।

सा च प्रशासनात्॥ ११॥

ननु क्वचिद्वाक्ये विधारणं ब्रह्मधर्म्मत्वेनाश्रितमित्यन्यत्रापि न तथायितुं शक्यते। नियामकाभावादित्यत आह। सा-च विधृतिरत्रापि वाक्ये ब्रह्मधर्म्म एव। कुतः। प्रशासनात्। एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिवी विधृते तिष्ठत इति प्रशासनेन विधारणमन्यधर्म्मो भवितुं नार्हति। अप्रतिहताज्ञायत्नेर्भगवद्धर्म्मत्वात्। तस्मादक्षरं ब्रह्मैव।

अन्यभावव्यावृत्तेश्च ॥ १२ ॥

नन्वेतदुपासनापरं भविष्यतीति। तत्राह। अन्यभावव्यावृत्तेः। अन्यस्य भावः अन्यभावः अब्रह्मधर्म इति यावत्। तस्मात् व्यावृत्तेः। अब्रह्मत्वे हि ब्रह्मत्वे नोपासना भवति। कार्यकारणभावभेदेन। न ह्यत्र तादृशो धर्मोऽस्ति। चकाराद्यो वा एतदक्षरमविदित्वा गार्गीत्यादिना शुद्धब्रह्मप्रतिपादनमेव नोपासनाप्रतिपादनमिति। तस्मादक्षरं ब्रह्मैवेति सिद्धं।

ईक्षतिकर्मव्यपदेशात् सः ॥ १३ ॥

पञ्चमप्रश्ने एतद्वै सत्यकाम परञ्चापरञ्च ब्रह्म यदोङ्कारस्तस्माद्विद्वानेतेनैकतरमन्वेति। यद्येकमात्र इत्यादिना एकद्विमात्रोपासनया ऋग्यजुःसामभिर्मनुष्यलोकसोमलोकसूर्यलोकप्राप्तिपुनरागमने त्रिकलार्धचतुर्थमात्रोपासनया परं पुरुषमभिध्यायीत स तेजसि परे संपन्नो यथा पादोदरस्त्वचेत्यादिना परात्परं पुरिशयं पुरुषमीक्षत इति। तत्र संशयः। परपुरुषः परमात्मा ध्यानविषयः आहोस्विद्विराट्पुरुषो ब्रह्मा वेति। तत्रामुख्यप्रवाहपतितत्वात् ब्रह्मलोकं गतस्य तदीक्षणमेव च फलं श्रूयते। न हि परमपुरुषस्य ब्रह्मत्वे तद्ध्यानमेव फलं भवति। तस्मात् विराट् ब्रह्मा वा अभिध्यानविषय इति एवं प्राप्त उच्यते। सः अभिध्यानविषयः परपुरुषः परमात्मैव। कुतः। ईक्षतिकर्मव्यपदेशात्। जीवघनात् केवलजीवाधारभूतात् ब्रह्मलोकात् परस्यपुरुषदर्शनं ईक्षतिः तस्याः कर्मत्वेन व्यपदेशात् उभयोः कर्मणोरेकत्वं अपरन्त्वि-

मात्रपर्य्यन्तं निरूप्य परं ब्रह्म निरूपयति। तथैव च श्लोके तिस्रो मात्रा इत्यादि। अभिध्यानस्य हि साक्षात्कारः फलं। अतः फलरूपज्ञानस्य विषयत्वात् परपुरुषः परमात्मैव। मन्दशङ्कानिवृत्त्यर्थमेवेदं सूत्रं। अत्र सर्व्वसङ्करवादिनामन्यथा-पाठो भ्रमात् तथापि विचारसहः।

॥दहराधिकरणम्॥ दहर उत्तरेभ्यः ॥ १४ ॥

अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरो-ऽस्मिन्नन्तराकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यन्तद्वाव विजिज्ञासितव्यमित्यादि श्रूयते। तत्र संशयः। किं जीवोऽन्वेष्टव्यो ब्रह्म वेति जीवब्रह्मवादो निर्णीयते। श्रुत्यर्थो हि निर्णेतव्यः। तत् यदस्मिन्वाक्ये परमार्थतो जीव एव ब्रह्म चेत् प्राप्तं च तत्रैव समाप्तं चेत् व्यर्थमधिकरणारम्भः। इदमेव च वाक्यं श्रुत्वा वक्तव्यं च भवेत्। तस्मादस्मिन्नधिकरणे मुख्या सर्व्वसङ्करवादादिनिराकृतिः। किं तावत् प्राप्तं दहर आकाशो जीव इति। अत्रावान्तरप्रकरणद्वयं। तत्र द्वितीये प्रजापतिप्रकरणे जीव एवामृताभयरूपः प्रतिभाति। स्पष्टार्थश्च द्वितीय-प्रकरणं। तस्मात् प्रथमेऽपि जीव एव तादृशधर्म्मवान् भवितु-मर्हति। अर्थानुगुण्यमपि व्याख्येयं। अयमेव जीवो ब्रह्म अयमात्मा ब्रह्मेति श्रुतेः। मैत्रेयीब्राह्मणं चानुगुणं भविष्यति। तस्य पुरं शरीरं तत्र हृदयकमलं सूक्ष्मं तत्राराग्रमात्रो जीव एवाकाशः सादृश्यात्तद्व्यपदेश इति। अन्वेष्टव्यश्च तस्मिन् विद्यमानस्तन्महिमा। वासनारूपेण सर्व्वन्तत्र वर्त्तत इति।

अन्यथोभयत्र सर्वैकघनं विरुद्धमापद्येत। भूतानि महाभूतानि पुत्रादयोवा तस्येत् वृषुरित्यादिना नित्यतामुपपाद्य एष आत्मेत्यादिना तथैव ब्रह्मत्वमुपदिशति। तत्‌ज्ञानस्य प्रशंसति। स्वात्मज्ञानिनः कामसिद्धिमाह। य इहेत्यादिना। येऽपि च विरुद्धा धर्म्माः प्रतिभान्ति अहरहर्गमनादयस्तेऽपि स्वकल्पितजीवानां स्वप्नमायामनोरथादिषु तेषामेव गमनागमने प्रति स्वातिरिक्तस्य ब्रह्मणोभावात् एवं लोकाधारत्वमपि ब्रह्मचर्य्यं च तस्य साधनमिति। योगश्च तयोर्द्धमायवस्तत्यमेतीति च। तस्माज्जीव एव दहर इत्येवं प्राप्त उच्यते। दहरः परमात्मा न जीवः। कुतः। उत्तरेभ्यः। उत्तरत्र वक्ष्यमाणेभ्यो हेतुभ्यः। तेषामपि साध्यत्वादेवमुक्तं। जीवो नाम भगवदंशो न भगवानेवेति अग्रे वक्ष्यते। अंशो नानाव्यपदेशादिति। नापि ब्रह्म तावन्मात्रमिदमप्यग्रे वक्ष्यते। अधिकन्तु भेदनिर्देशादिति। तस्मादिदं प्रकरणं न जीवब्रह्मविद्यापरं किन्तु ब्रह्मवाक्यमेवेति।

गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गञ्च ॥ १५ ॥

उत्तरहेतूनां मध्ये हेतुद्वयमाह। गतिशब्दाभ्यां। गतिर्ब्रह्मलोकगमनं। एवमेवेमा सर्व्वाः प्रजाः अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्तीति एष आत्मापहतपाप्मा सत्यकामः सत्यसंकल्प इति केवलभगवद्वाचकाः शब्दा, ब्रह्मलोकशब्दश्च। ननूक्तं जीवस्यैवैते शब्दा गतिश्च मनोरथादिकल्पितानामिति। तन्निराकरणायाह। तथाहि तथैव गतिशब्दौ भगवत्येव श्रुतौ।

अनृतेनापिधानं हि तेषां विशेषणं। अज्ञानावेष्टितत्वमि-त्यर्थः।* नत्वज्ञानपरिकल्पितत्वं दृष्टत्वात् तथैव हि दृश्यते। सर्व्वोऽप्याह न किञ्चिदवेदिषमिति। न च गन्तुरभाव एव शास्त्र-वैफल्यापत्तेः नह्यात्मनाशः पुरुषार्थः कर्म्मकाण्डविरोधश्च तथा। अपहतपाप्मत्वं च तद्विरुद्धधर्म्माणामनुभवात्। भगवति तु इदानी-मेव तेषामनुभवः ध्यानादावुपलब्धेः। पृथिवीशरावघटवज्जीवब्रह्म विभागो नत्वज्ञानकृतः। तथाहि। अज्ञानं नाम चैतन्यान्तर्भूतं तच्छक्तिरूपमनादि उत बहिर्भूतं। सांख्यवत् न बहिर्भूतं चेत् सांख्यनिराकरणेनैव निराकृतं अन्तःस्थितायाः शक्तिरूपायाः स्वरूपाविरोधिन्या न स्वरूपविभेदकत्वं आश्रयनाशप्रसङ्गात्। कल्पनायाश्चाप्रामाणिकत्वात्। बहिःस्थितस्यैव हि भेदकत्वं कुठा-रादिवत्। नापि वायुवत् तच्छक्तित्वात्। किञ्च। कोऽयं ब्रह्मवादे प्रद्वेषः येन मिथ्यावादः परिकल्प्यते। अज्ञानादिति चेत् पीतशङ्खप्रतिभानवद्युक्तं मतकरणं ब्रह्मविदुपासनयावग-मिष्यति। शर्कराभक्षणेनैव पीतप्रतीतिः सर्व्वज्ञेन हि वेद-व्यासेन भाविमिथ्यावादनिराकरणेनेदमधिकरणमारब्धं। तस्मा-ज्जीवानामेवागमनदर्शनात् ब्रह्मणः सर्व्वत्वदर्शनात् गतिशब्दौ ब्रह्मविषयावेव न जीवविषयौ। किञ्च। लिङ्गञ्च वर्त्तते यथेह कर्म्मजितो* लोकः क्षीयत एवमेवामुत्र पुण्यजितो‡ लोकः क्षीयत इति नहि स्वाज्ञानं स्वस्य नाशयति हिताकरणप्रसक्तिश्च। न च ज्ञानेन सामर्थ्यमुद्भूतमिति वाच्यं विरोधित्वात् नहि ज्ञाने

---

* कर्मचित इति वा पाठः।

‡ पुण्यचित इति वा पाठः।

जाते कर्त्तृत्वमस्तीति विप्रयवादिनोऽङ्गीकुर्व्वन्ति। विरुद्धा च कल्पना अहं ब्रह्मास्मीति अतएव सर्व्वभावश्रुतेः। तद्‌ज्ञानं तस्य सार्व्वज्ञे लिङ्गं. तस्य हि सगुणो भगवच्छब्दवाच्यानामन्यतरः स चेज्जीवे समायाति तत्कृपया तस्यैवास्यापि माहात्म्यं भवति तस्माल्लिङ्गादपि गतिशब्दौ ब्रह्मविषयौ। चकारात् तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनायेति श्रुत्वा ब्रह्मत्वेन ज्ञानं नात्मनो मोक्षाय ब्रह्मण एव तु ज्ञानमात्मत्वेनापि। तस्मात् दहरः परमात्मा।

## धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः॥ १६॥

अपरं हेतुमाह। धृतेः। अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसम्भेदायेति। न हि सर्व्वलोकविधारकत्वं ब्रह्मणोऽन्यस्य सम्भवति। चकारात् सेतुत्वमपि तदन्वेष्टव्यं तद्विजिज्ञासितव्यमिति लोकविधारणस्य माहात्म्यरूपत्वात्। तस्यैव कर्मत्वमित्याह। महिम्न इति। महिमैष पुरुषस्य,न तु वासनारूपेण तन्निविष्टमानत्वं संसारिधर्मलेनामाहात्म्यरूपत्वात्। न च विरुद्धमुभयत्रैकस्य दर्शनमिति वाच्यं। अस्यास्मिन्नुपलब्धेः। अस्यैतादृशविरुद्धधर्माश्रयमाहात्म्यस्यास्मिन् भगवत्येवोपलब्धेः ज्यायानाकाशाज्ज्यायान् वा अयमाकाशः अणुः स्थूल इति। यशोदादयश्च बहिःस्थितमपि जगदन्तः प्रपश्यन्ति। नत्वेतादृशो जीवो भवितुमर्हति। तस्मात् ब्रह्मैव दहरः।

## प्रसिद्धेश्च॥ १७॥

आकाशशब्दवाच्यत्वप्रसिद्धिः। अपहतपाप्मत्वादिप्रसिद्धिः। किं बहुना प्रकरणोक्तसर्व्वधर्मप्रसिद्धिर्भगवत्येव न जीवे सम्भवत्य-

तोऽपि भगवानेव दहरः । चकाराद्विधिमुखेनाधिकरणसमाप्तिः सूचिता । अन्यनिषेधमुखेन पुनर्विचारयति ।

## इतरपरामर्शात् स इति चेन्नासम्भवात् ॥ १८ ॥

ननु ब्रह्मैताद्दशं, जीवो नैताद्दश इति न क्वचित् सिद्धमस्ति श्रुत्येकसमधिगम्यत्वादुभयस्वरूपस्य ब्रह्मवादे अतो यथा सर्वत्र ब्रह्मणोऽसाधारणधर्मदर्शनात् तत्तत्प्रकरणं ब्रह्मण इति निर्धार्यते एवमिहापि जीवस्यासाधारणधर्मदर्शनात् जीवप्रकरणमिति कुतो न निर्धार्यते । निश्चिते तु तस्मिन् आकाशतुल्यत्वादयो धर्मा जीवस्यैव भविष्यन्ति नान्यस्येत्यभिप्रायेणाह । इतरपरामर्शात् सः । इतरो जीवस्तस्य परामर्शः उपक्रमोपसंहारमध्यपरामर्शैः सन्दिग्धे निर्णयः तत्रात्मविदः सर्व्वान् कामानुक्त्वा मध्ये अथ य एष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेनरूपेणाभिनिष्पद्यत एष आत्मेति होवाचैतदमृतमभयमित्यादि मध्ये अन्ते अथ य आत्मा स सेतुरिति । तत्र सम्प्रसादः सुषुप्तिः जीवावस्था । तत्र परसम्बन्धनिमित्तेन स्वेनैव रूपेणाभिनिष्पत्तिवचनात् जीवएवैताद्दश इति गम्यते । नह्येष परमात्मनोऽयं धर्मः सम्भवति । अतः सर्व्वमेव प्रकरणं जीवपरं भविष्यतीति । सएव जीवएव प्रकरणार्थ इति चेत् । न । जीवस्ताद्दशो न भवति विरुद्धधर्मत्वेनैव सर्व्वत्र तन्निरूपणात् । उभयोरेकत्वे ह्युभयत्वमेव न स्यात् ऋतं पिबन्तावित्यादिवाक्यविरोधश्च । अतो न जीवस्ताद्दृश इत्यभिप्रायेणाह । असम्भवात् । नहि जीवे जगदाधारत्वादिकं सम्भवति ।

नहि परामर्शमात्रेण सर्ववेदान्तविरुद्धं कल्पयितुं शक्यते। परामर्शस्यान्यार्थत्वमुत्तरत्र वक्ष्यति। तस्माद्दहरो जीवो न भवितुमर्हति। वाक्यार्थो यथोपपद्यते तथोत्तरत्र वक्ष्यते। ब्रह्मत्वेकमेव नोभयमिति निश्चयः।

## उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥ १९ ॥

उत्तरात् प्रकरणात् प्राजापत्यात्। तत्र हि दिव्ये चक्षुषि मनोरूपे प्रतीयमानो जीवएवामृताभयरूपो निरूपितः। तस्यैवोदशरावे जाग्रत्साक्षित्वं तदनु स्वप्नसाक्षित्वं तदनु सुषुप्तिसाक्षित्वं निरूप्य सर्वत्र तस्यामृतरूपत्वमेव निरूप्यावस्थानामतात्त्विकत्वमुक्त्वा समाध्यवस्थायां मनसि तमेव जीवं तादृशं प्रतिपादयति। अतो जीवोऽपि वस्तुतस्तादृश एवेति प्रकृतेऽपि परामर्शात् स एवेति चेत्। एवमाशङ्का परिहरति। तुशब्देन नायमर्थो दूष्यते किन्तु किञ्चिदन्यदस्तीति न नकारप्रयोगः। तदाह। आविर्भूतस्वरूपः। स्वाप्ययसम्पत्त्योर्भगवदाविर्भावो जीवे भवति। नृसिंहोपासकस्य नृसिंहाविर्भाववत्। ब्रह्मण उपदेशसमये भगवदाविर्भावात् सर्वत्र स्वात्मानं पश्यन्निन्द्रेऽपि तथैवोपदिष्टवान् प्रजापतिः। अन्यथा प्रतिबिम्बादावमृताभयवचनं मिथ्या स्यात्। इन्द्रे त्वाविर्भावाभावात् प्रजापत्यसन्निधाने विपरीतं पश्यति। अतस्तावन्मात्रदोषपरिहारायान्यथोपदेशः स्वप्नादिषु तथा प्रकृतेऽपि सुषुप्त्यवस्थायां भगवदाविर्भावात् तथा वचनं। तस्मादुभयमपि भगवत्प्रकरणमेव। एवमन्यत्रापि भगवदावेशकृता भगवद्धर्माभिलापा उह्याः। तस्माद्दहरः परमात्मैव।

## अन्यार्थश्च परामर्शः ॥ २० ॥

परामर्शप्रयोजनमाह । अन्यएवार्थः प्रयोजनं यस्य तस्माद्यमदहरस्थो एवम्वित् स्वर्गलोकमेति स्वर्गेवं ग्याने हि ब्रह्मसुखं फलं ब्रह्मज्ञानापेक्षायाम्पयुज्यते भगवतश्च तदाविर्भावो भवतीति चकारार्थः। सम्पत्तौ भगवदाविशकथनार्थं ब्रवीति च स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविःकृतं हीति चतुर्थे। तस्मान्न परामर्शेनान्यथाव्याख्यानम् ।

## अल्पश्रुतेरिति चेत्तदुक्तम् ॥ २१ ॥

ननु न वयं जीव उपपत्तिरस्तीति जीवप्रकरणं कल्पयामः। किन्तु ब्रह्मणि नायमर्थ उपपद्यते। अल्पश्रुतेः। अल्पे हि पुण्डरीके कथं भगवद्वस्थानम्। व्यापकत्वश्रवणात्। यावान् वा अयमाकाश इति। तस्मात् विरोधपरिहाराय जीवएवाराग्रमात्रस्तथा भवत्विति कल्प्यत इति चेत्तर्हि भवान् सम्यग्विचारकोऽस्मदीयएव परं तु तत् समाधानं पूर्वमेवोक्तं निचाय्यत्वादेवं व्योमवच्चेत्यत्र। तत्र प्रष्टव्यम्। विरोधस्तु सर्व्वभवनसमर्थे ब्रह्मणि नाशङ्कनीयः। तथा पुरुषशरीरस्य।

पुरुषत्वे च मां धीराः साङ्ख्ययोगविशारदाः।

आविस्तरां प्रपश्यन्ति सर्वशक्त्युपबृंहितमिति ॥

भगवद्वाक्यात्। तस्माद्भगवानेव दहर इति सिद्धम्।

## अनुकृतेस्तस्य च ॥ २२ ॥

दहरविरुद्धं वाक्यमाशङ्क्य परिहरति। न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्त-

मनुभाति सर्व्वं तस्य भासा सर्व्वमिदं विभातीति कठवल्यामन्यत्र च श्रूयते। यत्तच्छब्दानामेकार्थत्वं प्रकरणात् ब्रह्मपरत्वञ्चावगतम्। अर्थोच सन्देहः। यस्मिन् द्यौरित्यत्र सूर्य्यादीनां ब्रह्माधारत्वमुक्तम्। अस्मिन् वाक्ये पूर्व्वार्द्धे तत्र तेषां भानं निषिध्यते।

यत्र यत् सर्व्वदा तिष्ठेत् तत्र चेत्तत्र भासते।
न भासेताप्यपेक्षायां कर्म्मत्वे श्रुतिबाधनम्॥

यत्रेत्यधिकरणसप्तमी। यत्र लोकान्तरस्थितानामप्यभानं तत्राग्नेः का वार्त्तेति वचनात् सत्यलोकस्थितः कश्चित्तेजोविशेष एव वाक्यार्थ इत्येवं प्राप्ते उच्यते। अनुकृतेस्तस्य। भगवदनुकारार्थमेवैतद्वचनं स्वतो भाननिषेधः पूर्व्वार्द्धे। सर्व्वोऽपि पदार्थः तमेवानुकरोति सूर्य्यं रश्मय इव छाया पुरुषमिव। तस्माद्वाक्ये भगवदनुकारित्ववचनान्नान्यार्थकल्पनम्*।

किञ्च। तस्य भासा सर्व्वमिदं विभातीति सूर्य्यादीनां स्वतःप्रकाशो नास्त्येव घटवत् भगवत्प्रकाशेनैव प्रकाशवत्त्वमिति चकारार्थः। तस्मात् स्वतोऽभाने लक्षणया कर्म्मत्वेवा भगवत्परत्वे सिद्धे नान्यार्थकल्पनम्।

अपि च स्मर्य्यते॥ २३॥

व्याख्यातेऽर्थे सम्मत्यर्थमाह। अपीति समुच्चयः।

न तद्भासयते सूर्य्यो न शशाङ्को न पावकः।
यदादित्यगतं तेजो जगद्भासयतेऽखिलम्॥

---

* नानार्थकल्पन इति क०।

यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्। इति च तस्माद्भगवानेव सर्व्वावभासकास्तमेव सर्व्वमनुकरोतीति सिद्धम्।

## शब्दादेव प्रमितः ॥ २४ ॥

प्रसङ्गात् पुनर्वाधकान्तरमाशङ्क्य परिहरति। अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति। ईशानो भूतभव्यस्य न ततो विजुगुप्सति*। तथा अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमक इति तत्रैव श्रूयते। यावान्वा अयमाकाश इति व्यापकत्व-मन्तःस्थितस्य प्रतीतम्। अङ्गुष्ठमात्रताचात्र प्रतीयते। अतो विरोधाज्जीवस्यैव लोकान्तरं त्वदेहवत्। उपासनार्थमीशा-नत्वादिधर्माः। अङ्गुष्ठमात्रं पुरुषं नियकर्ष यमो बलादिति तन्निश्चयार्थम्। तस्मादङ्गुष्ठमात्रो न भगवानेवं प्राप्तमत उत्तर-माह। शब्दादेव प्रमितः। अत्र सन्देहएव न कर्त्तव्यः। शब्दा-देव प्रकर्षेण विमानात्। यथा दहरवाक्ये सूक्ष्मस्यैव व्यापकत्वं तथाऽङ्गुष्ठमात्रस्येशानत्वं। यदि भगवान् तादृशो न स्यात् अन्यस्य तादृशत्वं नोपपद्येत। तस्माद्भगवतः सर्व्वतःपाणिपा-दान्तत्वाद् यत्र यावानपेक्ष्यते तत्र तावन्तं श्रुतिनिरूपयतीत्य-ङ्गुष्ठमात्रः परमात्मेति सिद्धम्।

## हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥ २५ ॥

नन्वनेकरूपत्वं विरुद्धधर्म्मवत्त्वं माहात्म्यार्थं स्वरूपे निरूप यति। प्रादेशमात्रत्वस्य ध्यानार्थं अङ्गुष्ठमात्रत्वस्य कोपयोग इति चेत् तत्राह। तुशब्देन निःप्रयोजनत्वं निराक्रियते। अस्ति प्रयो

* विजुगुप्सते इत्यदोष।

जनं तदाह। हृदि अङ्गुष्ठमात्रं निरूप्यते केन हेतुना अपेक्षया ईश्वरकार्य्यापेक्षया। ईश्वरः सर्व्वभूतानां हृद्देशेऽर्जुन तिष्ठतीति स्मृतेः। रक्षार्थमङ्गुष्ठमात्र इत्यर्थः। ननु प्रमाणान्तरत्वे किमितत्र सम्भवति तत्राह। मनुष्याधिकारत्वात्। मनुष्यानधिकृत्येदं स्वल्पाख्यानं प्रवृत्तं। अतो मनुष्याणां हृदयस्याङ्गुष्ठमात्रत्वात् यद्यपि हृदयं स्थूलं तथापि धर्म्मरूपं तावदेव तावन्मात्रस्यैवाव-दानश्रवणात्। तस्मादङ्गुष्ठमात्रस्यैव सर्व्वधर्म्मरक्षकत्वादङ्गुष्ठ-मात्रोऽत्र भगवानेवेति सिद्धम्।

## तदुपर्य्यपि बादरायणः सम्भवात् ॥ २६ ॥

अङ्गुष्ठमात्रनिरूपणार्थं मनुष्याधिकारे निरूपिते कस्यचित् भ्रमो भवेत्। सर्व्वत्र ब्रह्मविद्यायां मनुष्याणामेवाधिकार इति। तन्निराकरणार्थं देवादीनामधिकारमाह। तदुपर्य्यपि मनुष्या-पेक्षयाऽर्व्वाक्तनानामधिकारो नास्ति। तत्रापि वैदिकधर्म्मेष्टे-तोस्त्रैवर्णिकानां धर्म्मयुक्तानामागतम्। ततोऽपि ये साध्यादयो धर्म्मयुक्तास्तेषामप्यधिकारः। तत्र जैमिनिप्रभृतीनां न सम्मति-रिति स्वनामग्रहणं विशिष्टत्रैवर्णिकामारभ्य प्रजापतिपर्य्यन्तं भूतानन्दिनामधिकारं मन्यते बादरायणः। कुतः। संभवात्। सं-भवति तेषां ज्ञानाधिकारः। धर्म्मज्ञानाभ्यां सातिशयाभ्यां तादृश-जन्मसम्भवात्। न हि तेषां पूर्व्वसंस्कारो लुप्यते। अक्षर-पर्य्यन्तं गतोत्कर्षश्रवणात् उपर्य्यपेक्षा। अतोऽक्षरप्राप्तिः शुद्ध-ब्रह्मविद्याहेतुकत्वादुत्तरोत्तरमुपदेष्टॄणां विद्यमानत्वात् प्रजा-पतिपर्य्यन्तं सर्व्वेषामधिकारः सम्भवति। संभववचनात् दुर्लभा-

धिकारस्तत्रेति सूचितम् । योयो देवानां प्रत्यबुध्यत स एव तद्-
भवत् तथर्षीणां तथा मनुष्याणामिति । तदुपर्य्यप्यधिकारः सिद्धः ।

विरोधः कर्म्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॥ २७ ॥

नन्वेवमुपरितनानां ज्ञानाधिकारे स्वीक्रियमाणे तत्पूर्व्व-
भाविन्यप्यधिकारो वक्तव्यः कर्मणि वेदाध्ययने उपनयनादिषु
च । ततश्च तेषां ब्राह्मण्याद्यभावादेवद्रव्याद्यभावाच्च पौराणिकेन
मतेन देवान्तराभावाच्च तदभावेऽपि क्रियमाणे कर्मणि स्मृति-
विरोध इति चेत् । न । अनेकप्रतिपत्तेर्दर्शनात् । बह्वीनां प्रति-
पत्तिर्दृश्यते । बहवोऽत्र कर्मणि प्रवर्त्तमाना दृश्यन्ते । साध्या वै
देवाः सुवर्गकामा एतत् षड़रात्रमपश्यन् तमाहरन्तेनायजन्त
सोऽग्निष्टोमेन वसूनयाजयत् स उक्थेन तु रुद्रानयाजयत्
सोऽतिरात्रेणादित्यानयाजयदित्यादि यथैकशतं वर्षाणि प्रजा-
पताविन्द्रो ब्रह्मचर्य्यमुवासेति । भूमावागत्य वृत्रं हत्वा यज्ञ-
करणञ्च श्रूयते । देवा वै सत्रमासतेत्यादौ दर्शनवचनात् स्वस्यापि
ऋत्विक्त्वं कर्मकरणञ्च द्योतयति । अथवा । सर्व्वपदार्थानाम-
नेकप्रतिपत्तिर्बहुधोपयोगो वेदे दृश्यते यथा चतुर्धाकरणादि
परिधिप्रहरणादि तुषोपवापादि तद्विद्यमाने क्रियते नाविद्य-
माने तथा यत्र ये पदार्था न सन्ति तत्र कर्म्म तदभावेऽपि
भवति । तथाहि दृश्यते । पर्व्वते सोमवाहका नोऽभावयन् ।
यज्ञेन यज्ञमयजन्त देवाः ।

इति संभृतसंभारः पुरुषावयवैरहम् ।
तमेव पुरुषं यज्ञं तेनैवायजमीश्वरम् ।

इत्यादिवाक्यैः सर्व्वसंप्लुपपत्तिश्च । आधुनिकान् प्रति वेद-
विभागात् जैमिनेस्तथानिर्णयः । तस्मात् कर्माधिकारः कर्म-
करणञ्चोपर्य्यपि सिद्धम् ।

शब्द इतिचेन्नातःप्रभवात् प्रत्यक्षानुमानाभ्याम् ॥ २८ ॥

नन्वास्तु कर्मकरणे विरोधः शब्दे तु भविष्यति । अर्थ-
ज्ञानानन्तरं हि कर्मकरणं वेदाद्यार्थज्ञानं । तत्र साध्यादीनां
वेदएव कर्मकरणं श्रूयते तत्र ज्ञाने कर्मकर्त्तृविरोधः । अन्य-
कल्पनायां त्वनवस्थाव्यवस्थापकपदाभावात्* । तस्मादेशो वसूनां
वसुत्वं वदन् वसूनामधिकारं वदेत् । वदन् वा कथमनित्यो न
भवेदिति चेत् । न । अतः प्रभवात् । अतः शब्दात् प्रभवः शब्दोक्त-
पदार्थानां वेदोक्ताः सर्व्वएव पदार्था आधिदैविकाएव पुरुषा-
वयवभूताः सर्व्वानुकारित्वाद् भगवतः अतो नामप्रपञ्चो वेदा-
त्मकोभिन्नएवाङ्गीकर्त्तव्यः । स केवलं शब्दैकसमधिगम्यः वेदैश्च
सर्व्वैरहमेव वेद्यइति । अतस्तस्य प्रपञ्चस्य भिन्नत्वान्न विरोधः
शब्दे । कथमेवमत आह । प्रत्यक्षानुमानाभ्याम् । प्रत्यक्षं
तावदिदानीमपि यजमानः यजमानत्वं ऋत्विजश्च स्वस्वत्वं
वेदादेवावगच्छन्ति । नचाकृतिमात्रवाचकत्वेनाविरोधः सर्व्वत्र
लक्षणाप्रसङ्गात् । यः सिक्तरेताः स्यादित्यादिषु विरोधश्च ।
न च प्रवृत्तिनिमित्तस्यैव वाच्यत्वं प्रवृत्तिवैयर्थ्यापत्तेः । सङ्केतग्रह-
विरोधाच्च । सर्व्वस्यापि पदार्थस्य भगवत्त्वाभावानुपस्थितिदोषः ।
सङ्केतग्रहेऽपि जमदग्नीनां पञ्चावत्तमित्यनुमानं न हि स्वयं

* अनवस्थाव्यवस्थापकाभावादिति क० ।

आमदग्ध इति प्रत्यचोऽनुभवोऽस्ति । परोचव्यवहारश्चैव अनुभवत्वमिति ब्रह्मवादः । तस्मात् प्रत्यचानुमानाभ्यामिदानीन्तनभौतिकयज्ञपदार्थेषु भगवदवयवावेशस्तथामुत्रापि देवादिलोके । तस्मात् वैदिकः पदार्थः सर्व्वोऽप्याधिदैविको भिन्न इति सिद्धम् ।

अतएव च नित्यत्वं ॥ २९ ॥

साधिकां विशेषोपपत्तिमाह । अतएवास्मादेव हेतोर्वेदस्य नित्यत्वं सर्व्वप्रपञ्चवैलक्षण्येन । चकारात् ब्रह्मतुल्यत्वम् । शब्दब्रह्म वेदएव इत्यादिवाक्यत्वम् । अस्मात् सृष्टेर्ब्रह्मोपादानस्य सर्व्वज्ञतया कथनं तस्माद्ब्रह्मनिरूपणार्थम् । बन्धिका ह्येषा मोचिका तु सा । अतएव चापीयामप्यत्र मोक्षः । निश्वसितवचनाच्च तस्याऽप्ययं प्राणभूतो नित्य इत्यर्थः । प्राधान्यात् ब्रह्मविद्या परा विद्या । प्रपञ्चभेदादेव लौकिकवैदिकाभ्युदयव्यवहारभेदौ । तस्मादाधिदैविकप्रतिपादकत्वात् वेदस्य नित्यत्वम् ।

समाननामरूपत्वाच्चावृत्तावप्यविरोधो, दर्शनात् स्मृतेश्च ॥ ३० ॥

एवं शब्दप्रमाणविचारेण वेदप्रामाण्यसिद्धये भिन्नएव प्रपञ्चो ह्याधिदैविकः सर्व्वत्र सिद्धः । इदानीमर्थबलविचारेणोत्तरकाण्डे किञ्चिदाशङ्क्य परिह्रियते दार्ढ्यार्थम् । नन्वस्य प्रपञ्चस्यानुकारित्वेन वाच्यत्वेन वा स्वीक्रियमाणत्वे सृष्टिप्रलययोर्विद्यमानत्वादनित्यसंयोगः प्राप्नोति तत्राह । समाननामरूपत्वादावृत्तावप्यविरोधः । यद्यपि प्र[illegible]रूपत्वादाविर्भावतिरोभावेत्यैव तथात्वाघात्तिग्रहापि तथापि लोक-

बुद्ध्यनुसारेणावृत्तावपि समाननामरूपत्वात् समुद्रे जलप्रक्षेपवत्। पुनरुपादाने तदेवेति निश्चयाभावेऽपि नामरूपयोस्तुल्यत्वादन्यस्य भेदकस्याभावात् नानित्यसंयोगविरोधः। कुतः। दर्शनात्। दृश्यते हि। तथा पितृमातृस्त्रीभर्तृशरीरगङ्गादिषु तदेवेदमिति व्यवहारस्य सिद्धत्वात्।

सूर्य्याचन्द्रमसौ धाता यथापूर्व्वमकल्पयत्।
दिवञ्च पृथिवीञ्चान्तरिक्षमथोस्वः* ॥ इति स्मृतेश्च।
सर्व्ववेदमयेनेदमात्मनात्मात्मयोनिना।
प्रजाः सृज यथापूर्व्वं याश्च मय्यनुशेरते ॥

इत्यादि स्मृतेः। सर्व्वस्मृतेश्च। ऋषीणां पूर्व्वचरितस्मरणं स्मृतिरुच्यत इति। अतोऽर्थबलविचारेऽपि पदार्थानां नित्यत्वाच्च न वेदस्यानित्यसम्बन्धः।

मध्वादिष्वसम्भवादनधिकारं जैमिनिः ॥ ३१ ॥

अर्थबलविचारएवैकदेशेन पूर्व्वपक्षमाह। ननु मध्वादिविद्यासु देवानामनधिकारात् सर्व्वत्रैवानधिकारः। तथाहि। असौ वा आदित्यो देवमधु तस्य द्यौरेवेत्यादिना सूर्य्यस्य देवमधुत्वं प्रतिपादितम्। रश्मीनां वेदत्वञ्च। तत्र वसुरुद्रादित्यमरुत्साध्याः पञ्च देवगणाः स्वमुख्येन मुखेनामृतं दृष्ट्वैव तृप्यन्ति। पञ्चविधा एव च देवाः। स्वतःसिद्धं च तेषां तन्मधु। अनुपासकत्वान्न देवान्तरकृता कल्पना कृतार्थत्वाच्च। ब्रह्मणोऽपि देवत्वं। आदिशब्देन, सर्व्वाण्येव देवोपासनविद्या गृहीताः। अतस्तेषा-

* स्व इति वा पाठः।

मुपास्यत्वात् कृतार्थत्वाच्च नाधिकारः। न हि प्रयोजनव्यतिरेकेण कस्यचित्प्रवृत्तिः सम्भवति। मोक्षस्याप्यधिकारनिवृत्त्यानुत्तरमार्गवर्त्तित्वात् स्वतएव सिद्धेः। यावदधिकारमिति न्यायात्। यस्तनयाजयदित्यत्रापि भाविन्येव संज्ञा। तस्मात् मनुष्याधिकारकमेव ज्ञानं कर्म्मेति न देवानामधिकार इति जैमिनिराचार्य्यो मन्यते। मनुष्याणामेव ज्ञानकर्म्मणोस्तरतमभाववतां तत्तद्रूपभोगानन्तरं मोक्षप्राप्तेरिति।

## ज्योतिषि भावाच्च ॥ ३२ ॥

किञ्च। तेषां सर्व्वेषामनधिकारः प्रत्यक्षत एव दृश्यते। सर्व्वे हि नक्षत्रादिरूपेण महाभोगवन्तो जगदवभासकत्वेन ज्योतिश्चक्रे दृश्यन्ते। अग्निः मूर्द्धा प्रथमं काण्डमित्यादि श्रुतेश्च। न हि तादृशां प्राप्तैश्वर्य्यवतां सर्व्वोपास्यानां मोक्षदातॄणां ज्ञानकर्म्मणी कस्यचनोपयोगोऽस्ति। तस्मादनधिकारएव देवानामित्येवं प्राप्ते उच्यते।

## भावन्तु बादरायणोऽस्ति हि ॥ ३३ ॥

तुशब्दः पक्षं व्यावर्त्तयति। भावं देवानामधिकारस्य सद्भावं बादरायण आचार्य्यः गौणसिद्धान्ताभावाय स्वनाममग्रहम्। किमार्षेण ज्ञानेन तथा सति तुल्यत्वमत आह। अस्ति हि। अस्ति वेदे प्रजापतिरकामयत प्रजायेयेति स एतदग्निहोत्रं मिथुनमपश्यत् तदुदिते सूर्य्ये जुहोदिति देवा वै सत्रमासतेत्यादिभिः कर्म्माधिकारो निश्चितः। तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवदित्यादि। तथेन्द्रप्रजापतिसम्वादे ब्रह्म

देवानामिति च। एवमेवम्विधैर्वाक्यैर्देवानामप्यधिकारोऽस्ति। यत्र च पुनर्देवानां फलभोग एव प्रतीयते न करणं तत्रापि तेषामधिकारोऽङ्गीकर्त्तव्यः। हि युक्तोऽयमर्थः। एते हि वसव आधिदैविकभगवदवयवभूताः अनयनात्। अन्यथा वसुत्वादि-विरोधः। यद्वसूनां प्रातःसवनमित्यादिवत्। न हि जीव-विशेषा इष्ट्वा इष्यन्ति। तस्मादिदं ब्रह्मप्रकरणमेव। योऽपि देवोपासकत्वं प्रतीयते स भगवदंश एवाधिदैविकः। न वा पूर्वकल्पेन निर्णयः। तथा सति तेषामभावात्। अनुपा-स्यत्वं अनित्यता च वेदस्य स्यात्। तस्माद्देवानामप्यधिकार इति शब्दबलविचारेण युक्त इति सिद्धं।

शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि ॥ ३४ ॥

इदानीं शूद्रस्याधिकारो निराक्रियते। यथा कर्म्मणि एतया निषादस्थपतिं याजयेत्सा हि तस्येष्टिरिति श्रुतेर्हविष्कृदा-धावेति शूद्रस्येति लिङ्गात्। दोहादौ च शूद्रस्याधिकारः। एवमिहापि संवर्गविद्यायां शूद्रस्याधिकार इति। तन्निरा-करणार्थमिदमधिकरणमारभ्यते। एवं हि श्रूयते। जानश्रुतिर्ह पौत्रायण इत्यत्र हंसवाक्यश्रवणानन्तरं सयुग्वतो रयिकस्य समीपं गतः। जानश्रुतिः पौत्रायण रयिकेमानि* षट् शतानि गवामित्यादिना देवतां पृष्टः प्रत्युवाचाह हारेत्वा शूद्र तवैव सह गोभिरस्त्वित्यादिना जानश्रुतिं शूद्रशब्देन सम्बोध्य पुनश्च शूद्रानेन मुखेनेत्युक्त्वा संवर्गविद्यामुपदिष्टवान्। अतोऽत्र

* रैक्व इति वा पाठः।

विद्यायां जातिशूद्रस्याप्यधिकार इत्याशङ्क्य परिहरति। नात्र शूद्रशब्दो जातिशूद्रवाची किन्तु सशोकयुक्तस्त्वमत्र नाधिकारीति तथा सम्बोधनं। तदा शुक् शोकः अस्य जानश्रुतेः समजनि। तत्र हेतुः। तदनादरश्रवणात्। तस्मात् हंसादनादरस्य श्रवणात् कम्वर एनमेतत् सन्तं सयुग्वानमिव रैक्कमात्थेति स्वापकर्षश्रवणात्। किमतो यद्येवमत आह। तदाद्रवणात्। तदनन्तरं आद्रवणात् शुचमनु आद्रवतीति शूद्रः परोक्षवादार्थं दीर्घः सर्वज्ञत्वख्यापनाय। रूढिर्योगमपहरतीति न्यायात् कथमेवमतआह। सूच्यते हि। तस्य सर्वज्ञत्वं सूच्यते हंसवाक्यात्। शोके जाते त्वमागत इति। अन्यथा प्रथमस्य धिकारवचनमनर्थकं स्यात्। युक्तायायमर्थो ब्रह्मविदः सर्वज्ञतेति तस्य मात्सर्य्यनिराकरणं वा सम्बोधनफलम्। तस्मात् शुचं प्रत्याद्रवणादेव शूद्रपदप्रयोगो न जातिशूद्रवाची। कुत एवमत आह।

क्षत्रियत्वावगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ॥ ३५ ॥

जानश्रुतेः पौत्रायणस्य क्षत्रियत्वमवगम्यते। गोनिष्करथकन्यादानात्। न हि क्षत्रियप्रभृतयो ह्येते क्षत्रियादन्यस्य सम्भवन्ति। राजधर्मत्वात्। शूद्रो न्यो ब्राह्मणाय भार्य्यात्वेन कन्यां दातुं शक्नोति। न वा प्रथमहंसवाक्यं शूद्रे सङ्गच्छते। उपदेशाच्चेति चकारार्थः। तथापि संवर्गविद्यायां शूद्रस्यैवाधिकारं मन्वानस्य निराकरणार्थं हेतुमाह। उत्तरत्र चैत्ररथेन लिङ्गात्। अथ ह शौनकञ्च कापेयमभिप्रतारिणञ्च काक्षसेनिमित्युत्तरत्र ब्राह्मणक्षत्रियौ तौ निर्दिष्टौ। कापा

चैना यस्येति कवषेनस्यापत्यद्वाचषेनिरिति। अस्य व्याख्यानं चैत्ररथ इति। चित्रा रथा यस्य तस्यापत्यत्वेन चैत्ररथेन कथारूपा रथा इति व्याख्यानं। एतेन वै चित्ररथद्वापेया अयाजयन्निति शौनकस्य कापेयोयाजकस्य याज्यश्चित्ररथस्य पुत्रः कापेयसेनिरिति। ब्रह्मचारी ब्रह्मवित्। इमौ तु संवर्गविद्योपासकौ प्राणाय हि भिक्षा तस्मात् ददतुः उभावपि ह्येतौ भगवतः तेन प्रकृतेऽप्येतौ गुरुशिष्यौ ब्राह्मणक्षत्रियावेवेति गम्यते। तस्मान्न जातिशूद्रः संवर्गविद्यायामधिकारी।

## संस्कारपरामर्शात्तदभावाभिलापाच्च॥ ३६॥

इदानीं शूद्रस्य ज्ञानिदर्पि ब्रह्मविद्यायामधिकारयेद्यपि कल्पेत। तत्तु नास्ति। सर्वत्र संस्कारपरामर्शात्। उपनयनसंस्कारः सर्वत्र परामृश्यते। तं होपनिन्ये। अधीहि भगव इति होपससाद तान् गृहानुपनीयेत्यादिनिर्देशेषु उपनयनपूर्व्वकमेव विद्यादानं प्रतीयते। शूद्रस्य तु तदभावाभिलापात् चतुर्थ एकजातिस्तु शूद्र इति। न शूद्रे पातकं किञ्चिन्न च संस्कारमर्हतीति शूद्रस्य संस्कारनिषेधात्। चकारात् न शूद्राय मतिं दद्यादिति निषेधः।

## तदभावनिर्द्धारणे च प्रवृत्तेः॥ ३७॥

इतश्च शूद्रस्य न सर्व्वथाऽधिकारः तदभावनिर्द्धारणे शूद्रत्वाभावनिर्द्धारणएव गुरुशिष्यभावप्रवृत्तेः। सत्यकामो ह जाबाल इत्यत्र गौतमः सत्यकाममुपनिन्ये। नैतदब्राह्मणोविवक्तुमर्हतीति सत्यवचनेन शूद्राभावं ज्ञात्वैव। चकार एवार्थे। चकारेण

निर्धारणमुभयज्ञापनार्थं वर्णितं शूद्राभावश्च। तस्मान्न शूद्रस्याधिकारः।

श्रवणाध्ययनार्थप्रतिषेधात् स्मृतेश्च ॥ ३८ ॥

दूरे ह्यधिकारचिन्ता वेदस्य श्रवणमध्ययनम् अर्थज्ञानं त्रयमपि तस्य प्रतिषिद्धम्। तत्सन्निधावन्यस्य च। अथास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रतिपूरणमिति। पद्यु ह वा एतत् श्मशानं यच्छूद्रस्तस्माच्छूद्रसामीप्ये नाध्येतव्यमिति। उदाहरणे जिह्वाच्छेदो धारणे शरीरभेद इति। दोहादौ शूद्रसम्बन्धे मन्त्राणामभावएव। स्मृतिमयुक्त्यापि वेदार्थे न शूद्राधिकार इत्याह। स्मृतेश्च। वेदाक्षरविचारेण शूद्रः पतति तत्क्षणादिति। चकारस्त्वधिकारणसम्पूर्णत्वद्योतकः। ज्ञानपौराणिकज्ञानादौ तु कारणविशेषेण शूद्रयोनिगतानां महतामधिकारः। तत्रापि न कर्म्म जातिशूद्राणां। तस्मान्नास्ति वैदिके क्वचिदपि शूद्राधिकारः इति स्थितं।

कम्पनात् ॥ ३९ ॥

कठवल्लीविचारेण निश्चिताद्यधिकारिणः। वाक्यान्तरस्य तत्त्वमिष्यते प्रसङ्गावधि। यदिदं किञ्च जगत्सर्वं प्राण एजति निःसृतं महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्तीति। अत्र प्राणवज्रोद्यमनशब्दाभ्यां सन्देहः। किं प्राणोपासना इन्द्रोपासना वा ब्रह्मवाक्यं वेति। बाधकशब्दस्य स्तुतित्वान्न प्रकरणेन निर्णयः। अमृतं वै प्राणा इति श्रुतेः। प्राणोपासकस्याप्यमृतप्राप्तिर्युज्यते इन्द्रसाध्यमरत्वात्। वज्रमुद्यतमिति

प्राणपदे वियोजने मरणजनकत्वात् भयद्रूपत्वं इन्द्रपदे बलाधिष्ठातृत्वात् प्राणत्वं। तस्मात् प्राण इन्द्रोवा वाक्यार्थ इति एवं प्राप्ते उच्यते। कम्पनात्। कम्पनमत्र प्रथमवाक्यार्थः स च भयहेतुकः। अविशेषेण सर्व्वजगत्कम्पनं भगवद्धेतुकमेव भवति। नचैकान्ततो वज्र इन्द्रस्यैवायुधं भवति अग्निहृदयस्यात्। तस्य तातस्य हृदयमाछिद्रत् सायनिरभवदिति श्रुतेः। तस्मात्मारकरूपमेवेदं भगवतः प्राणशब्दवाच्यत्वं तु पूर्व्वमेव सिद्धं। तस्मात् सर्व्वजगत्कम्पनं भगवत्कृतमिति भगवानेव वाक्यार्थः। ॥

## ज्योतिर्दर्शनात् ॥ ४० ॥

यएष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरभिसम्पद्य स्वेन रूपेणाभिनिष्पद्यत इति। तत्र संशयः। परं ज्योतिर्महाभूतरूपं ब्रह्म वेति।

ब्रह्मधर्म्मास्तु ये केचित् विना युक्त्या च साधिताः।

निर्णायकास्ततोऽप्यन्ये चत्वारोऽत्र निरूपिताः।

तत्र रूढ्योपपत्त्या च महाभूतमेव ज्योतिरित्येवं प्राप्ते उच्यते। ज्योतिर्ब्रह्मैव। कुतः। दर्शनात्। दर्शनं सर्व्वत्र दर्शनं न्याय इति यावत्। सुषुप्तौ सर्व्वत्र सता सोम्य तदा सम्पन्नो भवति। सति सम्पद्य न विदुः सति सम्पद्यामह इति। अहरहर्ब्रह्मलोकं गच्छन्तीत्यादि प्रदेशेषु ब्रह्मसम्पत्तिरेवोक्ता। अत्रापि सम्प्रसादवचनात् परं ज्योतिर्ब्रह्मैव। तस्मादाकाशनशब्दो ब्रह्मस्थाने पठितस्तद्वाचक एवेति।

## आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ ४१ ॥

आकाशो वै* नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्मेति श्रूयते। तत्राकाशशब्दे सन्देहो भूताकाशः परमात्मा वेति। नामरूपनिर्व्वाहकत्वमवकाशदानात् भूताकाशस्यापि भवतीति न ब्रह्मपरत्वमन्यस्य च नियामकस्याभावादित्येवं प्राप्ते उच्यते। आकाशः परमात्मा अर्थान्तरत्वादिव्यपदेशात्। यद् भूताकाशस्य प्रयोजनं श्रुतिसिद्धं तस्मादन्यस्य व्यपदेशः कार्य्यान्तरादिव्यपदेशश्च। यत्रैव हि सिद्धवत्कारेणोत्कृष्टधर्म्मा अतदीयास्तदेव ब्रह्मेति। नापि नामरूपनिर्व्वाह आकाशस्य माहात्म्यहेतुर्भवति। वै निश्चयेनेति सिद्धवत्कारान्नोपासनापरत्वं निर्व्वाहस्य ब्रह्मधर्म्मत्वं न श्रुत्यन्तरसिद्धमिति विचारः। † अर्थापत्तिसूत्रस्त्वयमेव न्याय इति तस्मात् यत्रैवातद्धर्म्मकथनमन्यवाक्यस्य तत्रैव ब्रह्मपरत्वमिति सिद्धम्।

## सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ ४२ ॥

बृहदारण्यके ज्योतिर्ब्राह्मणे याज्ञवल्क्य किं ज्योतिरयं पुरुष इत्यारभ्य अभयं हि वै ब्रह्म भवति। य एवं वेदेत्यन्ते सन्देहः किं ब्रह्मवाक्यमेतत् उत जीवस्येति जीवस्य ब्रह्मत्वप्रतिपादने जीववाक्यत्वं। स्वातन्त्र्येण ब्रह्मण एव ज्ञानकर्म्मत्वे ब्रह्मवाक्यत्वमिति। यद्यप्यर्थज्ञाने न सन्देहः तथापि नियामकं

---

* आकाशो ह वै इति वा पाठः।

† अर्थापत्तिसूत्रत्र इत्यारभ्य ब्रह्मपरत्वं सिद्धमित्यन्तं पुस्तके नास्ति। तत्तु लिपिकरप्रमादादित्यनुमीयते।

हेतुमाह भेदेनेति। तस्यायमर्थः। किं ज्योतिरयं जीव इति प्रश्ने सूर्य्यचन्द्राग्निवाङ्निराकरणानन्तरं आत्मज्योतिः आभा भगवानेवास्य ज्योतिरित्युत्तरानन्तरं कतम आत्मेति प्रश्ने योऽयं विज्ञानमयो ज्ञानरूपः इन्द्रियेषु हृदि च प्रकाशमान इत्युत्तरे जीवोऽप्येतादृश इति तन्निराकरणार्थं स समानः सन् जीवतुल्यः सन् क्रीडतीत्याह। तयोभयधर्म्मा अप्युच्यन्ते क्रिया-मात्रस्य सम्मूलत्वाय। तत्र हि चत्वारि स्थानानि अयं लोकः परोलोकः स्वप्न इति त्रयं जीवस्य समानतया अनुभवति। तत्र स्वप्नस्य मिथ्यात्वात् द्वयमेव सुषुप्तश्च चतुर्थं। जीवस्य तु मोक्षोऽपि। तत्रास्मिन् लोके जीवस्थानीभित्वं प्रत्यक्षसिद्धम्। मोक्षेऽैक्यं स्वप्नस्तु माया अत.परं द्वयमवशिष्यते। तत्र तुर्य्यैव भेदः प्रति-पादितः। तत्र भगवतोजीवसाम्ये अन्तःकरणेन्द्रियधर्म्मांः प्राप्नुव-न्तीति तन्नानुकरणमाह ध्यायतीव लेलायतीवेति। बुद्धि-सहितः स्वयमेव स्वप्नोभूत्वा जागरणानुसन्धानं न करोति एवं जाग्रत्स्वापौ ब्रह्मणो लोकद्वयं जीवस्य स्थानत्रयमाह। स वा अयमिति कण्डिकाद्वयेन। स इति पूर्व्वप्रक्रान्तो जीवः। जीवस्य शरीरेन्द्रियाणां दुःखदायत्वमेव। अथेति भगवच्चरित्रम्। स तु स्वस्थानन्दं जीवस्य दुःखं च पश्यति। भेदोऽथशब्दात् जीवस्थानी-यित्वात् येन प्रकारेणायं जीवः परलोके गच्छति तमुपायं भगवानेव करोति। अथो खल्विति भगवतो न जागरितस्वप्न-भेदोऽस्तीति पक्षः परं स्वयंज्योतिष्ट्वं तत्र स्पष्टम्। एतावद्दूरे भगवच्चरित्रमङ्गीकृत्य जीवविमोक्षार्थं प्रश्नः। स वा एष इति जीववाक्यं। तस्य सहजः सङ्गोनास्तीति स्वप्नसङ्गाभावं प्रत्यक्षतः

प्रदर्शयन् असङ्गत्वमाह। तावतापि जागरणावस्थायामसङ्गत्व-ज्ञानाय पुनः प्रश्नः। तत्र मत्स्यदृष्टान्तोऽवस्थाभेदज्ञानाय क्रियाज्ञानप्रधानं श्येनसुपर्णदृष्टान्तस्तु सुषुप्तौ भगवत्स्वरूप-प्राप्तये। अवस्थान्तौ यत्रेति च भगवान् यथावर्णनाड़ीकृतएवास्य क्लेशो भगवत्कृतएवानन्द इति। स्वप्नानन्दो भगवद्रूपः परमोलोकः सुषुप्तिस्थकामरूपो भगवान्। अत्र ज्ञानाभावादुभयोः स्पष्टतया भेदनिर्देशः। शारीरः प्राज्ञ इति नाज्ञाच्छादनाभावोऽतिच्छन्दः तत्र भगवत्स्वरूपं गतस्य वाह्येन्द्रियधर्माभावमाह। विजा-नीयादित्यन्तेन वाह्येन्द्रियाणां सलिलत्वमिति पूर्वोपपत्तिः। एष ब्रह्मलोक इत्यारभ्य अनुयशासैतदमृतमित्यन्तेनानन्दरूपो भग-वान् प्रतिपादितः फलत्वाय। एतावतोभयासङ्गः प्रतिपादितः तस्यानुभवारूढ़त्वाय पुनः प्रश्नः। दर्शनादर्शनावापोद्वापाभ्यां सिद्धमसङ्गोह्ययं पुरुष इति। एवं जीवं सुषुप्तौ भगवन्तं च ज्ञात्वा मोक्षोपायं पृच्छति। तत्र याज्ञवल्क्यस्य भयं जातं सुबुद्धिरयं निर्मन्थेनापि सर्वं ज्ञास्यतीति जीवब्रह्मधर्मानेकी-कृत्य जीवोपक्रमेण ब्रह्मोपसंहारेणाह। स यत्रेति जीवस्य मूर्च्छोपतापावस्था। तद्यथा धन इति मरणावस्था। तत्र भग-वानेवैनं लोकान्तरे नयति तद्यथा राजानमिति भगवतः सम्माननम्।* एवंविदमिति वचनात् जीवस्तु नैवंवित्। सिद्धवदवचनात् न ज्ञानविधिः वाक्यभेदप्रसङ्गाश्च। स यत्रेति जीवे मोहोऽधिकः। अथैनमेते प्राणा इति भगवचरित्रम्। सम्पद्यत इत्यन्तेन श्लोके तत् सद्ब्रह्म अथ जीवस्य अकामयमानस्य

---

* सम्माननमिति कपुस्तकपाठः प्राकः।

भगवतः स्वरूपं पूर्वमेवोक्तमनुवदति।' भगवन्निर्गमने प्राणानां निर्गमनात् तस्य चेच्छाधीनत्वात् तदभावे इन्द्रियाणि सुषुप्तौ तत्रैव समवलीयन्ते। ब्रह्मैव सन् कूटस्थः सन्। अपिः समुच्चये। सह स्थिते जीवे ब्रह्माविर्भवतीत्यर्थः। जीवे ब्रह्माविर्भावो न सम्भवति इति तत्प्रतिपादनार्थं श्लोकः। जीवोपदेशप्रकरणाभावेन सिद्धवद्वचनाच्च जीवन्मुक्तावस्था। साम्यसंप्रज्ञातसमाधिः मतान्तरत्वात् ब्रह्मप्रकरणत्वाच्च जीवस्य सद्योमुक्तिः फलम् उत्क्रमण एव ब्राह्मणस्याप्युक्तत्वात् तथेति सुप्तशरीरम् अनस्थिक इत्यादि संस्काडित्यन्तमुपसंहारः श्लोकास्तयोदश सर्वनिर्द्धारकाः प्रायो ब्रह्मविदः। एष इति सुषुम्ना नाड़ीत्वात् पञ्चवर्णा। अन्धं तम इति द्वाभ्यामनेवंविदोनिन्दा। तदेव सन्त इति बुधिमतां वचनम्। आत्मानमिति वैराग्यम्। यस्यानुवित्तिरिति नवभिर्भगवत्स्तुतिस्तद्विज्ञानञ्च पुनरेतदेव स्पष्टतयोपदिशति। स वा अयमात्मेत्यादि। अभयं वै जनक प्राप्तोऽसीत्यन्तद्वाणानां क्वचित् पाठभेदेऽप्ययमेवार्थः। अत्र प्रकरणे जीवो वाच्य इति प्राप्ते अभिधीयते ब्रह्मैव प्रकरणार्थः। सुषुप्तौ उत्क्रमणे च जीवब्रह्मयोर्भेदेन व्यपदेशात्। आकाशवत् ब्रह्मनिर्द्धारणं युक्तः।

पत्यादिशब्देभ्यः ॥ ४३ ॥

किञ्च सर्वस्य वशीत्यादिशब्देभ्यः स्पष्टमेव ब्रह्मप्रकरणमिति।

इति श्रीवेदव्यासमतवर्त्ति श्रीवल्लभाचार्यविरचिते ब्रह्मसूत्राणुभाष्ये प्रथमस्याध्यायस्य तृतीयः पादः।

---

## चतुर्थः पादः।

### आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च॥ १॥

एवं सर्व्वेषां वेदान्तानां ब्रह्मपरत्वे निर्णीते केचित् वेदार्थाज्ञानात् क्वचिद्वेदभागे कापिलमतानुसारिपदार्थदर्शनेन तस्यापि वेदमूलकत्वं वदन्ति। तन्निराकरणाय चतुर्थः पाद आरभ्यते। तत्र ईक्षतेर्नाशब्दमिति साङ्ख्यमतमशब्दत्वादिति निवारितम्। वेदेन प्रतिपादितमिति तदाशङ्कते। आनुमानिकमप्येकेषाम्। एकेषां शाखिनां शाखासु साङ्ख्यपरिकल्पितमहदादि श्रूयते।

> इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः।
> मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः॥
> महतः परमव्यक्तमव्यक्तात् पुरुषः परः।
> पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः॥

इति काठके श्रूयते। तत्र बुद्धेरात्मा अहङ्कारः ततो महान् महत्तत्त्वं ततः अव्यक्तं प्रकृतिः ततः पुरुष इति। महदहङ्कारादयः पदार्था ब्रह्मवादे सम्भवन्ति। तस्मादेवंजातीयकेषु सम्मतपदार्थानां श्रवणात् मायाप्रकृत्यविद्यावादा अपि श्रौता इति चेत्। न। शब्दसाम्यमात्रेण न सम्मतं सिध्यति। सन्दिग्धानां पदार्थानां पौर्व्वापर्य्येण निर्णयः। न तु सन्दिग्धवाक्येन सर्व्वव्याकुलतोचिता। अत्र हि पूर्व्वम्।

आत्मानं रथिनं विद्धि शरीरं रथमेव तु।
बुद्धिं तु सारथिं विद्धि मनःप्रग्रहमेव च॥
इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान्।
आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः॥

तदनु चत्वारि वाक्यानि यस्त्वविज्ञानवानित्यादि। तदग्नि-न्द्रियेभ्यः परा इति। तत्र पूर्वसम्बन्धएवार्थं उचितः। तमाह। शरीररूपकविन्यस्तगृहीतेः। शरीरेण रूप्यन्ते ये शरीरेन्द्रियादयः ते विन्यस्ता यत्र रूपकभावेन रथादिषु तेषामेवात्र गृहीतिरिंत्यर्थम्। अन्यथा प्रकृतहानाप्रकृतपरिग्रहापत्तिः। जीवप्रकरणं ह्येतत् सुकृतपायोऽस्य रूप्यते। योऽयं शरीरमारुह्य गच्छेदिति हरेः पदम्। तत्र जीवस्य ब्रह्मप्राप्तौ मुख्यं साधनं शरीरं स रथः सर्वसामग्रीसहितापराधीनयानत्वात् रथस्तु हयाधीनः हयाश्च स्वबुध्यधीनाः सा च प्रग्रहाधीना स च सारथ्यधीनः स च स्वबुध्यधीनः साच मार्गाधीना स च प्राप्याधीन इति। एवं ज्ञात्वा युक्तसामग्रीकस्तद्देयं प्राप्नोति। तत्रेन्द्रियाणामात्मा विषयाः ते च मनसा सम्यक्त्वेन भाविताश्चथा भवन्ति। विरक्तेन्द्रियाणामतथात्वात्। बुद्धेरात्मा विज्ञानं तद्ब्रह्मविषयकं महद्भवति। ततः परमव्यक्तं न प्रकटं भगवत्कृपैव। सा तु भगवदधीना न साधनान्तराधीना। स च भगवान् स्वाधीन इति एवमेवार्थस्तत्रोचित.। किञ्च। दर्शयति स्वयमेवेममर्थम्॥

एष सर्वेषु भूतेषु गूढात्मा* न प्रकाशते।
दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिरिति॥

---

* गूढोत्मा इति वा पाठः।

सूक्ष्मयोपनिषदनुसारिण्या बुद्ध्या भगवद्ध्याने हि तत्प्राप्तिरिति। चकारात् ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरमिति स्मृतिर्गृहीता। तस्मात् साधनोपदेशात् न सांख्यमतमिह विवक्षितमिति।

## सूक्ष्मन्तु तदर्हत्वात्॥ २॥

ननु अव्यक्तशब्देन न भगवत्कृपा वक्तुं शक्या। धर्मिप्रवाहादित्याशङ्क्य परिहरति। तु शब्दः। सूक्ष्मं तद्ब्रह्मैव धर्मधर्मिणोरभेदात्। अव्यक्तशब्देन हि सूक्ष्ममुच्यते। तदेव हि सर्वप्रकारेण न व्यज्यते। अर्हत्वात् तदेव अर्हं योग्यम् उभयवाच्यं हेतु.। तस्मात् धर्मधर्मिणोरभेदात् भगवानेव सूक्ष्ममिति। तत्कृपैवाव्यक्तवाच्या।

## तदधीनत्वादर्थवत्॥ ३॥

ननु धर्मित्वे परत्वमनुपपन्नम्। अन्यथा पूर्वोक्तो दोष इत्यत आह। अभेदेऽपि कृपायास्तदधीनत्वात् परत्वम्। तत्र दृष्टान्तः। अर्थवत्। अर्थः पुरुषार्थः फलं तद्वत्। ब्रह्मविदाप्नोति परमिति अत्र एकस्यैव ब्रह्मणः सच्चिद्रूपेण विषयत्वमानन्दरूपेण फलत्वमिति। तथैवाक्षरपुरुषोत्तमविभागोऽपि स्वधर्मा अपि स्वाधीनाः स्वयमपि स्वाधीन इति। तथा कृपाविष्टः साधनम् आनन्दरूपः फलमिति। अथवाऽव्यक्तं सच्चिद्रूपमक्षरमेवास्तु तस्मिन् सति विज्ञानस्य विषयाधीनत्वमर्थः। एतेनान्येऽपि सर्वसंशयवादिनो निराकृता वेदितव्याः। यथासम्भवमभिन्नापाद्य।

अनेकरूढिशब्दानां वाच्यं ब्रह्मैव नापरम्।
शाक्यास्तीर्थिस्तथा ब्रूयुस्ते सन्मार्गात् बहिःकृताः॥
तस्मादिन्द्रियेभ्यः परवाक्येनानुमानिकं किञ्चिदस्ति।

ज्ञेयत्वावचनाच्च ॥ ४ ॥

पूर्वापरसम्बन्धेनार्थः प्रतिपादितः केवलैतद्वाक्यविचारेऽपि न तदभीष्टं प्रकृतिरूपमव्यक्तं सिध्यतीत्याह। अत्र हि वाक्ये अव्यक्तं ज्ञेयत्वेन नोक्तं। तेषान्तु प्रकृतिपुरुषान्तरं ज्ञातव्यं। न हि सिद्धवस्तुनिर्देशे तेषां मते पुरुषार्थः सिध्यति। अपुरुषार्थसाधनत्वे असम्बद्धार्थवाक्यत्वमेव स्यात् परत्ववचनञ्चासङ्गतं श्लिष्टत्वादुभयोरिति चकारार्थः। अयं हेतुः पूर्वमुक्तोऽप्यवसरे स्मारितः। तस्मादव्यक्तं न प्रकृतिः।

वदतीति चेन्न प्राज्ञो हि प्रकरणात् ॥ ५ ॥

ननु ज्ञेयत्वावचनमसिद्धम्। पूर्वं निर्देशमात्रमुक्तावपि ज्ञेयत्ववचनात्।

अशब्दमस्पर्शमरूपमव्ययं
तथारसं नित्यमगन्धवच्च यत्।
अनाद्यनन्तं महतः परं ध्रुवं
निचाय्य तं मृत्युमुखात् प्रमुच्यते॥

इति उत्तरवाक्ये वदतीति चेत्। न। प्रकरणस्य नियामकत्वेनैकवाक्यत्वे द्वयोः सर्वैकवाक्यत्वेन प्राज्ञः परमात्मैव निचाय्यः। न तु द्वयोरेवैकवाक्यत्वं वक्तुं शक्यम्। तस्मात् प्रकरणस्य नियामकत्वे अशब्दवाक्यमपि भगवत्परमेव।

## त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥ ६ ॥

ननु न वयं सर्व्वमेकं प्रकरणमिति वदामः किन्त्विन्द्रियेभ्यः परा इत्यारभ्य नाचिकेतमुपाख्यानमित्यन्तं भिन्नं प्रकरणं । तत्र प्रथमं पदार्थनिर्द्देशः । तदनु एष सर्व्वेषु भूतेष्विति पुरुषज्ञानम् । अशब्दमिति तु प्रकृतिज्ञानम् । तस्मादेतावत्प्रकरणे सांख्यमतनिरूपणादशब्दत्वमसिद्धमित्याशङ्क्य परिहरति । त्रयाणामेवमुपन्यासः प्रश्नश्च । अस्मदुक्तव्याख्याने त्रिप्रकरणत्वम् । अन्यथा चतुःप्रकरणत्वं स्यात् । तृतीया चैषा वल्ली । स त्वमग्निं स्वर्ग्यमध्येषि* मृत्यो प्रब्रूहि तं श्रद्दधानाय मह्यमिति प्रश्नः प्रथमः । प्रतिब्रवीमि तदु मे निबोध स्वर्ग्यमग्निं नाचिकेत प्रजानन् इत्याद्युत्तरम् । येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके इति द्वितीयः प्रश्नः । देवैरत्रापीत्यग्रे उत्तरम् । अन्यत्र धर्मादन्यत्राधर्मादिति तृतीयः प्रश्नः । सर्व्वे वेदा यत्पदमामनन्तीत्यादिना उत्तरम् । एवमग्निजीवब्रह्मणां प्रश्नोत्तराणि । तत्र यदि सांख्यमतनिरूपणीयमिन्द्रियेभ्य इत्यादि स्यात् तदा चतुर्थस्याप्युपन्यासः स्यात् । उपन्यासे हेतुः प्रश्नः । अतएव पदाद्वचनम् । तस्य † प्रकृतेऽभावादस्मदुक्तरीत्या त्रीण्येव प्रकरणानीति सिद्धम् । उत्तरप्रश्नभावार्थश्चकारः ।

## महद्वच्च ॥ ७ ॥

ननु तथापि मतान्तरेऽन्यत्र सङ्केतिताः कथं ब्रह्मवादे ब्रह्म-

---

* स्वर्गकर्मोऽपि इति क ख पुस्तकमध्यगः पाठः ।

† प्रकृते. भावादिति क. ।

परतया योज्यन्त इत्याशङ्का परिहरति। महद्वत्। यथा महत् शब्दो महान्तं विभुमात्मानम् वेदाहमेतं पुरुषं महान्तमित्यादौ महच्छब्दो ब्रह्मपरो योगेन एवमव्यक्तशब्दोऽप्यक्षरवाचक इति। न हि सांख्यमतइव वेदान्तेऽपि महच्छब्दः प्रथमकार्य्ये वक्तुं शक्यते। तस्मादिन्द्रियादिवाक्ये सांख्यपरिकल्पितानां पदार्थानां नामापि नास्तीति सिद्धम्। चकारोऽधिकरणसम्पूर्णत्वद्योतकः।

चमसवदविशेषात् ॥ ८ ॥

पुनः श्रुत्यन्तरेण प्रत्यवस्थितं निराकर्त्तुमधिकरणान्तरमारभते। ननु प्रकरणवशात् पूर्व्वमस्मदुक्तोऽर्थोऽन्यथा वर्णितः। यत्र प्रकरणापेक्षैव नास्ति मन्ये तद्व्याख्यां मूलम्।

अजामेकां लोहित*शुक्लकृष्णां
बह्वीः प्रजाः सृजमानां सरूपाः।
अजो ह्येको जुषमाणोऽनुशेते
जहात्येनां भुक्तभोगामजोन्य इति॥

यद्यपीदं श्वेताश्वतरोपनिषदि चतुर्थाध्याये विद्यमानत्वात् पूर्व्वापरसंबद्धमेव वक्तव्यं तत्र ब्रह्मवादिनो वदन्ति किं कारणं ब्रह्मेत्युपक्रम्य ब्रह्मविद्यैव निरूपिता। तथापि पूर्व्वकाण्डे प्रणवादिमन्त्राणां नायं नियम इति प्रस्तावेऽपि मतान्तरवाचकस्यैव प्रकृतोपयोग इति शङ्का। ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निरूढा†मिति च तथा ज्ञाज्ञौ द्वावजावीशानीशावजा

---

* लोहित इति वा पाठः।

† निगूढामिति समीचीनः पाठः।

छेका भोक्तृभोग्यार्थयुक्ता। अग्रे च यो योनिं योनिमधितिष्ठत्येको विश्वानि रूपाणि योनीश्च सर्व्वाः। ऋषिप्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्त्ति जायमानञ्च पश्येदित्यादि च वाक्यानि कपिलतन्मतवाचकानि वर्त्तन्त इति सांख्यमतमपि वैदिकमेवेत्येवं प्राप्ते उच्यते चमसवदविशेषात्।

अर्व्वाग्बिलश्चमस ऊर्द्धबुध्नः
तस्मिन्यशो निहितं विश्वरूपम्।
तस्यासत ऋषयः सप्त तीरे
वागष्टमी ब्रह्मणा संविदानेति ॥

मन्त्रे यथा न विशेषो विधातुं शक्यते। न हि कर्म्मविशेषं कल्पयित्वा तत्रार्व्वाग्बिलचमसं कल्पयित्वा तत्र यथोक्तं सोमं सप्त होतारो मन्त्रेण भक्षयेयुरिति कल्पयितुं शक्यते। तथा प्रकृते रोहितशुक्लकृष्णशब्देन रजःसत्वतमांसि कल्पयित्वा न तदंशेन सर्व्वमेव मतं शक्यते कल्पयितुम् कपिलऋषिवाक्यमप्यनित्यसंयोगभयान्नित्यऋषेरेवानुवादकम्। तस्मात्र मन्त्रमात्रेण प्रकरणश्रुत्यन्तरनिरपेक्षेण विशेषः कल्पयितुं शक्यः।

## ज्योतिरुपक्रमात्तु तथाह्यधीयत एके ॥ ९ ॥

ननु चमसमन्त्रे अर्व्वाग्बिल इति मन्त्रव्याख्यानमस्ति शिरश्चमसः प्राणा वै यशः प्राणा वा ऋषय इति। नात्र तथा व्याख्यानमस्तीतीमामाशङ्कां परिहरति तु शब्दः। अजाशब्देन ज्योतिरेवोच्यते। यथाऽजा अल्पदोग्ध्री तथेयं नश्वरसुखदात्री। अग्निसूर्य्यसोमविद्युद्रूपात् ब्रह्मणो हंसोक्तचरणरूपा

भगवत्कार्य्यरूपांशत्वात् तासां त्रिवृतं त्रिवृतमेकैकाङ्करवाणीति श्रुतेश्च प्रथमोत्पन्ना देवता अजाशब्देनोच्यते। तत्र हेतुः उपक्रमात्। अत्रैवोपक्रमेत देवाग्निस्तद्वायुस्तदादित्यस्तदु चन्द्रमा इति। द्वा सुपर्णेति चार्थे मध्येऽयं मन्त्रः पूर्व्वोत्तरसम्बन्धमेव वदति सा मुख्या सृष्टिः। अजद्वयं जीवब्रह्मरूपमिति। अत्र प्रकरणे न स्पष्ट इति निरूपयति। तथाहि। श्रुत्यन्तरे स्पष्टमेव अधीयत एके। यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत् कृष्णं तदन्नस्येति। एवमग्रेऽपि कलात्रये अनेन जीवेनात्मनेति जीवब्रह्मणोश्चानुप्रवेशः बीजेऽपि त्रैविध्यमिति सरूपत्वं भगवत अभोगे हेतुः जीवेन भुक्तभोगामिति। तस्मात् प्रकृतेऽपि चमसवच्छ्रुतावेवार्थकथनान्न सांख्यमतप्रतिपादकत्वम्।

कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ १० ॥

ननु द्विविधा शब्दप्रवृत्तिः। योगो रूढिर्वा। तत्र अजाशब्दः छागायां रूढः न जायत इति योगः। अनुभयरूपत्वात् कथं सृष्टिवाचकत्वमित्याशङ्क्य परिहरति। कल्पनोपदेशाच्च। कल्पनाऽप्युपदिश्यते। आद्या सृष्टिः कल्पनया अजाशब्देनोच्यते। यथाऽजा शर्करसहिता मधुरा स्वामिहिता तथेयमिति उपदेशपदात् तथोपासनमभिप्रेतं। चकारात् परोक्षवादोऽपि वेदस्य* हिताय। यथा आदित्यो वै देवमधु। वाचं धेनुमुपासीत। द्युलोकादीनाञ्चाग्नित्वं पञ्चाग्निविद्यायां। तथा प्रकृतेऽप्यविरोधः योगरूढिव्यतिरेकेणाप्येषा वेदशब्दप्रवृत्तिरिति। तस्मादजाशब्देन न सांख्यमतसिद्धिः।

---

* ईश्वस्य इति क॰।

न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च ॥ ११ ॥

मन्त्रान्तरेण पुनराशङ्का परिहरति। वृहदारण्यकषष्ठे श्रूयते।

यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः।
तमेवमन्य आत्मानं विद्वान् ब्रह्मामृतोऽमृतमिति ॥

अत्र पञ्चजनाः पञ्चोच्यन्ते। न पञ्चानां पञ्चगुणत्वं समासानुपपत्तेः। तथाहि। आद्यः पञ्चशब्दः संख्यावाची संख्येयवाची वा। आद्ये पञ्चसंख्याया एकत्वाच्च षष्ठीसमासः संख्यायां संख्याभावाच्च। संख्येयपरत्वे द्वितीयस्य संख्यात्वे पञ्चत्वमेव पूर्व्वञ्चेदनन्वयः। विधायकाभावाच्च। अतो योऽसौ पञ्चजनसंख्याविशिष्टानां वा पञ्चत्वमिति यथासम्भवमर्थः। तथापि सूत्रकाद्रेण संख्योपसंग्रहेऽपि लक्षणार्थं केनचित् धर्म्मेण पञ्चसंग्राहकेण भाव्यम्। स च तेषां मते न सम्भवति। तथा सति पञ्चैव तत्त्वानि स्युः। अतस्ते नानाभावा एव लोकसंख्याः। यद्यपि भूततन्मात्राकृतिविशिष्टान्तःस्थितत्वधर्मा वक्तुं शक्यन्ते तथापि न ते तथोक्तवन्तः।

मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त।
षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः।

इत्यन्यथोपगमात्। पुरुषे तैलक्षण्याभावप्रसङ्गश्च। किञ्च। नायं शास्त्रार्थ इति श्रुतावेव प्रतीयते अतिरेकात् आकाशस्येति चकारादात्मा। यस्मिन्नित्यधिकरणत्वेनोक्तः। तस्मादनेनापि मन्त्रेण तन्मतसिद्धिः।

---

* न विकृतिरिति क०।

कर्त्तृत्वनिषेधपरं तथैव प्रतीतेः। सर्व्ववैलक्षण्यार्थं वैदिकानाम-बाधितार्थैकवाक्यत्वस्याभिप्रेतत्वादिति चकारार्थः। कार्य्यप्रकारे भेदस्तु साक्षात्प्रयत्नापको न तु बाधकः। वस्तुधान्नतिसामर्थ्यं लोकेऽपि माहात्म्यसूचकमिति। तस्मात् श्रुतिविप्रतिषेधात् स्मृति-परिग्रह इति सिद्धम्।

समाकर्षात्॥ १५॥

पुनरन्यथाशङ्क्य परिहरति। ननु क्वचिदसद्वा इदमग्र आसीदिति। क्वचित् सदेव सौम्येदमग्र आसीत्। तद्धैक आहु-रसदेवेदमग्र आसीत्। अव्याकृतमासीत्। नासदासीन्नो सदा-सीत् तम आसीदित्यादिवाक्येषु ब्रह्मणोऽपि विगानं श्रूयते। तद्धैक आहुरिति कथंवत् पक्षान्तरं सम्भवति। नह्यसच्छब्दैर्ब्रह्म प्रतिपादयितुं शक्यते असन्नेव स भवतीति बाधात्। आदित्यवर्णं तमसः परस्तादिति च। तस्मात् कारणत्वेनापि श्रुतिविप्रतिषेधात् ब्रह्मकारणं नैवेवं प्राप्ते उच्यते। समाकर्षात्। आकृष्यते स्वस्थानात् प्राप्यत इत्याकर्षः। सर्व्वेष्वेतेषु वाक्येषु असदादिपदानां न निरात्मकत्वादार्थौ उच्यन्ते किन्तु वैलक्ष-ण्येन। सर्व्वशब्दवाच्यत्वं च सिद्धं ब्रह्मणः। यथा को अद्धा वेद क इह प्रवोचत्। सर्व्वे वेदा यत् पदमामनन्ति। यतो वाचो निवर्त्तन्ते। मनसैवानुद्रष्टव्य इत्यादि सर्व्वे विरुद्धधर्म्मा भगवत्युच्यन्ते। एवमनेकविरुद्धशब्दवाच्यत्वं लोकप्रसिद्धताह-ग्यार्थत्वात् समाकर्षादवगम्यते। तं यथा यथोपासते तथा भव-तीति फलज्ञापनार्थं असन्नेव स भवतीति यथा कंसादीनां

मारकः। तदेक आहुरित्येव सर्व्वप्रपञ्चवैलक्षण्य प्रपञ्चरूपोऽपि स इति प्रथमः पक्षः। अव्याहतमसत्वेन तुल्यं नासदासीदिति मनस्तदपि ब्रह्म। तम आसीदित्यनभिव्यक्तम्। कर्म्मणोऽपि भगवत्वात् पूर्व्वकाण्डेऽपि तस्मादेव सृष्टिः न हि तमसः स्वेन गूढत्वं लोके सम्भवति। अतः क्वचिद्विलक्षणात् क्वचिदविलक्षणात्* ब्रह्मणो जगत्। भगवत्वादेव स्वयंकर्तृकता च। सम्भवति चैकवाक्यत्वे श्रुत्यानानिराकरणस्यायुक्तम्। तस्मात् शब्दवैलक्षण्येन श्रुतिप्रतिषेधो वक्तुं न शक्य इति सिद्धम्।

जगद्वाचित्वात् ॥ १६ ॥

एवं शब्दविप्रतिषेधं परिहृत्यार्थविप्रतिषेधं परिहरति। कौषीतकिब्राह्मणे बालाक्यजातशत्रुसंवादे बालाकिरजातशत्रवे ब्रह्मोपदेष्टुमागतः आदित्यादि दक्षिणेऽक्षिपुरुषपर्य्यन्तं परिच्छिन्नब्रह्मोपासनामुक्त्वा तथा निराकृते तमेव आचार्य्यमुपससाद। ततः सुप्तपुरुषसमीपमुभावागत्य ब्रह्मवादं चक्रतुः। तत्र क्वैष एतद्बालाके पुरुषोऽशयिष्टेत्यादौ जीवः प्रक्रान्तः। तस्मादेव सर्व्वोत्पत्तिरुक्ता प्राणाश्चोऽप्यनुप्रवेशश्च। तत्र सन्देहः जीवएव प्राणसहितः कर्त्ता ब्रह्मैव वेति। तत्र जीवएव कर्त्ता सर्व्वस्य जगतो ब्रह्मत्वादयः तस्य धर्म्मा राजत्ववदजमानत्ववद्वा। अस्मिन् प्रकरणे ब्रह्मोपक्रमेण जीवपर्य्यवसानोक्तेः सर्व्वत्रैव ब्रह्मविनीतो जीवएव कर्त्ता। तथा सति लोकेऽपि जीवकर्तृत्वं सहजं भवेत्। बन्धमोक्षव्यवस्था च एवं सत्यर्थात् प्रकृतेरेव

---

* क्वचिदविलक्षणादिति क पुस्तके नास्ति।

फलिष्यतीत्येवं प्राप्त उच्यते। जगद्वाचित्वात्। एतेषां पुरुषाणां कर्त्ता यस्य चैतत् कर्म्मेत्युपक्रमे एतच्छब्देन जगदुच्यते। पुरुषशब्देन च जीवः। तज्जड़जीवात्मकं जगत् ब्रह्मकर्तृकमिति पूर्व्वसिद्धम्। तदनुरोधेनापि * ब्रह्मपरत्वमेवोचितम्। ननु सर्व्वविप्लवोऽश्रुतकल्पना च। अतः सुषुप्तावपि ब्रह्मण्येव [लयस्तस्मादेव सर्व्वमिति ज्ञातव्यं। प्राणाकाशशब्दवाच्यत्वं तु पूर्व्वमेव सिद्धम्। तस्माच्च जीवाधिष्ठिता प्रकृतिः कारणं।

जीवमुख्यप्राणलिङ्गादिति चेत्तद्व्याख्यातम्॥ १७॥

किञ्चिदाशङ्क्य परिहरति। नन्वत्र जीव एव प्रक्रान्तः। क्वैष एतद्बालाके पुरुषोऽशयिष्टेति। ब्रह्मत्वस्यापि न सिद्धमेतादृशत्वेनादृशमिति। अतः शयनोत्थानलक्षणजीवधर्म्मदर्शनात् तस्यैव ब्रह्मत्वं जगत्कर्तृत्वञ्च तत् स्वतोऽनुपपन्नं प्रकृतौ फलिष्यति। अथवा। मुख्यप्राणलिङ्गमप्यत्रास्ति प्राण एवैकधा भवतीति। सुषुप्तौ तस्यैव स्थितिरुपलभ्यते। विद्यमानादेव सर्व्वोत्पत्तिप्रलयौ। स च प्रकृत्यंशः। अतो जड़ादेव प्रधानात् एतावपि सर्व्वोत्पत्तिः। अतोऽस्मात् प्रकरणात् जीवद्वारा साधारा प्रकृतेः कारणत्वमित्येवं प्राप्त उच्यते। तद्व्याख्यातं। एतयोरुभयलिङ्गत्वमेव नास्तीति आश्रयत्वादिह तद्योगादित्यत्र सर्व्वमेव कार्य्यं भगवत एव नान्यथादिति। अतोऽस्मात् ब्रह्मवाद एव सिद्ध्यति न प्रकृतिवादः।

---

† तदनुरोधेनाप्यावीति क०।

## अन्यार्थन्तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥ १८ ॥

स्वमतेन परिहारमुक्त्वा नियतधर्मवादेनापि परिहारमाह । स्वापप्रतिबोधौ जीवधर्मावेव । चक्षुरादिलयाधारत्वं प्राणस्येति । तस्मिन्नपि पक्षे अन्यार्थं तद्धर्मकीर्त्तनं । भेदे हि तन्निराकरणमवश्यं कर्त्तव्यमिति तुशब्दः । ब्रह्मप्रतिपत्त्यर्थमेव जीवलयोद्गमौ श्रुतिर्वैलक्षण्येन प्राणकीर्त्तनमप्ययब्रह्मबोधाय । कुत एतदवगम्यते तत्राह । उपक्रमोपसंहाराभ्यामेवावगम्यते । यो वै बालाक एतेषां पुरुषाणामित्युपक्रमे मुख्यं ब्रह्मैव निर्दिष्टं । तज्ज्ञानेनासुरजयः सर्वेषां भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं चेति फलं । न ह्येतद्द्वयममुख्ये संभवति । अपिच । प्रश्नव्याख्यानाभ्यां । क्वैष एतद्बालाके पुरुषोऽशयिष्टेति प्रश्नः । तत्र जीवस्य ज्ञातत्वादधिकरणमेव न ज्ञातं । यत्रैष एतद्बालाके पुरुषोऽशयिष्टेति व्याख्यानं न हि नाडीर्वाऽपि चितु व्याख्याति किंतु प्रतिज्ञातं ब्रह्म । कथमेतदवगम्यते । नाडीव्यतिरिक्त आत्मा प्राप्यत इति । तत्राह । एवमेके । एके शाखिनो वाजसनेयिनः । तत्रापि दृप्तबालाकिब्राह्मणे सहोवाचाजातशत्रुर्यत्रैष एतत् सुप्तोऽभूत् य एष विज्ञानमयः पुरुषस्तदेषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते इत्यत्राकाशशब्देन ब्रह्म सता सोम्य तदा सम्पन्नो भवतीति च स्वमपीतो भवतीति च । तस्मादाधारभूतब्रह्मज्ञापनार्थत्वाज्जीवमुख्यप्राणलिङ्गात् प्रकृतिवादस्त्वसङ्गतं ।

वाक्यान्वयात्॥ १९॥

पुनर्जीवब्रह्मवादेन प्रकृतिकारणवादमाशङ्क्य परिहरति। बृहदारण्यके चतुर्थे षष्ठे च याज्ञवल्क्यमैत्रेयीसंवादे येनाहं नामृतास्यां किमहं तेन कुर्यामिति विरक्तिमुक्त्वा यदेव भगवान् वेद तदेव मे ब्रूहीति पृष्टे तामभिमुखीकृत्य न वारे पत्युः कामायेत्यादिना अमृतत्वाय ज्ञानमुपदिशति। षष्ठे पुनरुपसंहारेऽप्येतावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्यः प्रवव्राजेति। तत्र जीवस्य प्रकरणित्वं ब्रह्मणोवेति संशयः। तत्रात्मनः प्रियत्वं तत्प्रतीत्या पुत्राद्यपेक्षया बोधयन् जीवमेवोपक्रमे आत्मत्वेन वदति। तदनु तत्र दर्शनादि विधत्ते तेन सर्वं विदितमिति फलमाह। तत्र कथमात्मज्ञानेन सर्वज्ञानमित्याकाङ्क्षायां ब्रह्म तं परादादित्यादिना इदं सर्वं यदयमात्मेत्यन्तेन तस्यैव सर्वत्वमाह। तदनु कथमस्मिन् सङ्घाते आत्मज्ञानं भवतीत्याकाङ्क्षायां दुन्दुभ्यादिदृष्टान्तत्रयमाह। परम्परया बाह्याभ्यन्तर्भेदेन। यथा महाकोलाहले दुन्दुभेर्हन्यमानस्य शब्दो गृहीतो भवति। तत्र करणं दुन्दुभिदर्शनं दुन्दुभ्याघातदर्शनं वा। अनुमानद्वारा चित्ते तत्र निविष्टे तत्साक्षात्कारो भवतीति। तथा आत्मनो बोधककार्यानुसन्धाने तत्साक्षात्कारो भवतीति। तत्र कथं सर्वत्वमित्याकाङ्क्षायां ततएवोत्पन्नं सर्वं नामरूपात्मकं तस्मिन्नेव लीयत इति स यथेति द्वयेनाह। मध्येऽपि स एव नातिरिक्तं विद्यतीति स यथा सैन्धवघन इत्यनेनाह। आधेयत्वेन तावन्मात्र*निराकरणायाह। न प्रेत्य संज्ञास्तीति।

* तावन्मात्रता इति क०।

कार्य्यातिरिक्तरूपं कथयितुं न शक्यत इति। तत्र विशेषाका-ङ्क्षायामतिरिक्ताकथने वञ्चकत्वमाशङ्क्य तत्परिहारायाह सहो-वाचेति। अविनाशीत्यनेन कार्य्यवैलक्षण्यं सिद्धवत्कारेणोक्ता विषयसम्बन्धेन संसारमाह। मात्रासंसर्गस्त्वस्य भवतीति। विशेषतस्तत्कथने हेतुमाह यद्वैतमित्यादिना यावत् समाप्ति। चक्षूरूपमेव पश्यति नात्मानं। ननु रूपमप्यात्मेति चेत् तत्रा-प्यन्वै तत् द्रष्टव्यत्वेन न पश्यति न हि द्रष्टृस्वरूपं दृश्यज्ञानेन ज्ञातं भवति अतद्रूपत्वात्। एवं द्रष्टृदृश्यव्यवहारे अज्ञानावस्थायां विशेषतस्तज्ज्ञानमशक्यमुक्त्वा ज्ञानोत्तरं कर्मकर्तृभाव एव नास्ती-त्याह। यत्र वा अन्यदिव स्यादित्यादिना। इदमेव हि ज्ञान-मस्तृतत्वमिति। तत्रादिमध्यावसानेषु जीवप्रकरणमित्येव प्रति-भाति। तस्य ब्रह्मता जगत्कर्तृत्वमित्येवोत्कर्षः*। ननु तस्मादन्यत् ब्रह्मत्वेन वक्तुं युक्तमर्थविरोधाच्च। तस्मादिदं सृष्टिवाक्यानामेतत्-न्यायेनान्यार्थत्वात् ब्रह्म जगत्कारणमिति प्रकृतिवाद एव युक्त इत्येवं प्राप्ते उच्यते। वाक्यान्वयात्। इदं वाक्यं भगवत्येवान्वेति। नात्र जीवप्राधान्यगन्धोऽपि। सर्वत्र भगवदन्वयेनैव जीवस्यापि प्रियत्वम्। तस्यैव सुखरूपत्वात्। सर्वोपनिषदनुरोधेनैवास्याप्य-र्थस्य वक्तुमुचितत्वात् तमेव विदित्वाऽतिमृत्युमेति आनन्दा-द्ध्येव खल्विमानि भूतानि जायन्ते सर्वं एवात्मानो व्युच्चरन्ति एवं ह्येवानन्दयातीत्यादिश्रुतिसहस्रैर्निःसन्दिग्धैर्ब्रह्मणः स्वरूपं कार्य्य-संबन्ध प्रतिपादिता इतीदमपि वाक्यं तत्परमेवोचितं। सर्व-

---

* इत्युत्कर्ष इति क॰।

व्यवहारस्य तन्मूलकत्वेन पूर्व्वमुक्तत्वात्। विषयस्पर्शो विज्ञात-त्वमपि तस्यैव। एवं सति सर्व्वमेव सङ्गतम् भवेत्। अतो वाक्यान्वयात्र जीवपरत्वं येन प्रकृतिवादः स्यादिति।

## प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः॥ २०॥

नियतधर्म्मवादिनामपि मतेन प्रकृते सिद्धान्तं वक्तुं पञ्चा-न्तराण्याह। तत्र ब्रह्मवादैकदेशिवादाः सन्ति। तत्र जीवो नाम स्वस्य भोगनिष्पत्यर्थं स्वांशो भगवता कृतो विस्फुलिङ्गव-दित्याश्मरथ्यो मन्यते। अनादिसिद्धएव जीवचैतन्यमात्रं शरी-रादिसङ्घाते प्रविष्ट इति चित्ति तन्मात्रेण प्रवेशे च मोक्ष इति च औडुलोमिराचार्य्यः। काशकृत्स्नस्तु भासकतया विषयभोक्तृरूपं भगवत एव जीव इति। तेऽपि स्वमतानुसारेणात्र परिह-रन्ति। तत्र सुप्तादिनियतसहवचनात् जीवप्रकरणमेवैतदित्याशङ्का जीवोपक्रमस्यान्यत् प्रयोजनमित्याह। प्रतिज्ञासिद्धेरिति षष्ठी। तस्या लिङ्गं अंशत्वाज्जीवस्य तदभेदेनोपक्रमः प्रतिज्ञासिद्धेर्लिङ्गं भवति। एकविज्ञानेन सर्व्वविज्ञानं प्रतिज्ञा। तस्यैवार्थे व्युत्-पाद्यमानत्वात् तस्या एतत् साधकं यथा जीवो भगवानेवं जड़ इति आश्मरथ्यो मन्यते। श्रोतव्यादिविषयस्तु भगवानेव। तस्मान्नियतधर्म्मजीववादेऽपि न जीवोपक्रमोदोषः।

## उत्क्रमिष्यत एवम्भावादित्यौडुलोमिः॥ २१॥

लिङ्गमित्यनुवर्त्तते। यदत्र जीवोपक्रमेण भगवतः श्रव-णादिकमुक्तं तत् संसारभावात् उत्क्रमिष्यतो जीवस्य लिङ्गं मुक्तो जीवो भगवानेव भविष्यतीति ज्ञापकं। अन्यथा सैव कथम-

स्ता भवेदिति इति शब्दो हेतौ स्त्रिया विश्वासार्थं गौण-
प्रियवैराग्यार्थञ्च जीवोपक्रमः कर्त्तव्य एवेति औडुलोमिरा-
चार्यो मन्यते। तस्मात् भिन्नजीवपक्षेऽपि नात्र दूषणम्।

## अवस्थितेरिति काशकृत्स्नः ॥ २२ ॥

लिङ्गमित्येव भगवतएवावस्था जीव इति। अतः संसार-
दशायामपि जीवो ब्रह्मेति नात्मक्रमणमुपचारो वा। अन्यथा
वायमात्मनस्तु कामाय सर्व्वं प्रियं भवतीति नह्यन्यस्य सर्व्वं
प्रियं भवति। मोक्षस्तु ज्ञानमेव उत्तरत्र कर्त्तव्याभावात्। अव-
स्थया व्यवसायात् सिद्धान्तादिशेषः। इति शब्देनैतावदरे
खल्वमृतत्वमित्युपसंहारो हेतुरस्य पक्षस्येति काशकृत्स्नो
मन्यते। तस्माज्जीवोपक्रमो भगवतएवावस्थाविशेषो जीव इत्यस्य
पक्षस्य लिङ्गम्। तस्मान्मैत्रेयीब्राह्मणेनापि जीवद्वारा प्रकृति-
कारणवादासिद्धिरिति सिद्धम्।

## प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ २३ ॥

एवं प्रकृतिकारणवादनिराकरणेन ब्रह्मणएव कारणत्वे
सिद्धेऽप्यर्द्धजरतीयतयोभयस्थापनपक्षं परिहर्त्तुमधिकरणमार-
भते। ननु ब्रह्मकारणतां न निराकुर्म्मः। श्रुतिसिद्धत्वात्।
किन्तु समवायिकारणं प्रकृतिरेव कार्य्यकारणयोर्वैलक्षण्यात्।
समवायिकारणानुरोधि हि कार्य्यं। अन्यत् सर्व्वं भगवानस्तु।
अपेक्ष्यते च समवायिनिमित्तयोर्भेदः। कर्म्मण्यपि श्रुतिस्मृति-
समवायो धर्म्मे। एवं ब्रह्मवादेऽपि सूत्युक्ता प्रकृतिः समवायि
कारणं ब्रह्म निमित्तकारणमित्येवं प्राप्ते उच्यते। प्रकृतिश्च

निमित्तकारणं समवायिकारणञ्च ब्रह्मैव। प्रकृतिपदप्रयोगात्। स्मृतिसिद्धतृतीयसर्व्वधर्म्मोपदेशः। चकारात् यतेत्यादिसर्व्वसंग्रहः। कुत एतत्। प्रतिज्ञादृष्टान्तानुपरोधात्। प्रतिज्ञा। अपि वा तमादेशमप्राक्षो येनाश्रुतं श्रुतं भवत्यमतं मतं भवत्यविज्ञातं विज्ञातं भवतीति। दृष्टान्तः। यथैकेन मृत्पिण्डेन सर्व्वं मृण्मयं विज्ञातं स्यादित्यादि। प्रतिज्ञादृष्टान्तयोरनुपरोधः अबाधनं तस्मात् समवायिकारणज्ञानेन हि कार्य्यज्ञानम्। उभयोर्ग्रहणमुपचारव्यावृत्त्यर्थम् उपक्रमोपसंहारवत्। प्रतिज्ञामात्रत्वे प्रष्टद्वारापि भवेत्। दृष्टान्तमात्रत्वे त्वनुमानविधया स्यात्। तथा सति सर्व्वसमानधर्म्मवत् ब्रह्म स्यात् न समवायिकारणम्। उभयोर्ग्रहणे तु प्रतिज्ञाया दृष्टमेव द्वारमिति समवायित्वसिद्धिः।* कार्य्यकारणयोर्भेदाभेदमतनिराकरणाय पिण्डमणिनखनिकृन्तनग्रहणं। तथा सति यत्र क्वचिद्भगवान् ज्ञातः सर्व्वैव ज्ञातो भवति सर्व्वं च ज्ञातं भवतीति सामान्यलक्षणप्रत्यासत्तिनिराकरणाय च वाचारम्भणं विकारो नामधेयमिति अलीकत्वनिराकरणाय च मृत्तिकेत्येव सत्यमिति ब्रह्मत्वेनैव जगतः सत्यत्वं नान्यथेति। सामान्यलक्षणप्रत्यासत्तिनिराकरणञ्च स्पष्टमेवाग्रे चोदितरूपाणीत्यत्र वारयिष्यति। अतो ब्रह्मरूपेण सत्यस्य जगतो ब्रह्मैव समवायिकारणम्। ईश्वास-सृष्टिस्तु सत्या विकारबुद्धौ लोपः। श्रुतिसामर्थ्यं प्रमाणमित्युक्तम्। तस्मात् ब्रह्मैव समवायिकारणं न प्रकृतिः।

---

* समवायित्वसिद्धिरिति क० ।

## अभिध्योपदेशाच्च ॥ २४ ॥

लिङ्गान्तरमाह । सोऽकामयत बहु स्यां प्रजायेयेत्यत्र कामनं तस्याभिध्यानम् आप्तकामत्वान्न कामना । तदभिध्यानं स्रष्टावुपदिश्यते । बहु स्यामिति स्वस्यैव बहुरूपत्वाभिध्यानेन स्रष्टं स्वयमेव भवति । सुवर्णस्यानेकरूपत्वं सुवर्णप्रकृतित्वात्एव । अध्यासाभावात् गौणत्वापत्तेश्च । न हि मुख्यं बहुभवनं योगिनां सम्भवति । सर्वभवनसामर्थ्ये मुख्ये सम्भवति गौणकल्पनाया अन्याय्यत्वात् । चकारादिदं सर्वं यदयमात्मेति कार्यस्य ब्रह्मत्व श्रुतिर्ब्रह्मप्रकृतित्वे सम्भवति नान्यथा । अथवा । सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीतेति तस्य जगद्रूपत्वेनाभिध्यानमुपदिश्यते । तद्ब्रह्मसमवायित्वे घटत इति चकारादेकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखमिति ।

## साक्षाच्चोभयाम्नानात् ॥ २५ ॥

लिङ्गमुक्त्वा श्रुतिमेव प्रमाणमाह । साक्षात् श्रुत्यैव समवायित्वमुच्यते । चकारात् स्मृत्यापि । कथं श्रुत्योच्यते । तत्राह । उभयाम्नानात् । ब्रह्मणः सकाशात् ब्रह्मण्येव च सृष्टिप्रलययोः आम्नानात् । सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्तीति । अहं सर्वस्य जगतः प्रभवः प्रलयस्तथेति च । नह्येतन्निमित्तत्वे सम्भवति सुवर्णादिषु तथोपलब्धेः । लोकवेदन्यायेन साक्षात्त्वं । तस्मात् भगवानेव समवायिकारणम् ।

निमित्तकारणं समवायिकारणञ्च ब्रह्मैव। प्रकृतिपदप्रयोगात्। स्मृतिसिद्धतोयसर्व्वधर्म्मोपदेशः। चकारात् यथेत्यादिसर्व्व संग्रहः। कुत एतत्। प्रतिज्ञादृष्टान्तानुपरोधात्। प्रतिज्ञा। अपि वा तमादेशमप्राक्षो येनाश्रुतं श्रुतं भवत्यमतं मतं भवत्य-विज्ञातं विज्ञातं भवतीति। दृष्टान्तः। यथैकेन मृत्पिण्डेन सर्व्वं मृण्मयं विज्ञातं स्यादित्यादि। प्रतिज्ञादृष्टान्तयोरनुपरोधः अबाधनं तस्मात् समवायिकारणज्ञानेन हि कार्य्यज्ञानम्। उभयोर्ग्रहणमुपचारव्यावृत्त्यर्थम् उपक्रमोपसंहारवत्। प्रतिज्ञा-मात्रत्वे अदृष्टद्वारापि भवेत्। दृष्टान्तमात्रत्वे त्वनुमानविधया स्यात्। तथा सति सर्व्वसमानधर्म्मवत् ब्रह्म स्यात् न सम-वायिकारणम्। उभयोर्ग्रहणे तु प्रतिज्ञाया दृष्टमेव द्वारमिति समवायित्वसिद्धिः।* कार्य्यकारणयोर्भेदाभेदमतनिराकरणाय पिण्डमणिनखनिकृन्तनग्रहणं। तथा सति यत्र क्वचिद्भगवान् ज्ञातः सर्व्वत्र ज्ञातो भवति सर्व्वञ्च ज्ञातं भवतीति सामान्य-लक्षणप्रत्यासत्तिनिराकरणाय च वाचारम्भणं विकारो नामधेय-मिति अलीकत्वनिराकरणाय च मृत्तिकेत्येव सत्यमिति ब्रह्मत्वे-नैव जगतः सत्यत्वं नान्यथेति। सामान्यलक्षणप्रत्यासत्ति-निराकरणञ्च अपटमेघाग्रे त्रीणि रूपाणीत्यत्र करिष्यति। अतो ब्रह्मरूपेण सत्यस्य जगतो ब्रह्मैव समवायिकारणम्। देहात्म-बुद्धिस्तु मत्वां विकारबुद्धौ दोषः। श्रुतिसामर्थ्यं प्रमाणमित्युक्तम्। तस्मात् ब्रह्मैव समवायिकारणं न प्रकृतिः।

---

* समवायत्वसिद्धिरिति क॰ ।

## अभिध्योपदेशाच्च ॥ २४ ॥

लिङ्गान्तरमाह । सोऽकामयत बहुस्यां प्रजायेयेतीत्यत्र कामनं तस्याभिध्यानम् आप्तकामत्वात् कामना । तदभिध्यानं सृष्टावुपदिश्यते । बहुस्यामिति स्वस्यैव बहुरूपत्वाभिध्यानेन सृष्टं स्वयमेव भवति । सुवर्णस्यानेकरूपत्वं सुवर्णप्रकृतिकत्वएव । अध्यासाभावात् गौणत्वापत्तेश्च । न हि मुख्यं बहुभवनं योगिनां सम्भवति । सर्व्वभवनसामर्थ्याम्मुख्ये सम्भवति गौणकल्पनाया अन्याय्यत्वात् । चकारादिदं सर्व्वं यदयमात्मेति कार्य्यस्य ब्रह्मत्व श्रुतिर्ब्रह्मप्रकृतित्वे सम्भवति नान्यथा । अथवा । सर्व्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीतेति तत्र जगद्रूपत्वेनाभिध्यान-मुपदिश्यते । तद्ब्रह्मसमवायित्वे घटत इति चकारादेकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखमिति ।

## साक्षाच्चोभयाम्नानात् ॥ २५ ॥

लिङ्गमुक्त्वा श्रुतिमेव प्रमाणमाह । साक्षात् श्रुत्यैव सम-वायित्वमुच्यते । चकारात् स्मृत्यापि । कथं श्रुत्योच्यते । तत्राह । उभयाम्नानात् । ब्रह्मणः सकाशात् ब्रह्मण्येव च सृष्टिप्रलययोः आम्नानात् । सर्व्वाणि ह वा इमानि भूतान्याकाशादेव समुत्-पद्यन्ते आकाशं प्रत्यस्तं यन्तीति । अहं सर्व्वस्य जगतः प्रभवः प्रलयस्तथेति च । मध्येतरत्रिनिमित्तत्वे सम्भवति सुवर्णादिषु तयोपलब्धेः । लोकवेदन्यायेन साक्षात्त्व । तस्मात् भगवानेव समवायिकारणम् ।

## आत्मकृतेः परिणामात् ॥ २६ ॥

नन्वेवं सर्वं सृजति स एवावति हन्ति चेति कर्तृत्वप्रतीतेराकाशादिवाक्यमप्यौपचारिकं भविष्यतीति तन्निराकरणायाह। आत्मकृतेः। तदात्मानं स्वयमकुरुतेति स्वस्यैव कर्मकर्तृभावात् अविकृतत्व*वचनाच्चालौकिकत्वम्। तथापि मानार्थमुपपत्तिमाह। परिणामात्। परिणमते कार्याकारेणेति अविकृतमेव परिणमते सुवर्णं यथापि च तैजसानि। तदेवालौकिकत्वात् ब्रह्मकारणत्वमेव घटते। पूर्वावस्थान्यथाभावस्तु कार्यस्य श्रुत्यनुरोधादङ्गीकर्तव्यः। वक्ष्यति च। श्रुतेस्तु शब्दमूलत्वादिति। अन्यानि च युक्तिदूषणानि परिहरिष्यति। तस्मात् ब्रह्मपरिणामलक्षणं कार्यमिति जगत्समवायिकारणत्वं ब्रह्मण एवेति सिद्धम्।

## योनिश्च हि गीयते ॥ २७ ॥

चेतनेषु किञ्चिद्विशेषं परिहरति। नन्वस्तु जडानां ब्रह्मैककारणत्वं। चेतनेषु तु योनिबीजयोः समवायित्वदर्शनात् पुरुषस्यात् भगवती योनिरूपा प्रकृतिः समवायिकारणं भवतु। शुक्रशोणितसमवेतत्वाच्छरीरस्येत्याशङ्क्य परिहरति। योनिश्च ब्रह्मैव। आशयादिनिराकरणाय चकारः। तत्र युक्तिश्रुती प्रमाणयति हि गीयत इति। युक्तिस्तावत् सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमिति पूर्वमेकमेव प्रतिज्ञातम्। आकाशादेव आनन्दाद्ध्येवेत्यादिवाक्यैरनन्यकारणत्वं जगतोऽवगम्यते।

---

* परमवचनादिति क०।

इतरापेक्षायां द्वैतापत्तेः। गीयते च। कर्त्तारमीशं पुरुषं ब्रह्मयोनिं। यद्भूतयोनिं परिपश्यन्ति धीरा इति च। मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहमिति। तासां ब्रह्म महद्योनिरहं बीजप्रदः पितेति च। अक्षरपुरुषोत्तमभावेन तथात्वं। तस्मात् योनिरपि भगवान् पुरुषोऽपि सर्व्वं वीर्य्यं जीवश्च भगवानिति इदं सर्व्वं यदयमात्मेति सिद्धम्। तस्मात् वेदाभ्यन्ते प्रकृतिप्रवेशो नास्तीत्यप्येतत् सांख्यमतस्य सिद्धम्।

एतेन सर्व्वे व्याख्याता व्याख्याताः ॥ २८ ॥

ब्रह्मवादव्यतिरिक्ताः सर्व्वे वादाः अवैदिकाः वेदविरुद्धा इत्याह। एतेन ब्रह्मवादस्थापनपूर्व्वकं सांख्यमतनिराकरणेन सर्व्वे पातञ्जलादिवादा व्याख्याताः। अवैदिका अनुपयुक्ताश्च। वैदिकानां हि वेदः प्रमाणं। तस्मिन्नव्याकुले भ्रान्तिप्रतिपन्ना एव सर्व्वे वादा इति। एतत्सोकर्य्यार्थं विस्तरेणाग्रे वक्ष्यते। आहत्तिरध्यायसमाप्तियोधिका।

इति श्रीवेदव्यासमतवर्त्ति श्रीवल्लभाचार्य्यविरचिते ब्रह्मसूत्राणुभाष्ये प्रथमाध्यायस्य चतुर्थः पादः। प्रथमोऽध्यायः समाप्तः।

---

## स्मृत्यनवकाशदोषप्रसङ्ग इति चेत् नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॥ १ ॥

प्रथमाध्याये वेदान्तवाक्यानां विवादास्पदानां ब्रह्मपरत्वेन समन्वयः प्रतिपादितः। अधुना श्रुतिस्मृत्यविरोधः प्रतिपाद्यते।

भ्रान्तिमूलतया सर्व्वसमयानामयुक्तितः।
न तद्विरोधाद्वचनं वैदिकं शङ्क्यतां व्रजेत् ॥

श्रुतिविप्रतिषेधस्त्वत्र प्रतिविधेयः। प्रथमचतुर्थपादे सर्व्वेषामनुपयोगे प्रतिपादिते स्मृतिप्रतिपादिते स्मृतित्ववचनेन प्रामाण्ये च यावत् तदप्रामाण्यं न प्रतिपाद्यते तावत् तद्विरोधः परिहर्त्तुमशक्य इति तन्निराकरणार्थं प्रथमतः सूत्रद्वयमाह। तुल्यबलानां परस्परविरोधे न प्रकारान्तरस्थितिरिति ततो युक्त्या श्रुतिविप्रतिषेधपरिहारः। ततो द्वितीये पादे वेदबाधकत्वाभावेऽपि तैरपि स्वातन्त्र्येण कश्चन पुरुषार्थः सेत्स्यतीत्याशङ्का बाह्याबाह्यमतान्येकीकृत्य निराकरोति भ्रान्तितुल्यत्वात्। ततः सम्यग्वेदार्थविचारायैव वैदिकपदार्थानां क्रमस्वरूपविचारः पाद्द्वयेन। अतः सम्पूर्णेनाप्यध्यायेनाविरोधः प्रतिपाद्यते*। कपिलादिमहर्षिकृतस्मृतेर्न मन्वादिवदन्यत्रोपयोगः मोक्षैकोपयोगित्वात्। तत्राप्यनवकाशे वैयर्थ्या-

* प्रथमाध्याये इत्यारभ्य प्रतिपाद्यते इत्यन्तं क पुस्तके नास्ति। तत्तु चावश्यकमेव योजनीयम्।

पत्तेरिति चेत् न कपिलव्यतिरिक्तशुद्धब्रह्मकारणवाचकस्मृत्यनव-काशदोषप्रसङ्गः । अहं सर्वस्य जगतः प्रभवः प्रलयस्तथेति ।

इतरेषाञ्चानुपलब्धेः ॥ २ ॥

प्रकृतिव्यतिरिक्तानां महदादीनां लोके वेदे चानुपलब्धेः ।

एतेन योगः प्रत्युक्तः ॥ ३ ॥

सांख्यस्मृतिनिराकरणेन योगस्मृतिरपि निराकृता द्रष्टव्या । योगस्य वैदिकत्वश्रद्धया भेदेन निराकरणम् ।

न विलक्षणत्वादस्य तथात्वं च शब्दात् ॥ ४ ॥

बाधकोऽयं तर्कः । अस्य जगतो विलक्षणत्वात् अचेतनत्वाच्चेतनं न कारणम् । विलक्षणत्वञ्च शब्दात् । विज्ञानञ्चा-विज्ञानञ्चेति प्रत्यक्षस्य भ्रान्तित्वं मन्यमानस्येदं वचनम् ।

अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥ ५ ॥

मृदब्रवीत् । आपोऽब्रुवन् । तत्तेज ऐक्षत । ते ह वाच-मूचुस्त्वं न उद्गायेति । एवमादिश्रुतिभिर्भूतेन्द्रियाणां चेतनत्वं प्रतिपाद्यत इत्याशङ्क्य तु शब्देन निराकरोति । तत्तदभिमा-निन्य एव देवतास्तथा वदन्ति । कुतः । वेद एव विज्ञानञ्चा-विज्ञानञ्चेति चेतनाचेतनविशेषोक्तेः* । अनुगतत्वाच्च । अग्नि-र्वाग्भूत्वा मुखं प्राविशदित्येवमादिविशेषानुगतिभ्यामभिमानित्व-मित्यर्थः । देवतापदञ्च श्रुत्यन्तरे ।

---

* चेतनविशेषोक्तेरिति खादर्शपुस्तकस्थः पाठः ।

दृश्यते तु ॥ ६ ॥

परिहरति । तु शब्दः पक्षं व्यावर्त्तयति । दृश्यते हि कार्य्यकारणयोर्वैरूप्यं* केशगोमयवृश्चिकादौ । चेतनादचेतनोत्पत्तिनिषेधे तदंशस्यैव निषेधः । तुल्यांशसम्पत्तिश्चेत् प्रकृतेऽपि सदंशः ।

असदिति चेन्न प्रतिषेधमात्रत्वात् ॥ ७ ॥

श्रुतौ कारणत्वेनासदुक्तमिति चेत् । न । प्रतिषेधार्थमेव वचनम् । कथमसतः सज्जायेतेति । कार्य्यस्य वा पूर्व्वंप्रतिषेधो ब्रह्मकारणताय ।

अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॥ ८ ॥

पूर्व्वपक्षमाह । अपीतिर्लयः । कार्य्यस्य कारणलये तद्वत् प्रसङ्गः । स्थौल्यसावयवत्वपरिच्छिन्नत्वाशुद्धत्वादिधर्म्मसम्बन्धावश्यकत्वादसमञ्जसं ब्रह्मकारणवचनम् ।

न तु दृष्टान्तभावात् ॥ ९ ॥

नैवास्मदीये दर्शने किञ्चिदसामञ्जस्यमस्तीति तु शब्देन परिहरति । स्वपक्षस्थापनपरपक्षनिराकरणयोर्विद्यमानत्वान्न तु वचनम् । तत उत्पन्नस्य तत्र लये न कार्य्यावस्थाधर्म्मसम्बन्धः शरावरुचकादिषु प्रसिद्धः । भवतां पर न दृष्टान्तोऽस्ति ।

स्वपक्षदोषाच्च ॥ १० ॥

स्वपक्षे चैते प्रतिवादिनः साधारणा दोषाः । निर्व्विशेषात्

---

* वैरूप्यमिति क० ।

प्रधानात् सविशेषस्य कार्य्यता तस्योत्पत्तिः। लये तद्धर्म-सम्बन्धः। असत्कार्य्यवादप्रसङ्गः। तथैव कार्य्योत्पत्तौ कारणाभावेन नियमाभावः। भावे वा मुक्तानामपि पुनर्बन्धप्रसङ्गः।

## तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेदेवमप्यविमोक्षप्रसङ्गः॥ ११॥

वेदोक्तेऽर्थे शुष्कतर्केण प्रत्यवस्थातुमयुक्तं तर्कस्याप्रतिष्ठानात्। तर्कोनाम स्वोत्प्रेक्षिता युक्तिः। सा एकोक्ता नान्यैरङ्गीक्रियते। स्वतन्त्रायात्मनीयां मतिभेदात् वस्तुनोदृश्यासम्भवात् निया-मकाभावाच्च। अतो न तर्कस्य प्रतिष्ठा। पूर्वपक्षिणः परिहारः। अप्यन्यथानुमेयमिति चेत् एवमप्यन्यथा वयमनुमास्यामहे यथा नाप्रतिष्ठादोषो भविष्यति। न हि कोऽपि तर्कः प्रतिष्ठितो नास्तीति वक्तुं शक्यते। व्यवहारोच्छेदप्रसङ्गात्।

आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना।
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः॥

इति स्मृतेः॥

सावद्यतर्कपरिहारेण निरवद्यस्तर्कः प्रतिपत्तव्यो भवतीति चेत्। एवमप्यविमोक्षप्रसङ्गः। ब्रह्मवादिनोऽनिर्दुष्टतर्कसद्भावेऽपि* प्रकृतिवादिनस्तर्कस्य दोषाविमोक्षप्रसङ्गः। मूलनियमाभावात् वैमत्यस्य विद्यमानत्वात्।

## एतेन शिष्टा परिग्रहा अपि व्याख्याताः॥ १२॥

सांख्यमतस्य वैदिकप्रत्यासन्नत्वात् केषाञ्चित् शिष्टानां परि-

---

* निरवद्यतर्कसद्भावेऽपीति क०।

यत्नोऽप्यस्ति। अणुमायाकारणवादास्तु सर्वथा न शिष्टैः परिगृह्यन्त इति तेषां तर्काः पूर्वोक्तन्यायेन सुतरामेव निरस्ता वेदितव्याः।

भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत्॥ १३॥

कारणदोषं परिहृत्य कार्यदोषपरिहारार्थमारम्भः। भोग्यस्य भोक्त्रापत्तिः। ब्रह्मणो निर्विशेषस्य कारणत्वात् भोक्तुर्भोग्यत्वं भोग्यस्य च भोक्तृत्वमापद्येत। अतो न विभाग इति चेत्। स्याल्लोकवत्। यथा लोके कटककुण्डलादीनां सुवर्णकारणत्वेन सुवर्णानन्यत्वेऽपि न कटकस्य कुण्डलत्वमेवमेव न भोग्यस्य भोक्तृत्वम्।

तदनन्यत्वमारम्भणशब्दादिभ्यः॥ १४॥

श्रुतिविरोधं परिहरति। वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमिति। तत्र विकारो वाङ्मात्रेणैवारभ्यते न वस्तुत इत्यर्थः प्रतिभाति। तथा च सति कथं ब्रह्म कारणं भवेत्। अतः श्रुतिवाक्यार्थमाह। आरम्भणशब्दादिभ्यस्तदनन्यत्वं प्रतीयते। कार्यस्य कारणानन्यत्वं न मिथ्यात्वं। ये पुनर्मिथ्यात्वं तामसबुद्धयः प्रतिपादयन्ति तैर्ब्रह्मवादाः सूत्रश्रुतिनाशनेन तिलापः कृता वेदितव्याः। अन्तःप्रविष्टचौरवधार्थमेवैष आरम्भः। अलौकिकप्रमेये सूत्रानुसारेणैव निर्णय उचितः। न स्वतन्त्रतया किञ्चित् परिकल्पनं तर्काप्रतिष्ठानादिति निराकृतमेव। न चास्मिन्नपि सूत्रे मिथ्यात्वार्थः सम्भवति। एकविज्ञानेन सर्वविज्ञानोपक्रमबाधात् प्रकरणविरोधश्च। नयाविरोधभयपरित्यागेनैकमिदं सूत्रमन्यथा योजयन्नतिष्टष्ट इत्यलं विस्तरेण।

भावे चोपलब्धेः॥ १५॥

भाव एव विद्यमान एव घटे घटोपलब्धिः नाभावे। चकारात् मृत्तिकेत्येव सत्यमिति श्रुतिः परिगृहीता। वाङ्मात्रेण च उपलम्भे मिथ्यैवाथ घटोऽप्यसीत्युक्ते उपलभेत। इदं सूत्रं मिथ्यावादिना न ज्ञातमेव। अतएव पाठान्तरकल्पनम्।

सत्वाच्चावरस्य॥ १६॥

अवरस्य प्रपञ्चस्य सत्वात् त्रैकालिकत्वात् ब्रह्मत्वं। सदेव सौम्येदमग्र आसीत् यदिदं किञ्च तत् सत्यमित्याचक्षत इति श्रुतेः।

असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात्॥ १७॥

असद्वा इदमग्र आसीदिति श्रुत्या प्रागुत्पत्तेः कार्यस्यासत्त्वं बोध्यत इति चेत्। न। अव्याकृतत्वेन धर्मान्तरेण तथा व्यपदेशः। कुतः। वाक्यशेषात्। तदात्मानं स्वयमकुरुतेति स्वस्यैव क्रियमाणत्वात् इदमासीत्यप्रयोगाच्च।

युक्तेः शब्दान्तराच्च॥ १८॥

युक्तिस्तावत् समवेतमेव कार्यं सदुत्पाद्यत इति सम्बन्धस्य द्विनिष्ठत्वात् नित्यत्वाच्च कारणान्तरेणापि परम्परया सम्बन्धः। असद्वादोत्पत्तौ तु मिथ्यात्वमेव प्रवृत्तिस्त्वभिव्यक्त्यर्थेमिति। शब्दान्तरम्। असद्वा इदमग्रेऽग्रन्दः आत्मानं स्वयमकुरुतेति।

पटवच्च॥ १९॥

यथा संवेष्टितः पटो न व्यक्तं गृह्यते विस्तृतस्तु गृह्यते तथा आविर्भावानाविर्भावेन जगतोऽपि।

यथा च प्राणादिः ॥ २० ॥

यथा प्राणापानानां नियमने जीवनमात्रम् अनियमने प्रासुघनादि नैतावता* प्राणभेदः पूर्व्वमसत्त्वं वा तथा जगतोऽपि। प्रानक्रियाभेदात् सूत्रद्वयम्।

इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥ २१ ॥

ब्रह्मणो जगत्कारणत्वे इतरस्य जीवस्यापि ब्रह्मत्वात् तद्धितं कर्त्तव्यं तत्र करोतीति तदकरणादिदोषप्रसक्तिः। तत् सृष्ट्वा तदेवानुप्राविशत्। अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति तस्यैव जीवस्य व्यपदेशात्।

अधिकन्तु भेदनिर्द्देशात् † ॥ २२ ॥

तु शब्दः पक्षं व्यावर्त्तयति। यदि ब्रह्म तावन्मात्रं भवेत् तदायं दोषः। तत् पुनर्जीवाज्जगतश्चाधिकम्। कुतः। भेदनिर्द्देशात्। द्रष्टव्यादिवाक्येषु कर्म्मकर्त्तृव्यपदेशात् विज्ञानानन्दव्यपदेशाद्वा। नहि सम्पूर्णोऽशस्य हितं नियमेन करोति। सर्व्वेन्द्रियव्यापाराभावप्रसङ्गात्। स्वलीलयैव तु करोत्येव।

अश्मादिवच्च तदनुपपत्तिः ॥ २३ ॥

पार्थिवत्वाविशेषेऽपि हीरमाणिक्यपाषाणानां पलाशचम्पकचन्दनानाम् उत्तमनीचत्वमेवं जीवत्वांशत्वाविशेषेऽपि ब्रह्मादिस्थावरान्तानामुत्तमनीचत्वम्। कार्य्यवैलक्षण्यं तदनुरोधेन दर्शितः।

---

* नैव तावता इति क०।

† भेदव्यपदेशात् इति क०।

### उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥ २४ ॥

ब्रह्मैकमेव जगत्कारणमित्युक्तम्। तन्नोपपद्यते। कुलालादेश्चक्रादिसाधनान्तरस्योपसंहारदर्शनात् सम्पादनदर्शनादिति चेत्। न। क्षीरवद्धि। यथा क्षीरं कर्त्तारमनपेक्ष्य दधिभवनसमये दधि भवति एवमेव ब्रह्मापि कार्य्यसमये स्वयमेव सर्व्वं भवति।

### देवादिवदपि लोके ॥ २५ ॥

स्वतोभिन्नकरणे दृष्टान्तः। यथा देवर्षिपितरो बाह्यनिरपेक्षा एव स्वयोगबलेन सर्व्वं कुर्व्वन्ति एवं ब्रह्माप्यनपेक्ष्य तत्समवायं स्वत एव सर्व्वं करोति।

### कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥ २६ ॥

यद्येकमेव ब्रह्म स्वात्मानमेव जगत् कुर्य्यात् तदा कृत्स्नं ब्रह्मैकमेव कार्य्यं भवेत्। यथांशभेदे न व्यवस्था। तथा सति निरवयवत्वश्रुतिविरोधः। निष्कलं निष्क्रियं शान्तमिति।

### श्रुतेस्तु शब्दमूलत्वात् ॥ २७ ॥

तु शब्दः पक्षं व्यावर्त्तयति। श्रुतेः* श्रूयत एव द्वयमपि। न च श्रुतं युक्त्या बाधनीयं। शब्दमूलत्वात् शब्दैकसमधिगम्यत्वात्। अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत्। अर्व्वाचीनविकल्पविचारकृतर्कं† प्रमाणाभासशास्त्रकलितान्तःकरणदुरव-

---

* कपुस्तके श्रुतेरिति नास्ति।

† कुतर्कं इति क०।

ब्रह्मवादिनां विवादानवसरे * सर्व्वभवनसमर्थे ब्रह्मणि विरोधाभावाच्च। एवं परिहृतेऽपि दोषे स्वमत्याऽनुपपत्तिमुद्भाव्य सर्व्वसंप्लवं वदन् मन्दमतिः सद्भिरुपेक्ष्यः।

आत्मनि चैवं विचित्राश्च हि ॥ २८ ॥

सृष्टौ देशकालापेक्षापि नास्ति। आत्मन्येव सृष्टत्वात् देशकालसृष्टावपि आत्मन्येव साधिकरणस्य सृष्टत्वाच्च। बहिरन्तश्च जगत्सृष्टिं वा आह। विशेषाभावेन अनन्तरोऽबाह्य इति। विरोधाभावो विचित्रशक्तियुक्तत्वात् सर्व्वभवनसमर्थत्वाच्च।

स्वपक्षदोषाच्च ॥ २९ ॥

प्रधानवादिनोऽपि सर्व्वपरिणामसावयवत्वानित्यत्वादिदोषो दुःपरिहरः। युक्तिमूलत्वाच्च तस्य। अचिन्त्यकल्पनायां प्रमाणाभावाच्च।

सर्व्वोपेता च तद्दर्शनात् ॥ ३० ॥

सर्व्वशक्तिभिरुपेता उपगतः। चकारात् सत्यादिगुणयुक्तश्च। कुतः। तद्दर्शनात्। तथा वेदे दृश्यते। यः सर्व्वज्ञः सर्व्वशक्तिः। सर्व्वकर्त्ता सर्व्वकाम इत्यादि।

विकरणत्वान्नेति चेत् तदुक्तम् ॥ ३१ ॥

कर्त्ता इन्द्रियवान् लोके। ब्रह्मणो निरिन्द्रियत्वात् कथं कर्त्तृत्वमिति चेत्। न। अस्य परिहारः पूर्व्वमेवोक्तः श्रुतेस्तु शब्दमूलत्वादित्यत्र। अनवगाह्यमाहात्म्ये श्रुतिरेव शरणं नान्या वार्त्तायुक्तिरिति।

* वादानवसरे इति क०।

न प्रयोजनवत्त्वात्॥ ३२॥

न ब्रह्म जगत्कारणम्। कुतः। प्रयोजनवत्त्वात्। कार्यं हि प्रयोजनवत् दृष्टं लोके। ब्रह्मणि पुनः प्रयोजनवत्त्वं सम्भावयितुमपि न शक्यते। आप्तकामश्रुतिविरोधात्। व्यधिकरणो हेतुः न समासो वा।

लोकवत् तु लीला कैवल्यम्॥ ३३॥

तु शब्दः पक्षं व्यावर्त्तयति। लोकवत् लीला। नहि लीलायां किञ्चित् प्रयोजनमस्ति। लीलाया एव प्रयोजनत्वात्। ईश्वरत्वादेव न लीला पर्य्यनुयोक्तुं शक्या। सा लीला कैवल्यं मोक्षः। तस्य लीलात्वेऽप्यन्यस्य तत्कीर्त्तने मोक्ष इत्यर्थः। लीलैव कैवल्येति वा।

वैषम्यनैर्घृण्ये न, सापेक्षत्वात् तथाहि दर्शयति॥ ३४॥

कांश्चित् सुखिनः कांश्चित् दुःखिनश्च प्रलयञ्च कुर्व्वन् विषमो निर्घृणश्चेति चेत्। न। सापेक्षत्वात्। जीवानां कर्म्मानुरोधेन सुखदुःखे प्रयच्छतीति वादिबोधनायैतदुक्तम्। वस्तुतस्त्वात्मसृष्टेर्वैषम्यनैर्घृण्यसम्भावनैव नास्ति। दृष्टिवत् भगवान् बीजवत् कर्म्म। श्रुतिरेव तथा दर्शयति। एष ह्येव साधु कर्म्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषति। एष उ एवासाधु कर्म्म कारयति यमधोनिनीषति*। पुण्यो वै पुण्येन कर्म्मणा भवति पापः पापेन कर्म्मणेति च। सापेक्षमपि कुर्व्वन्नीश्वर इति माहात्म्यम्।

---

* उभयथापि निनीषते इति क०।

न कर्म्माविभागादिति चेन्नानादित्वात् ॥ ३५ ॥

न कर्म विभागात् कार्य्योद्गमात् पूर्वं सम्भवति । यथा-न्योन्याश्रय इति चेत् । न । अनादित्वात् । बीजाङ्कुरवत् प्रवाहस्यानादित्वात् ।

उपपद्यते चाप्युपलभ्यते च ॥ ३६ ॥

कथमनादित्वमिति चेत् । उपपद्यते । अन्यथा अस्य संसारः कृतहान्यकृताभ्यागमप्रसङ्गः । उपलभ्यते च श्रुतिस्मृत्योः । अनेन जीवेनात्मनेति सर्गादौ जीवप्रयोगादनादित्वं । तथैव यथा-पूर्वं स्रष्टा विश्वमिदं भवानिति च ।

सर्व्वधर्म्मोपपत्तेश्च ॥ ३७ ॥

उपसंहरति । वेदोक्ता धर्म्माः सर्व्वे ब्रह्मणि उपपद्यन्ते । सर्व्वसमर्थत्वादिति ।

इति श्रीवेदव्यासमतवर्त्ति श्रीवल्लभाचार्य्यविरचिते ब्रह्म-सूत्राणुभाष्ये द्वितीयस्याध्यायस्य प्रथमः पादः ।

# द्वितीयोऽध्यायः ।

## रचनानुपपत्तेश्च नानुमानम् ॥ १ ॥

स्वतन्त्रतया सर्व्वे वादाः* निराक्रियन्तेऽस्मिन् पादे । लोका-नाम्भूर्भुवादीनां अचेतनेन केवलेन प्रधानेन रचना नोपपद्यते । रचितत्वादेव न परिणामः सर्व्वस्य संश्लेषमसङ्गात् । अतश्चेतन-कर्तृका रचना नाचेतनेन प्रधानेन कर्त्तुं शक्या । तस्मात् कारण-त्वेन † प्रधानं नानुमातव्यम् । अन्यथोपपत्त्या बाधितमेवानु-मानमिति चकारार्थः ।

## प्रवृत्तेश्च ॥ २ ॥

भुवनानि विचार्य्य जनान् विचारयति । सर्व्वस्य तत्परि-णामे प्रवृत्तिर्नोपपद्यते । प्रधानस्य वा प्रथमप्रवृत्तिः । यद्यपि प्रधानकारणवादे फलपर्य्यन्तमङ्गीक्रियमाणे न किञ्चित् दूष-णम् कृतिमात्रस्य प्रधानविषयत्वात् तथापि वादिनं प्रति लौकिकन्यायेन वक्तव्यम् । तत्र लोके चेतनाचेतनव्यवहारोऽस्ति । चेतनाश्चतुर्विधा जीवाः सशरीराः अलौकिकाश्च । अन्येऽचेतनाः तन्न्यायेन विचारोऽपेति न किञ्चित् विचारणीयम् ।

## पयोऽम्बुवच्चेत् तत्रापि ॥ ३ ॥

यथा पयो विचित्रफेनरचनां करोति । यथा वा नद्यादि-

---

* सर्व्वशब्दा इति क० ।

† कारणत्वेन इति क० ।

जल स्वत एव स्यन्दत इति चेत्। न। तत्रापि दोहनाधिश्रयणे मेघानां चेतनानामेव सत्त्वात्। व्याख्यानान्तरे त्वन्नाम्बुवदित्युच्यत। द्वितीय * समाधानत्रोभयवादिसम्मतम्।

व्यतिरेकानवस्थितेश्चानपेक्षत्वात्॥ ४॥

प्रधानस्यान्यापेक्षाभावात् सर्व्वदा कार्य्यकारणमेव न व्यतिरेकेण तूष्णीमवस्थानमुचितम्। पुरुषाधिष्ठानस्य तु तुल्यत्वात्। सेश्वरसांख्यमतेऽप्यैश्वर्य्यमन्तर्धीनमिति यथास्थितमेव दूषणम्।

अन्यत्राभावाच्च न तृणादिवत्॥ ५॥

तृणपल्लवजलानि स्वभावादेव परिणमन्ते एवमेव प्रधानमिति न मन्तव्यम्। अन्यत्र अनड्वादौ दुग्धस्याभावात्। चकारात् चेतनक्रियाप्यस्ति। ततश्च लोकदृष्टान्ताभावादचेतनं प्रधानं न कारणम्।

अभ्युपगमेऽप्यर्थाभावात्॥ ६॥

प्रधानवादाङ्गीकारेऽपि † प्रेत्यकारित्वाभावात् न पुरुषार्थः सिध्यति। (2) 17-20

पुरुषाश्मवदिति चेत् तथापि॥ ७॥

प्रधानस्य केवलस्य कारणवादो निराकृतः। पुरुषप्रेरितस्य कारणत्वमाशङ्क्य परिहरति। पुरुषः पङ्गुरन्धमारुह्यान्योन्योपकाराय गच्छति। यथा वा अयःकान्तसन्निधिमात्रेण लोहे

* द्वितीये इति क०।

† प्रधानकारणवादाङ्गीकारेऽपि इति क०।

क्रियामुत्पादयति। एवमेव पुरुषाधिष्ठितं पुरुषसन्निहितं वा प्रधानं प्रवर्त्तिष्यत इति चेत् तथापि दोषस्तदवस्थः। प्रधानप्रेरकत्वं पुरुषस्य स्वाभाविकम् प्रधानकृतं वा। आद्ये प्रधानस्याप्रयोजकत्वं द्वितीये प्रधानदोषस्तदवस्थः। नित्यसम्बन्धस्य विशिष्टकारणत्वेऽनिर्मोक्षः। असक्तस्य तु मोक्षाङ्गीकारः सर्व्वथाऽनुपपन्नः।

अङ्गित्वानुपपत्तेश्च ॥ ८ ॥

प्रकृतिपुरुषयोरङ्गाङ्गित्वे भवेदप्येवं। तच्च नोपपद्यते। पुरुषस्याङ्गित्वे ब्रह्मवादप्रवेशो मतहानिश्च। प्रकृतेरङ्गित्वे त्वनिर्मोक्षः*। अनेन परिहृतोऽपि मायावादो निर्लज्जानां हृदये भासते।

अन्यथानुमितौ च ज्ञशक्तिवियोगात् ॥ ९ ॥

अन्यथा वयं सर्व्वमनुमिमीमहे यथा सर्व्वे दोषाः परिहृता भवेयुरिति चेत्। तथापि पूर्व्वं ज्ञानशक्तिर्नास्तीति मन्तव्यं। तथा सति बीजस्यैवाभावात् नित्यत्वाच्चानिर्मोक्ष † इति।

विप्रतिषेधाच्चासमञ्जसम् ॥ १० ॥

परस्परविरुद्धत्वान्मतवर्त्तिनां पञ्चविंशादिपक्षाङ्गीकारात्। अतस्त्वलौकिकार्थे वेद एव प्रमाणं नान्यदिति।

---

* प्रकृतेरङ्गित्वे निर्मोक्ष इति क०।

† नित्यत्वाच्च निर्मोक्ष इति क०।

महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥ ११ ॥

इदानीं परमाणुकारणवादो निराक्रियते। तत्र स्थूलकार्यार्थं प्रथमं परमाणुद्वयेन द्व्यणुकमारभ्यते। परमाणुद्वयसंयोगे द्व्यणुकं भवतीत्यर्थः। तत्रोपर्य्यधोभावमिलने द्व्यणुकं महत् स्यात् द्विगुणपरिमाणवत्त्वात् प्राक् पश्चान्मिलने दीर्घवत् वा स्यात्। परमाणुपरिमाणं ह्रस्वं परितोमण्डलञ्च। उपहासार्थं तस्य मतस्यानुवादः। किमतो यद्येवमत आह।

उभयथापि न कर्म्मातस्तदभावः ॥ १२ ॥

उभयथापि न। कुतः। न कर्म्म। नकारो देहली*प्रदीपन्यायेनोभयत्र सम्बध्यते। अतोद्व्यणुकाभावः। उभयथापि न परमाणुसङ्घटनम्। प्रदेशाभावात्। कल्पना मनोरथमात्रम्। असंयुक्ताभावात् तदेव तत् स्यात्। संयोगजनकं कर्म्मापि न सम्भवति कारणान्तराभावात्। प्रयत्नवदात्मसंयोगे चाहृष्टवदात्मसंयोगे चाभ्युपगम्यमाने निरवयवत्वात् तदेव तत् स्यात्। विशेषाभावात् विभागस्याशक्यत्वाच्च। अतो द्व्यणुकस्याभावः।

समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॥ १३ ॥

परमाणुद्व्यणुकयोः समवायोऽङ्गीक्रियते। सम्बन्धिनोरवस्थानमपेक्ष्य सम्बन्धस्योभयनिष्ठत्वात्। स च नित्यः सदा सम्बन्धिसत्त्वमपेक्षते। अतोऽपि न द्व्यणुक उत्पद्यते। किञ्च।

---

* देहलीय न्यायेनेति क०।

† क पुस्तके समवायो नास्ति।

समवायो नाङ्गीकर्त्तुं शक्यः। संयोगेन तुल्यत्वात् सम्बन्धत्वात् तस्य यथा सम्बन्धिनि सम्बन्धान्तरापेक्षा एवं समवायस्यापि। तथा सत्यनवस्थितिः।

नित्यमेव च भावात् ॥ १४ ॥

परमाणोः कारणान्तरस्य च नित्यमेव भावात् सदा कार्य्यं स्यात्।

रूपादिमत्त्वाच्च विपर्ययोऽदर्शनात् ॥ १५ ॥

यद्रूपादिमत्तदनित्यं। परमाणोरपि रूपादिमत्त्वात् विपर्ययः अनित्यत्वं अपरमाणत्वञ्च। न च प्रमाणबलेन तद्‌तिरिक्ते व्याप्तिरिति वाच्यम्। अदर्शनात्। कार्य्यानुपपत्तिः तुल्यैव परिहृता।

उभयथापि च दोषात् ॥ १६ ॥

परमाणूनां रूपादिमत्त्वे तदभावे च दोषः। एकत्रानित्यत्वमन्यत्र कार्य्यरूपस्य निर्मूलत्वञ्च। हरिद्राचूर्णसम्बन्धे रूपान्तरस्य जननादिविरोधोऽपि चकारार्थः।

अपरिग्रहाच्चात्यन्तमनपेक्षा ॥ १७ ॥

सर्व्ववैदिकानामपरिग्रहाच्चात्यन्तं सर्व्वथा नापेक्षते।

समुदायउभयहेतुकेऽपि तदप्राप्तिः ॥ १८ ॥

अतःपरं बाह्यमतनिराकरणम्। ते समुदायद्वयं जीवभोगार्थं संहन्यत इति मन्यन्ते। परमाणुसमूहः पृथिव्यादिभूतसमुदाय

## महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥ ११ ॥

इदानीं परमाणुकारणवादो निराक्रियते। तत्र स्थूलकार्य्यार्थं प्रथमं परमाणुद्वयेन द्व्यणुकमारभ्यते। परमाणुद्वयसंयोगे द्व्यणुकं भवतीत्यर्थः। तत्रोपर्य्यधोभावमिलने द्व्यणुकं महत् स्यात् द्विगुणपरिमाणवत्त्वात् प्राक् पार्श्वमिलने दीर्घवत् वा स्यात्। परमाणुपरिमाणं ह्रस्वं परितोमण्डलञ्च। उपहासार्थं तस्य मतस्यानुवादः। किमतो यद्येवमत आह।

## उभयथापि न कर्म्मातस्तदभावः ॥ १२ ॥

उभयथापि न। कुतः। न कर्म्म। नकारो देहली*प्रदीपन्यायेनोभयत्र सम्बध्यते। अतो द्व्यणुकाभावः। उभयथापि न परमाणुसङ्घट्टनम्। प्रदेशाभावात्। कल्पना मनोरथमात्रम्। असंयुक्ताग्राभावात् तदेव तत् स्यात्। संयोगजनकं कर्म्मापि न सम्भवति कारणान्तराभावात्। प्रयत्नवदात्मसंयोगे अदृष्टवदात्मसंयोगे वाभ्युपगम्यमाने निरवयवत्वात् तदेव तत् स्यात् विशेषाभावात् विभागस्याशक्यत्वाच्च। अतो द्व्यणुकस्याभावः।

## समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॥ १३ ॥

परमाणुद्व्यणुकयोः समवायोऽङ्गीक्रियते†। स्वस्थानमपेक्ष्य सम्बन्धस्योभयनिष्ठत्वात्। स च नित्यः सम्बन्धिसत्त्वमपेक्षते। अतोऽपि न द्व्यणुक उत्पद्यते।

* देहलीय न्यायेनेति क०।

† क पुस्तके समवायो नास्ति।

समवायो नाङ्गीकर्त्तुं शक्यः। संयोगेन तुल्यत्वात् सम्बन्धत्वात् तस्य यथा सम्बन्धिनि सम्बन्धान्तरापेक्षा एवं समवायस्यापि। तथा सत्यनवस्थितिः।

नित्यमेव च भावात् ॥ १४ ॥

परमाणोः कारणान्तरस्य च नित्यमेव भावात् सदा कार्यं स्यात्।

रूपादिमत्त्वाच्च विपर्ययोऽदर्शनात् ॥ १५ ॥

यद्रूपादिमत्तदनित्यं। परमाणोरपि रूपादिमत्त्वात् विपर्ययः अनित्यत्वं अपरमाणुत्वञ्च। न च प्रमाणबलेन तदतिरिक्ते व्याप्तिरिति वाच्यम्। अदर्शनात्। कार्य्यानुपपत्तिः श्रुत्यैव परिहृता।

उभयथापि च दोषात् ॥ १६ ॥

परमाणूनां रूपादिमत्त्वे तदभावे च दोषः। एकत्रानित्यत्वमन्यत्र कार्य्यरूपस्य निर्मूलत्वञ्च। हरिद्राचूर्णसम्बन्धे रूपान्तरस्य जननादिदोषोऽपि चकारार्थः।

अपरिग्रहाच्चात्यन्तमनपेक्षा ॥ १७ ॥

सर्व्ववैदिकानामपरिग्रहाच्चात्यन्तं सर्व्वथा नापेक्षते।

समुदायउभयहेतुकेऽपि तदप्राप्तिः ॥ १८ ॥ (4) 18 27

अतःपरं बाह्यमतनिराकरणम्। ते समुदायद्वयं जीवभोगार्थं संहन्यत इति मन्यन्ते। परमाणुसमूहः पृथिव्यादिभूतसमुदाय

एकः। रूपादिस्कन्धसमुदायश्चापरः। रूपविज्ञानवेदनासंज्ञासंस्कारसंज्ञकाः पञ्च स्कन्धाः। तदुभयसम्बन्धे जीवस्य संसारस्तदपगमे मोक्ष इति। तत्र उभयहेतुकेऽपि समुदाये जीवस्य तदप्राप्तिः। क्षणिकत्वात्। सर्वक्षणिकत्वे जीवमात्रक्षणिकत्वे वा तदप्राप्तिः।

## इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात् ॥ १९ ॥

क्षणिकत्वेऽपि पूर्वपूर्वस्योत्तरोत्तरप्रत्ययविषयत्वात् कारणत्वात् सन्ततेरेव जीवत्वाज्जडत्वाच्च न काप्यनुपपत्तिरिति चेत्। न। उत्पत्तिमात्रनिमित्तत्वात्। अनुसन्धानाभ्युपगमे स्थिरत्वापत्तिः। सम्बन्धवियोगार्थं को वा यतेत। स्थैर्याभावात् समुदायानुपपत्तिश्च।

## उत्तरोत्पादे च पूर्वनिरोधात् ॥ २० ॥

उत्तरोत्पत्तिरपि न सम्भवति। उत्पन्नस्य खलूत्पादकत्वम्। अत उत्तरोत्पत्तिसमये पूर्वस्य नष्टत्वात्। उत्पत्तिक्षण एव स्थितिप्रलयकार्यकरणसर्वाङ्गीकारे विरोधादेकमपि न स्यात्।

## असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॥ २१ ॥

एका क्षणिकत्वप्रतिज्ञा अपरा चतुर्विधान् हेतून् प्रतीत्य चित्तचैत्ता उत्पद्यन्त इति। असतः धर्मान्तरसम्बन्धे प्रथमप्रतिज्ञा नश्यति। असति द्वितीया। द्वितीया चेन्नाङ्गीक्रियते तदा प्रतिबन्धाभावात् सर्वं सर्वत्र एकदैवोत्पद्येत।

## प्रतिसंख्याऽप्रतिसंख्यानिरोधाप्राप्तिर-विच्छेदात् ॥ २२ ॥

अपि च। वैनाशिकाः कल्पयन्ति बुद्धिबोध्यन्त्रयादन्यत् संस्कृतं क्षणिकञ्चेति। त्रयं पुनर्निरोधद्वयमाकाशञ्च। तत्रेदानीं निरोधद्वयाङ्गीकारं दूषयति। प्रतिसंख्यानिरोधो नाम भावानां बुद्धिपूर्व्वको विनाशः। विपरीतोऽप्रतिसंख्यानिरोधः। त्रयमपि निरुपाख्यं। निरोधद्वयमपि न प्राप्नोति सन्ततेरविच्छेदात्। पदार्थानाञ्च नाशकसम्बन्धाभावात् प्रतिबन्धसम्बन्धाभावः। आद्यनिरोधः पदार्थविषयको व्यर्थः। द्वितीयः क्षणिकाङ्गीकारेणैव सिद्धत्वावाङ्गीकर्त्तव्यः।

## उभयथा च दोषात् ॥ २३ ॥

प्रतिसंख्यानिरोधान्तर्गताऽविद्याविनाशो मोक्ष इति क्षणिकवादिनो मिथ्यावादिनश्च मन्यन्ते। अविद्यायाः सपरिकराया निर्हेतुकविनाशे शास्त्रवैफल्यम्। अविद्यातत्कार्य्यातिरिक्तस्याभावान्न सहेतुकोऽपि। न हि वन्ध्यापुत्रेण रज्जुसर्पो नाश्यते। अत उभयथापि दोषः।

## आकाशे चाविशेषात् ॥ २४ ॥

यथोक्तमाकाशमप्यावरणाभावो निरुपाख्यमिति। तन्न। आकाशेऽपि सर्व्वपदार्थवत् वस्तुत्वव्यवहारस्याविशेषात्।

## अनुस्मृतेश्च ॥ २५ ॥

सर्व्वोऽपि क्षणिकवादी बाधितः स एवायं पदार्थ इत्यनुस्मरणात्। अनुभवस्मरणयोरेकाश्रयत्वमेकविषयत्वञ्च।

## नासतोऽदृष्टत्वात् ॥ २६ ॥

अपि च। नानुपमृद्य प्रादुर्भावं वैनाशिका मन्यन्ते। ततश्च असत अलीकात् कार्यं स्यात्। तन्न। अदृष्टत्वात्। न हि शशशृङ्गादिभिः किञ्चित्कार्यं दृश्यते। एवं सतः कारणत्वं पूर्वपादे उपपाद्य असतः कारणत्वं निराकृत्य व्यासचरणैर्वेदानामव्याकुलत्वे सम्पादितेऽपि पुनर्दैत्यव्यामोहनार्थं प्रवृत्तस्य भगवतो बुद्धस्याज्ञया

त्वञ्च रुद्र महाबाहो मोहशास्त्राणि कारय।
अतथ्यानि वितथ्यानि दर्शयस्व महाभुज।
स्वागमैः कल्पितैस्त्वञ्च जनान्मद्विमुखान् कुरु ॥

इत्येवंरूपया महादेवादयः स्वांशेनावतीर्य वैदिकेषु प्रविश्य विश्वासार्थं वेदभागान् यथार्थानपि व्याख्याय सदसद्विलक्षणामसदपरपर्यायामविद्यां सर्वकारणत्वेन स्वीकृत्य तन्निह्नुत्यर्थं जातिभ्रंशरूपं सन्न्यासपाषण्डं प्रसार्य सर्वमेव लोकं व्यामोहितवन्तः। व्यासोऽपि कलहं दृष्ट्वा अहरं यथा तूष्णीमास। अतोऽग्निना मया सर्वतः सदुद्धारार्थं यथाश्रुतानि श्रुतिसूत्राणि योजयता सर्वो मोहो निराकृतो वेदितव्यः। प्रथमाध्याय एव तन्मतमनूद्य विस्तरेण निराकृतमिति नात्रोच्यते।

## उदासीनानामपि चैवं सिद्धिः ॥ २७ ॥

यद्यभावाद्भावोत्पत्तिरङ्गीक्रियते तथा सत्युदासीनानामपि साधनरहितानां सर्वोऽपि धान्यादिः सिध्येत अभावस्य सुलभत्वात्।

(5) 28-32

## नाभाव उपलब्धेः ॥ २८ ॥

एवं कारणासत्त्वं निराकृत्य विज्ञानवाद्यभिमतं प्रपञ्चासत्यत्वं निराकरोति। स च ज्ञानातिरिक्तः प्रपञ्चो नास्तीत्याह। तत्र। अस्य प्रपञ्चस्य नाभावः। उपलब्धेः। उपलभ्यते हि प्रपञ्चः। यस्तूपलभमेव नाहमुपलभ इति वदति स कथमुपादेयवचनः स्यात्।

## वैधर्म्याच्च न स्वप्नादिवत् ॥ २९ ॥

ननूपलब्धिमात्रेण न वस्तुसत्त्वम्। स्वप्नमायाभ्रमेष्वन्यथा दृष्टत्वात् इति चेत्। न। वैधर्म्यात्। स्वप्नादिषु तदानीमेव स्वप्नान्ते वा वस्तुनोऽन्यथाभावोपलम्भात्। न तथा जागरिते वर्षानन्तरमपि दृश्यमानः स्तम्भः स्तम्भ एव। चस्य मोक्षे प्रवृत्तिव्याघातपकारार्थः।

## न भावोऽनुपलब्धेः ॥ ३० ॥

यदप्युच्यते बाह्यार्थव्यतिरेकेणापि वासनया ज्ञानवैचित्र्यं भविष्यतीति। तत्र। वासनानां न भाव उपपद्यते। त्वन्मते बाह्यार्थस्यानुपलब्धेः। उपलब्धस्य हि वासनाजनकत्वं। अनादित्वेऽप्यन्धपरम्परान्यायेनाप्रतिष्ठैव। अर्थव्यतिरेकेण वासनाया अभावात् वासनाव्यतिरेकेणाप्यर्थोपलब्धेः। अन्वयव्यतिरेकाभ्यामर्थसिद्धिः।

## क्षणिकत्वाच्च ॥ ३१ ॥

वासनाया आधारोऽपि नास्ति। आलयविज्ञानस्य क्षणिकत्वात्। प्रवृत्तिविज्ञानवत्। एवं सौत्रान्तिको विज्ञानवादी च

प्रत्युक्तः। माध्यमिकस्तु मायावादिवदत्यन्तमस्वद्भाषित्वादुपेक्ष्य इति न निराक्रियत आचार्येण।

सर्व्वथानुपपत्तेश्च ॥ ३२ ॥

किं बहुना बाह्यवादो यथा यथा विचार्यते तथा तथा असत्स्वरूपवेत्यलं विस्तरेण। चकाराद्वेदविरोधो मुख्यः।

नैकस्मिन्नसम्भवात् ॥ ३३ ॥

विवसनसमयो निराक्रियते। ते ह्यन्तर्निष्ठाः प्रपञ्चे उदासीनाः सप्त विभक्तीः परेच्छया वदन्ति। स्याच्छब्दोऽभीष्टवचनः। अस्तिनास्त्यवक्तव्यानां प्रत्येकसमुदायाभ्यां स्यात्पूर्व्वकः सप्त प्रकारो भवति। तदेकस्मिन् योजयन्ति। तद्विरोधेनासम्भवादयुक्तम्।

एवञ्चात्माकार्त्स्न्यम् ॥ ३४ ॥

ननु कथं बहिरुदासीनस्य तद्रूपणमत आह। एवमपि सत्यात्मनो वस्तुपरिच्छेदादकार्त्स्न्यं न सर्व्वत्वं। अथवा शरीरपरिमाण आत्मानेत्तदा सर्व्वशरीराणामतुल्यत्वात् आत्मनो न कार्त्स्न्यं न कृत्स्नशरीरतुल्यत्वम्।

न च पर्य्यायादप्यविरोधो विकारादिभ्यः ॥ ३५ ॥

शरीराणामवयवोपचयापचयानुसारेणात्मनोऽपि देवतिर्य्यङ्मनुष्येषु अवयवोपचयापचयाभ्यां तत्तुल्यता स्यात्। तथा सति पर्य्यायेणाविरोध इति न वक्तव्यम्। तथा सति विकारापत्तेः * सङ्कोचविकासेऽपि विकारस्य दुःपरिहरत्वात्।

* विकारापत्ते इति क०।

अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ॥ ३६ ॥

अन्त्यावस्थितिर्मुक्तिसमयावस्थिति. तस्मादेतो पूर्व्वदोषपरिहाराय च उभयनित्यत्वं भवेदणुत्वं वा महत्त्वं वा। उभयथापि शरीरपरिमाणो न भवतीति न तथार्थसिद्धि.।

(ग) 37-41

पत्युरसामञ्जस्यात् ॥ ३७ ॥

पराभिप्रेतान् जडजीवान्निराकृत्येश्वरं निराकरोति।

वेदोक्तादन्यथाभेऽपि विपरीतन्तु यद्भवेत्।

तादृशं वा स्वतन्त्रं चेदुभय सूत्रतो तथा॥

तार्किकादिमतं निराकरोति। पतिर्वेदोश्वरः तस्माद्विव-स्तदा विषमकरणादैषम्यनैर्घृण्ये स्याताम्। कर्म्मापेक्षायां*त्वनीश्वरत्वं युक्तिमूलत्वाद्दोषः। असामञ्जस्याद्धेतोर्न पतित्वेनेश्वरसिद्धिः।

सम्बन्धानुपपत्तेश्च ॥ ३८ ॥

जीवब्रह्मणोर्विभुत्वादजसंयोगस्यानिष्टत्वात् पतित्वानुपपत्तिः। तुल्यत्वादप्यनुपपत्तिरिति चकारार्थः।

अधिष्ठानानुपपत्तेश्च ॥ ३९ ॥

स च ईश्वरो जगत्कर्तृत्वेन कल्प्यमानो लौकिकन्यायेन कल्पनीयः। स च अधिष्ठितएव किञ्चित् करोतीति ईश्वरेऽप्य-

* कर्मापेक्षयेति क०।

धिष्ठानमङ्गीकर्त्तव्यम्। तस्मिन् कल्प्यमाने मतविरोधोऽनवस्था असम्भवश्च।

करणवच्चेन्न भोगादिभ्यः ॥ ४० ॥

करणवदङ्गीकारे असम्बन्धदोषः परिहृतो भवति। तच्च न युक्तं भोगादिप्रसक्तेः।

अन्तवत्त्वमसर्व्वज्ञता वा ॥ ४१ ॥

ईश्वरः प्रकृतिजीवनियमार्थमङ्गीकृतः। तस्य तयोः परिच्छेदे सम्भवति। ततश्च लोकन्यायेन जीवप्रकृत्योरन्तवत्त्वं भवेत्। ततश्च अनित्यतायां मोक्षशास्त्रवैफल्यम्। एतद्दोषपरिहाराय विभुत्वनित्यत्वे अङ्गीक्रियमाणे सम्बन्धाभावादसर्व्वज्ञता वा स्यात्। तस्मादसङ्गतस्तार्किकवादः।

उत्पत्त्यसम्भवात् ॥ ४२ ॥

भागवतमते कञ्चिदंशं निराकरोति। ते चतुर्व्यूहोत्पत्तिं वदन्ति। वासुदेवात् सङ्कर्षणः तस्मात् प्रद्युम्नः तस्मादनिरुद्ध इति। तत्र एषामीश्वरत्वं सर्व्वेषाम् उत सङ्कर्षणस्य जीवत्वम् अन्यान्यत्वम्। उत्पत्तिपक्षे जीवस्योत्पत्तिर्न सम्भवति। तथा सति पूर्व्ववत् सर्व्वनाशः स्यात्।

न च कर्त्तुः करणं ॥ ४३ ॥

कर्त्तुः सङ्कर्षणसंज्ञकाज्जीवात् प्रद्युम्नसंज्ञकम् मन उत्पद्यत इति। तल्लोके न सिद्धम्। न हि कुलालाद्दण्ड उत्पद्यत इति। चकाराद्द्वितीयस्य निराकरणम्।

विज्ञानादिभावे वा तदप्रतिषेधः॥ ४४॥

अथ सर्व्वे परमेश्वराः विज्ञानादिमन्त इति। तथा सति तदप्रतिषेधः। ईश्वराणामप्रतिषेधः। अनेकेश्वरत्वञ्च न युक्त-मित्यर्थः। वस्तुतस्तु ज्ञातत्वमेव दोषः।

विप्रतिषेधाच्च॥ ४५॥

बहुकल्पनया वेदनिन्दया च विप्रतिषेधः। चकाराद्वेद-प्रक्रियाविरोधः।

इति श्रीवेदव्यासमतवर्त्ति श्रीवल्लभाचार्य्यविरचिते ब्रह्मसूत्राणु-भाष्ये द्वितीयस्याध्यायस्य द्वितीयः पादः।



# द्वितीयोऽध्यायः।

## न वियदश्रुतेः ॥ १ ॥

श्रुतिवाक्येषु परस्परविरोधः परिह्रियते विप्रतिषेधपरिहाराय मीमांसायास्तदर्थं प्रवृत्तत्वात् मत्यविरोधाभ्याम्। तथा च ब्रह्मवादे जडजीवयोर्विरुद्धांशनिराकरणाय तृतीयपादारम्भः। द्विविधा हि वेदान्ते सृष्टिः। भूतभौतिकं सर्व्वं ब्रह्मण एव विस्फुलिङ्गन्यायेनैकः अपरो वियदादिक्रमेण। सा च अनामरूपात्मनो *नामरूपवत्त्वेनाभिव्यक्तिः। सजडस्यैव कार्यत्वात् तस्य* जीवस्य स्वांशत्वेनैव न नामरूपसम्बन्धः। अनित्ये जननं नित्येऽपरिच्छिन्ने समागमः। नित्यापरिच्छिन्नतनौ प्राकट्यञ्चेति सा त्रिधा। तत्र क्रमसृष्टौ सन्देहः। छान्दोग्ये हि स देव सौम्येदमग्र आसीदेकमेवाद्वितीयमित्युपक्रम्य तदैक्षत तत्तेजोऽसृजतेति तेजोबन्नसृष्टिरुक्ता। न वाय्वाकाशयोः। तैत्तिरीयके पुनः ब्रह्मविदाप्नोति परमित्युपक्रम्य तस्माद्वा एतस्मादात्मन आकाशः सम्भूत इति आकाशादिसृष्टिरुक्ता। उभयमपि क्रमसृष्टिवाक्यमित्येकवाक्यता युक्ता। छान्दोग्ये मुख्यतया सृष्टिस्तैत्तिरीये गौणी। मुख्यात्वये वक्ष्यते सोऽकामयतेत्यादिना। तत्र संशयः। किमाकाशम् उत्पद्यते न वेति। किं तावत् प्राप्तं नोत्पद्यत इति। कुतः। अश्रुतेः। श्रुतिवादिनां श्रुत्यैव निर्णयः। श्रुतौ पुनर्मुख्य* क्रमसृष्टौ न श्रूयते।

---

* मुख्ये क्रमसृष्टौ इति क०।

अस्ति तु ॥ २ ॥

तु शब्द पक्ष व्यावर्त्तयति । तैत्तिरीयके वियदुत्पत्तिरस्ति । यद्यपि मुख्ये नास्ति तथापि विरोधाभावादन्यत्रोक्तमप्यङ्गी-कर्त्तव्यमेकवाक्यत्वाय । एकविज्ञानेन सर्व्वविज्ञानानुरोधाच्च ।

गौण्यसम्भवात् ॥ ३ ॥

वियदुत्पत्तिर्गौणी भविष्यति । कुतः । असम्भवात् । न ह्याका-शस्योत्पत्तिः सम्भवति निरवयवत्वात् व्यापकत्वात् च । मुख्ये चाभावात् । एकविज्ञाने सर्व्वविज्ञानप्रतिज्ञा तु तदधिष्ठानत्वेन जीववत्तदंशत्वेन वा तच्छरीरत्वेन वा एकविज्ञानकोटिनिवे-शात् । लोकेऽप्यवकाशं कुर्व्वित्यादौ गौणप्रयोगदर्शनात् ।

शब्दाच्च ॥ ४ ॥

वायुश्चान्तरिक्षञ्च एतदमृतमिति । आकाशवत् सर्व्वगतश्च नित्य इति । न ह्यमृतस्य ब्रह्मदृष्टान्तभूतस्योत्पत्ति सम्भवति ।

स्याच्चैकस्य ब्रह्मशब्दवत् ॥ ५ ॥

ननु कथं वियदुत्पत्तिर्गौणी भविष्यति । यत्र हि सम्भूत इत्येकमेव पदमुत्तरत्रावर्त्तते । तथा सत्युत्तरत्र मुख्या आकाशे गौणीति युगपद्वृत्तिद्वयविरोध इति चेत् । न । एकस्यापि स्यात् क्वचित् मुख्या क्वचिद्गौणीति । ब्रह्मशब्दो यथा तपसा ब्रह्म विजिज्ञासस्व तपो ब्रह्मेति । प्रथमवाक्ये मुख्या द्वितीये गौणी । न चात्र प्रयोगभेदोऽस्तीति वाच्यम् । सम्भूतशब्दोऽप्यावर्त्तते न तु तादृशार्थयुक्तोऽपि । आत्मसत्त्वनैव तत्सत्त्वमिति । सत्त्वगुणो वचनहेतु । तत्तद्रूपापन्न ब्रह्मैव सर्व्वत्र कारणमिति नानेक

लक्षणा। तद्भावापत्ति*विशेषणत्वात्स्वार्थमपि न लक्षणा। स्वभावतोऽपि ब्रह्मणः सर्व्वरूपत्वात्। तस्मादोषो आकाश सम्भूतिश्रुतिरित्येवं प्राप्ते दूरमाह।

प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः॥ ६॥

भवेदेतदेवं यदि छान्दोग्यश्रुतिर्न विरुध्येत। कथं। एकविज्ञानेन सर्व्वविज्ञानप्रतिज्ञा बाध्येत। अव्यतिरेकात्। अनुद्गमात्। यदि सम्बद्धमेव ब्रह्मणा आकाशन्तिष्ठेत् तदा ब्रह्मविज्ञानेनाकाशविषयीकरणे तवैवविज्ञानम्। आकाशस्य च अलौकिकत्वात् तज्ज्ञानं सर्व्वज्ञतायां अपेक्षितमेव। न च जीववत् लौकिकत्वात्। व्यवहारमात्रविषयत्वात् नातीन्द्रियत्वादिचिन्ता। अनुद्गमेऽपि वस्तुसामर्थ्यात् कथं प्रतिज्ञा हीयत इत्यत आह। शब्देभ्यः। येनाश्रुतं श्रुतं भवत्यमतं मतं भवत्यविज्ञातं विज्ञातं भवतीति शब्दात् प्रकृतिविकारभावेनैव उत्पादयन्ति ज्ञानं। शब्देभ्यो हेतुभ्यः प्रतिज्ञाहानिरिति योजना।

यावद्विकारन्तु विभागो लोकवत्॥ ७॥

तु शब्द आकाशोत्पत्त्यसम्भावनाशङ्कां वारयति। यद्विकृतं तस्य सर्व्वस्य विभाग उत्पत्तिः। आकाशमपि विकृतं लौकिकव्यवहारविषयत्वात्। यथा लोके विकृतमात्रमुत्पद्यते। आकाशोत्पत्तौ श्रुत्वा सिद्धायाम् आकाशवत्सर्व्वगतश्च नित्यः आकाशशरीरं ब्रह्म स यथाऽनन्तोऽयमाकाश एवमनन्त आत्मा वेदितव्यः आकाश आत्मा इत्यादि श्रुतयः समोऽनेन सर्व्वेण च

* तद्भावापत्तिरिति क०।

आकाशे तिष्ठन् सर्व्वमाश्लेषेवमादिभिरेकवाक्यतां लभन्ते। व्यवहारे त्वज्ञबोधनं वाक्यानामुपयोगः।

एतेन मातरिश्वा व्याख्यातः॥ ८॥

आकाशोत्पत्तिसमर्थनेन मातरिश्वोत्पत्तिः समर्थिता। सैषा ऽनस्तमिता देवतेति भौतिकवायुव्यावृत्त्यर्थम् अलौकिकपदम्।

असम्भवस्तु सतोऽनुपपत्तेः॥ ९॥

ननु ब्रह्मणोऽप्युत्पत्तिः स्यात् आकाशवत् सर्व्वगतश्च नित्य इति श्रुतेराकाशन्यायेन सर्व्वगतत्वनित्यत्वयोरभावे इतीमामाशङ्कां तुशब्दः परिहरति। सतः सदात्मस्य उत्पत्तिर्न सम्भवति। न हि कुण्डलोत्पत्तौ कनकोत्पत्तिरुच्यते। नामरूपविशेषाभावात्। उत्पत्तिश्च स्वीक्रियमाणा नोपपद्यते। सतो न सम्भवति अन्यतस्त्वनवस्था। यदेव च मूलं तदेव ब्रह्मेति।

तेजोऽतस्तथाह्याह॥ १०॥

तेजोऽतः वायुतः तथाह्याह वायोरग्निरिति श्रुतेः। हि शब्देनैवमाह। छान्दोग्यश्रुतिः प्रतिज्ञाहानिनिराकरणार्थन्तैत्तिरीयकमपेक्षते वाय्वाकाशयोरुत्पत्त्यर्थं। तथा चोपजीव्यस्य प्राधान्यात् वायुभावापन्नमेव सत् तेजस उत्पादकमिति स्वीकरोति। ब्रह्मण एव सर्व्वोत्पत्तिपक्षस्त्वविरुद्धः।

आपः॥ ११॥

तथाह्याहेत्येव। इदमेकमनुवादसूत्रमविरोधख्यापकम्। न श्रुत्योः सर्व्वत्र विरोध इति।

पृथिव्यधिकाररूपशब्दान्तरेभ्यः ॥ १२ ॥

ता आप ऐक्षन्त बह्वः स्याम प्रजायेमहीति ता अन्नमसृजन्तेति। तत्र अन्नशब्देन व्रीह्यादय आहोस्वित् पृथिवीति सन्देहः। ननु कथं सन्देहः। पूर्व्वन्यायेनोपजीव्यश्रुतेर्बलीयस्त्वादिति चेत्। उच्यते। अद्भ्यः पृथिवी पृथिव्याः ओषधयः ओषधीभ्योऽन्नमित्यत्र वर्त्तते। तथा सति पृथिवीमोषधीश्च स्रष्टा आपो अन्नं सृजन्ति। आहोस्वित् अन्नशब्देनैव पृथिवीति। नन्वेवमस्तु पृथिव्योषधिस्रष्टृत्वान्तरसन्नस्रष्टिरिति चेत्। न। छान्दोग्यश्रुतेरत्रैवाभावात् महाभूतमात्रस्यैवाभिलषितत्वात्। एकपदलक्षणापेक्षया तत्स्वीकारस्य गुरुत्वात् पूर्व्वोक्तएव संशयः। तत्र अन्नमयं हि सौम्य मन, आपोमयः प्राणस्तेजोमयी वागिति त्रयाणां सहचारः सर्व्वत्रोपलभ्यते लौकप्रसिद्धिः अर्थएभूयिष्ठलिङ्गञ्च। तस्मात् पृथिव्योषध्यन्नानां मध्ये अभेदविवक्षया यत्किञ्चित् यत्राप्ये अन्नमुक्तं। इत्येवं प्राप्ते उच्यते। अन्नशब्देन पृथिवी। कुतः। अधिकाररूपशब्दान्तरेभ्य.। अधिकारो भूतानामेव न भौतिकानां। नीलञ्च रूपं पृथिव्या एव भूतसहपाठात्। शब्दान्तरमद्भ्यः पृथिवीति। तस्मादन्नशब्देन पृथिव्येव।

तदभिध्यानादेव तु तल्लिङ्गात् सः ॥ १३ ॥

आकाशादेव कार्य्यादय्यादिकार्य्योत्पत्तिं तु शब्दो वारयति। स एव परमात्मा वाय्वादीन् सृजति। कथं तच्छब्दवाध्यतेति चेत्। तदभिध्यानात्। तस्य तस्य कार्य्यस्योत्पादनार्थं तदभि-

ध्यानं तत्तदात्मकत्वं तेन तदात्वत्वमिति। ननु यथाश्रुतमेव कुतो न गृह्यते इत्यत आह। तल्लिङ्गात्। सर्व्वकर्त्तृत्वं लिङ्गं तस्यैव सर्व्वत्र वेदान्तेष्ववगतं। जड़तो देवताया वा यत् किञ्चित् जायमानं तत्सर्व्वं ब्रह्मणएवेति सिद्धं।

विपर्य्ययेण तु क्रमोऽत उपपद्यते॥ १४॥

यथोत्पत्तिर्न तथा प्रलयः किन्तु विपर्य्ययेण क्रमः। अतः उत्पत्त्यनन्तरं प्रलयः। कुतः। उपपद्यते। प्रवेशविपर्य्ययेण हि निर्गमनं। क्रमस्त्वाविवेत्सत्।

अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात्॥ १५॥

तैत्तिरीयके आकाशात् अन्नपर्य्यन्तमुत्पत्तिमुक्त्वा अन्नमयादयो निरूपिताः। तत्रान्नमयस्य प्राणमयस्य च सामग्री पूर्व्वमुत्पन्नोक्ता। आनन्दमयस्तु परमात्मा। मध्ये विज्ञानमनसी विद्यमाने क्वचिदुत्पन्ने इति वक्तव्ये। तत्र क्रमेणोत्पन्ने इति वक्तव्यम्। क्रमस्तु प्रातिलोम्येन सूत्रे विपर्य्ययानन्तरकथनात्। अन्तरेति वचनात् च। तेजोऽबन्नानामन्नमये गतत्वात् वाय्वाकाशयोः प्राणएव गतत्वात् आकाशात् पूर्व्वं विज्ञानमनसी उत्पन्ने इति वक्तव्य। तयोरग्रे वचनमेव लिङ्गमिति। अतस्तयोरुत्पत्तिर्वक्तव्येति चेत्। न। अविशेषात्। नामरूपविशेषवतामेवोत्पत्तिरुच्यते न त्वनयोः। विज्ञानमयस्य जीवत्वात् मनोमयस्य च वेदत्वात्। अतो भूतभौतिकत्वविशेषाभावात् न तयोरुत्पत्तिर्वक्तव्या।

## चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्त-स्तद्भावभावित्वात् ॥ १६ ॥

ननु विज्ञानमयस्य जीवस्यानुत्पत्तौ सर्व्वव्यवहारोच्छेदः। उत्पत्तिस्तु त्रिविधा निरूपिता। अनित्ये जननं नित्ये परिच्छिन्ने समागम इति। तथा च जीवस्य समागमलक्षणाप्युत्पत्तिर्न स्या-दितीमामाशङ्कां निराकरोति तु शब्दः। चराचरे स्थावरजङ्गमे शरीरे तयोर्विशेषेण व्यपाश्रय आश्रयः शरीरसम्बन्ध इति यावत्। स तु स्यात् न तु स्वतः। ननु शरीरस्योत्पत्तौ जीवोऽप्युत्पद्यते अन्यथा जातकर्म्मादीनामभावप्रसङ्गात् इति चेत्। न। तद्-व्यपदेशः तस्य शरीरस्य जन्ममरणधर्म्मवत्त्वेन जीवव्यपदेशो भाक्तो लाक्षणिकः। कुतः। तद्भावभावित्वात्। शरीरस्यान्वयव्यति-रेकाभ्यामेव जीवस्य तद्भावित्वं। देहधर्म्मो जीवस्य भाक्त। तत्-सम्बन्धेनैवोत्पत्तिव्यपदेश इति सिद्धं।

## नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः ॥ १७ ॥

ननु जीवोऽप्युत्पद्यतां किमिति भाक्तत्वं कल्प्यते इति चेत्। न। आत्मा नोत्पद्यते। कुतः। अश्रुतेः। न हि आत्मन उत्पत्तिः श्रूयते। देवदत्तो जातो विष्णुमित्रो जात इति देहोत्पत्तिरेव नतु तद्व्यतिरेकेण पृथक्जीवोत्पत्तिः श्रूयते। विस्फुलिङ्गवदु-च्चरणं नोत्पत्तिः नामरूपसम्बन्धाभावात्। एतस्य गुणाः स्वरूपं चाग्रे वक्ष्यते। किञ्च नित्यत्वाच्च। ताभ्यः श्रुतिभ्यः। अयमात्माऽ-जरोऽमरः न जायते म्रियते इत्येवमादिभ्यः। गुणान्निरूपयन् प्रथमतश्चैतन्यगुणमाह।

## ज्ञोऽतएव ॥ १८ ॥

ज्ञः चैतन्यस्वरूपः अतएव श्रुतिभ्यः विज्ञानमय इत्यादिभ्यः । सर्व्वविप्लववादी ब्रह्मवाक्यान्युदाहृत्य सूत्रोक्तसिद्धान्तमन्यथाकृत्य श्रुतिसूत्रोल्लङ्घनेन प्रगल्भते । स वक्तव्यः । किं जीवस्य ब्रह्मत्वं प्रतिपाद्यते जीवत्वं वा निराक्रियत इति । आद्ये इष्टापत्तिः नहि विस्फुलिङ्गोऽग्नंशो भूत्वा नाग्निः । द्वितीये स्वरूपनाशः । जीवत्वं कल्पितमिति चेत् । न । अनेन जीवेनात्मनेति श्रुतिविरोधात् । न च अनादिरयं जीवब्रह्मविभागो बुद्धिकृतः प्रमाणाभावात् । स देव सोम्येदमग्र आसीदेकमेवाद्वितीयमिति श्रुतिविरोधश्च । न च जीवातिरिक्तं ब्रह्म नास्ति सर्व्वश्रुतिसूत्रनाशप्रसङ्गात् । यः सर्व्वज्ञः सर्व्वशक्तिः अयमात्माऽपहतपाप्मा । अधिकन्तु भेदनिर्द्देशादित्यादि बाधः । तस्मात् तदंशस्य तद्रूपदेशवाक्यमात्रं स्वीकृत्य शिष्टपरिग्रहार्थं माध्यमिकाक्षेनायमपरावतारो नितरां सद्भिरुपेक्ष्यः ।

## उत्क्रान्तिगत्यागतीनां ॥ १९ ॥

अतएवेति च वर्त्तते । स यदाऽस्माच्छरीरादुत्क्रामति सहैवैतैः सर्व्वैरुत्क्रामति । ये वैचास्माल्लोकात् प्रयान्ति चन्द्रमसमेव ते सर्व्वे गच्छन्तीति । तस्माल्लोकात् पुनरेत्यस्मै लोकाय कर्म्मणे । श्रुत्युक्तानाम् उत्क्रान्तिगत्यागतीनां श्रवणात् यथायोग्यं तस्य परिमाणमङ्गीकर्त्तव्यं । यद्यपि आराग्रमात्रो ह्यपरोऽपि दृष्ट इति श्रुत्यैव परिमाणमुक्तं तथापि बह्वादिविप्रतिपन्नत्वात् युक्तिभिः साधयति । ब्रह्मवैलक्षण्यार्थमुत्क्रान्तिपूर्व्वकत्वमुक्तं ।

स्वात्मना चोत्तरयोः ॥ २० ॥

उत्क्रान्तिगत्यागतीनां सम्बन्धे इन्द्रियादिभिः परिष्वङ्गोऽप्यस्ति। ततः सन्देहोऽपि भवेत्। किमुपाधित एतेषां सम्बन्धो भवेत् स्वतो वेति। उत्तरयोर्गत्यागत्योः स्वात्मना केवलस्वरूपेण।

ऊर्णनाभिर्यथा तन्तून् सृजते सञ्चरत्यपि।
जाग्रत्स्वप्ने तथा जीवो गच्छत्यागच्छते पुनः॥

ब्रह्मोपनिषत् अनेन जीवेनात्मनाऽनुप्रविश्य ब्रह्माप्येति कामरूप्यनुसञ्चरन्निति वा। अथवा। उत्क्रान्तिगत्यागतीनां जीवसम्बन्धएव बोध्यते नाणुत्वं। स्वात्मनाचोत्तरयोरित्यणुत्वम्। अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलादिति उत्क्रमे गत्यतिरिक्ते स्वातन्त्र्याभावात्। स्वात्मना जीवरूपेण चकारादिन्द्रियैश्च गत्यागत्योः सम्बन्धी जीव इत्यर्थः। अतो मध्यमपरिमाणमयुक्तमित्यणुरेव भवति।

नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥ २१ ॥

जीवो नाणुर्भवितुमर्हति। कुतः। अतच्छ्रुतेः। अणुत्वविपरीतव्यापकत्वश्रुतेः। स वा एष महानज आत्मा योऽयं विज्ञानमय इति चेत्। न। इतराधिकारात्। इतरः परं ब्रह्म तस्य अधिकारे महानज इति वाक्यं। प्रकरणेन शब्दाश्च नियम्यन्ते। अन्यपराण्यपि योगेन ब्रह्मपरा भविष्यन्ति।

स्वशब्दोन्मानाभ्याञ्च ॥ २२ ॥

स्वयं विहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा

प्रस्वपितीति स्वशब्दोऽणुपरिमाणं जीवं बोधयति। न हि स्वप्ने व्यापकस्य वा शरीरपरिमाणस्य वा विहरणं सम्भवति। बालाग्रशतभागस्य शतधा कल्पितस्य तु। भागो जीवः स विज्ञेय इति। आराग्रमात्रो ह्यपरोऽपि दृष्ट इति चोन्मानम्। चकारात् स्वप्नप्रबोधयोः सन्धौ वा गतिदर्शनम्।

अविरोधश्चन्दनवत् ॥ २३ ॥

अणुत्वे सर्वशरीरव्यापि चैतन्यं न घटत इति विरोधो न भवति चन्दनवत्। यथा चन्दनमेकदेशस्थितं सर्वदेहसुखं करोति। गङ्गामग्नैकस्थितं वा तापनिवृत्तिम्।

अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्-
हृदि हि ॥ २४ ॥

चन्दने अवस्थितिवैशेष्यमनुपहतत्वचि सम्यक्तया अवस्थानं तस्मात् त्वच एकत्वात् तत्र भवतु नाम नतु प्रकृते तथा सम्भवतीति चेत्। न। अभ्युपगमात्। अभ्युपगम्यते जीवस्यापि स्थानविशेषः। हृदि हि। हृदि जीवस्य स्थितिः। गुहां प्रविष्टाविति हि युक्तिः।

गुणाद्वा लोकवत् ॥ २५ ॥

जीवस्य हि चैतन्यं गुणः स सर्वशरीरव्यापी। यथा मणि-प्रभैकस्य कान्तिर्बहुदेशं व्याप्नोति तद्वत्। प्रभाया गुणत्वमेव स्पर्शानुपलम्भात्। उदकगतौष्ण्यवत्। न च विजातीयस्यारम्भकत्वम्। प्रमाणाभावात्। लोकप्रतीतिश्च सर्वैर्वादिभिरुप-

पांद्या तत्र गुणिकल्पनापेक्षया गुण एव स्थलान्तरे आरभ्यत इति कल्पतां तथैव लोकप्रतीतेः। पुष्परागादेरपि प्रभारूपमेव तावद्देशं व्याप्नोतीति मणिस्वभावादेवाङ्गीकर्त्तव्यम्। आरम्भकस्य तैजसत्वाभावात्। कान्तिः प्रभारूपमिति हि लोकपर्यायः। वा शब्दो यथालोकं युक्तिः कल्पनीयेति सूचयति। ब्रह्मसिद्धान्ते तु यथैव लोके दृश्यते तथैव ब्रह्मणो जातमिति न कल्पनालेशोऽपि।

व्यतिरेको गन्धवत्॥ २६॥

सिद्धं दृष्टान्तमाह। यथा चम्पकादिगन्धश्चम्पकव्यवहितस्थलेऽप्युपलभ्यते। वेदोक्तत्वादस्य दृष्टान्तत्वम्। यथा वृक्षस्य संपुष्पितस्य दूराद्गन्धो वात्येवं पुण्यस्य कर्मणो दूराद्गन्धो वातीति। अन्यथाकल्पनात्वयुक्तेत्यवोचाम।

तथा च दर्शयति॥ २७॥

हृदयायतनत्वमणुपरिमाणत्वञ्च आत्मनोऽभिधाय तस्यैवालोमभ्य आनखाग्रेभ्य इति चैतन्येन गुणेन समस्तशरीरव्यापित्वं दर्शयति।

पृथगुपदेशात्॥ २८॥

प्रज्ञया शरीरं समारुह्येति करणत्वेन पृथगुपदेशाच्चैतन्यं गुणः।

तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्॥ २९॥

ननु तत्त्वमस्यादिवाक्यैः परमेव ब्रह्म जीव इति कथमणुत्वमितीमामाशङ्कां निराकरोति तु शब्दः। तस्य ब्रह्मणो गुणाः

प्रज्ञाहृत्वादयस्तस्मात् जीवे सारा इति जड़वैलक्षण्यकारिणि इति प्रमात्ये राजपदप्रयोगवत् जीवे भगवद्व्यपदेशः। मैत्रेयीति सम्पूर्णे ब्राह्मणे भगवत्त्वेन जीव उक्तः*। ननु वाग्मन्यस्यान्यधर्मवत्त्वेन कथनम्। न हि निरूपपत्तस्थलएवोपचारः सम्भवति तत्राह प्राज्ञवत्। तद्यथा प्रियया स्त्रिया संपरिष्वक्त इत्यत्र एवमेवायं शारीर आत्मा प्राज्ञेनात्मना संपरिष्वक्त इत्यभिधाय प्राज्ञस्वरूपमाह तद्वा अस्यैतदतिच्छन्दोऽपहतपाप्माभयं रूपमत्रोकान्तरमत्र पिता अपिता भवतीत्यादि। प्राज्ञस्य सुषुप्तिसाक्षी। न हि तस्यापहतपाप्मत्वमस्ति ब्रह्मलिङ्गत्वात्। एवमेव शारीरस्यापि जीवस्य ब्रह्मधर्मयोधिकाः श्रुतयः। [इदमत्र तत्त्वम्। सर्वोपनिषत्सु ब्रह्मज्ञानं परमपुरुषार्थसाधनमिति तन्निर्णयार्थं भगवान् व्यासः सूत्राणि चकार। तत्र ब्रह्मसूत्रे विचारं प्रतिज्ञाय जगत्कर्तृत्वाद्यसाधारणलक्षणं ब्रह्मणः प्रतिज्ञाय समन्वयनिरूपणे जीववाक्यानि दूरीकृत्याविरोधेऽपि ऐक्येऽपि हिताकरणादिदोषमाशङ्क्य अधिकन्तु भेदनिर्देशादिति परिहृत्य जीवस्याणुत्वम् उपचारात् ब्रह्मत्वमंशत्वं पराधीनकर्तृत्वादिकं प्रतिपाद्य तस्यैव दक्षिणमार्गेण पुनरावृत्तियुक्ता ससाधनेन ब्रह्मज्ञानेनार्चिरादिद्वारा ब्रह्मप्राप्तिमुक्ता न स पुनरावर्त्तत इत्यनावृत्तिं वदन् शास्त्रपर्यवसानेन सर्वान् वेदान्तान् अव्याकुलतया योजितवान्। तत्र कश्चित् तद्व्यपदेशेन मोक्षानि तत्त्वमस्यादिवाक्यानि स्वीकृत्य जीवमात्रं च ब्रह्म

* भगवत्त्वेन जीवत्वेन जीव उक्त इति क०।

जीवस्य तदतिरिक्तस्य सर्वस्य कारणांशकार्य्यरूपस्य मिथ्यात्वं परिकल्प्य तद्बोधकश्रुतीनामर्थवादत्वेन मिथ्यात्वं जीवस्य सुषुप्तिसम्पत्त्योर्भगवता प्रकटीकृतमानन्दरूपत्वं तत्प्रतिपादकवाक्यानां सद्योमुक्तिरूपफलवाचकत्वमुक्त्वा क्रममुक्तिमुपासनापरत्वेन योजयित्वा वेदसूत्राणि व्याकुलीचकार। तत् वेदान्तानां ब्रह्मपरत्वं जीवपरत्वं वेति यदत्र युक्तं तत्सद्भिरनुसन्धेयम्।

## यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात्॥ ३०॥

ननु कथमन्यस्य जीवस्य सर्व्वोत्कृष्टव्यपदेशोऽपि। न हि प्रामाणिकैः सर्व्वथा अयुक्तो व्यपदेशः क्रियते। न जीवस्तद्गुणसारत्वात् ब्रह्मण. आनन्दांशस्य प्राकट्यादिति वाच्यम्। तथा सति प्राज्ञवत् मुक्तसिरोहितं स्यादिति तस्य तद्व्यपदेशोऽप्ययोऽप्रयुक्तश्चेति चेत्। नायं दोषः। कुतः। यावदात्मभावित्वात् यथात् यावत्पर्य्यन्तमात्मानित्यत्वात् सर्व्वदा आनन्दांशस्य प्राकव्यात् तस्य तथैव दर्शनमस्ति। अनाहत्यैश्वर्य्यादीनामुक्तत्वात् प्राज्ञात् सम्यक्त्वं विशेषः। चकारात् तस्य आनन्दः प्रकटित इति न दूषणगन्धोऽपि। व्यपदेशो वा नात्यन्तमयुक्तः। यावदात्मा ब्रह्म भवत्यानन्दांशप्राकव्येन तावदेव तद्व्यपदेशः राजज्येष्ठपुत्रवत्। एतदेवोक्तं व्यापकत्वश्रुतिस्तस्य भगवत्त्वेन युज्यते।

आनन्दांशाभिव्यक्तौ तु तत्र ब्रह्माण्डकोटयः।
प्रतीयेरन् परिच्छेदो व्यापकत्वञ्च तस्य तदिति॥

## पुंस्त्वादिवत्त्वस्य सतो व्यक्तियोगात्॥ ३१॥

व्यपदेशदशायामपि आनन्दांशस्यानात्यन्तमसत्वं। पुंस्त्वादि-

वत् यथा पुंस्त्वं सेकादिसामर्थ्यं बाल्ये विद्यमानमेव यौवने प्रकाशते तथा आनन्दांशस्यापि स्वतएव व्यक्तियोगः ।

निल्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतर-
नियमोवाऽन्यथा ॥ ३२ ॥

ननु कथमेवं स्वीक्रियते । इदानीं संसारावस्थायां सचित्-प्रकाशमेव मोक्षे त्वानन्दांशोऽपि प्रकट इति तन्निवारयति । तथा सति निल्यमुपलब्धिः स्यादानन्दांशस्य तथा सति न संसारावस्थोपपद्येत । अथानुपलब्धिः सर्वदा तथा सति मोक्षदशा विरुध्येत । अथान्यतरनियमः । जीवो निरानन्द एव ब्रह्मत्वानन्दरूपं । तथा सति ब्रह्मैव सन् ब्रह्माप्येतीति श्रुति-विरोधः । तस्मात् पूर्वोक्तएव प्रकारः स्वीकर्त्तव्य इति सिद्धम् ।

कर्त्ता शास्त्रार्थवत्त्वात् ॥ ३३ ॥

साङ्ख्यानां प्रकृतिगतमेव कर्त्तृत्वमिति । तन्निवारणार्थ-मधिकरणारम्भः । कर्त्ता जीवएव । कुतः । शास्त्रार्थवत्त्वात् । जीव-मेवाधिकृत्य वेदे अभ्युदयनिःश्रेयसफलार्थं सर्व्वाणि कर्म्माणि विहितानि । ब्रह्मणोऽनुपयोगात् । जड़स्याशक्यत्वात् । सन्दिग्धेऽपि तथैवाङ्गीकर्त्तव्यम् ।

विहारोपदेशात् ॥ ३४ ॥

तस्यैव गान्धर्व्वादिलोकेषु यथा कामयते तत्तद्भवतीति विहार उपदिष्टः । तत्र कर्त्तृत्वभोक्तृत्वयोः साधुकारी साधुर्भव-तीति सामानाधिकरण्यश्रवणात् जीवएव कर्त्ता ।

उपादानात् ॥ ३५ ॥

तदेषां प्राणानां विज्ञानेन विज्ञानमादायेति जीवेन सर्व्वेषां विज्ञानमुपादीयते। तस्मादिन्द्रियादीनां करणत्वमेव स्वातन्त्र्यादस्यैव कर्त्तृत्वं। यत्तु मन्यते बुद्धिसम्बन्धात् जीवस्य कर्त्तृत्वमिति। स प्रष्टव्यः। किं बुद्धिकर्त्तृत्वं जीवे समायाति अथवा जीवगतमेव कर्त्तृत्वं बुद्धिसम्बन्धात् उद्गच्छति अथवा अयविभाणायितमेव कर्त्तृत्वं सम्बन्धे समायाति। नाद्यः जड़त्वात्। अनङ्गीकारात् पूर्व्वं निराकृतत्वाच्च। द्वितीये त्विष्टापत्तिः उपादानविरोधश्च। तृतीये शास्त्रविरोधः। ब्रह्मणि सिद्धत्वाच्च। असत्कार्य्यस्य निराकृतत्वात्। सर्व्वविभ्रमस्तु माध्यमिकवदुपेक्ष्यः।

व्यपदेशाच्च क्रियायां नचेन्निर्देशविपर्य्ययः ॥ ३६ ॥

व्यपदेशः विज्ञानं यज्ञं तनुते कर्म्माणि तनुतेऽपि चेति अत्र साङ्ख्ये बुद्ध्यादीनामेव कर्त्तृत्वं न जीवस्येति। क्रियायां यागादिकर्म्मसु ननु भोगे। जीवस्य कर्त्तृत्वं न चेत्। न। तथा सति निर्देशस्य विपर्य्ययो भवेत्। विज्ञानेन विज्ञानमादायेति तृतीयानुरोधात्। प्रकृतेऽपि तृतीयान्तता आपद्येत। अथ स्वव्यापारे कर्त्तृत्वं तथापि पूर्व्वनिर्देशस्य विज्ञानमयस्य विपर्य्ययः स्यात् विकारित्वं स्यात्। तथास्वतन्त्रापत्वात्। विज्ञानमादायेत्यत्र विपर्य्ययएव। एकस्य प्रदेशभेदेनार्थभेदोऽपि। भवन्ति सर्व्वे शब्दाः स्वभावतएव प्रवर्त्तन्ते। औपचारिकत्वज्ञापकाभावात्। यज्ञो जायमानइति यज्ञादीनां शिरस्त्वादिवत्। तस्मात् विज्ञानमयो जीवएव। जड़स्य च स्वातन्त्र्याभावाच्च कर्त्तृत्वं।

उपलब्धिवदनियमः ॥ ३७ ॥

ननु जीवस्य कर्तृत्वे हिताकरणादिदोषप्रसक्तिरिति चेत्। न। उपलब्धिवदनियमः। यथा चक्षुषेष्टमनिष्टञ्चोपलभते एव मिन्द्रियैः कर्म्म कुर्व्वन् इष्टमनिष्टं वा प्राप्नोति।

शक्तिविपर्य्ययात् ॥ ३८ ॥

नन्वीश्वरवत् स्वार्थमन्यथा न कुर्य्यादिति चेत्। शक्ति-विपर्य्ययात् तथा सामर्थ्याभावात्। इतएव दैवादहितमपि करोति।

समाध्यभावाच्च ॥ ३९ ॥

जीवस्य क्रियाप्रागभावो योगेन सिध्यतः समाध्यभावात् प्रलयभाव इत्यर्थः। चकारात् ताद्दशमन्त्राभावोऽपि। न च सहजकर्त्तृत्वे अनिर्मोक्ष। पराधीनकर्त्तृत्वएवैतत्। ब्रह्मवत्। सांख्यस्य तन्मतानुसारिणो वाक्यस्य भ्रम एव। कर्त्तृत्वे न मुक्ति-रिति। मुमुक्षुः एव मुच्येतेति वाक्यवत्। निरिन्द्रियस्यैव समा-धिरित्यपि। करणत्वेन बद्धि वदन् न केनापि दूष्यते। तस्मा-ज्जीवस्य स्वाभाविकं कर्त्तृत्वं। ध्यायतीव लेलायतीवेत्यपि पर-धर्म्मानुकरणम्। अयमप्येको धर्म्मः। स्वाप्ययसम्पत्त्योर्ब्रह्मव्यपदेशं पुरस्कृत्य सर्व्वं विप्लवं वदन् उपेक्ष्यः।

यथा च तक्षोभयथा ॥ ४० ॥

ननु कर्म्मकराणां कर्त्तृत्वभोक्तृत्वभेदो दृश्यते तथा कर्त्तृत्व-भोक्तृत्वयोर्भेदो भविष्यतीति चेत्। न। यथा तक्षा रथं निर्माय

सत्रारूढो विहरति । पीठं वा । स्ती वा न ध्रियते वाय्वादि-
द्वारेण वा । चकारादन्येऽपि स्वार्थकर्त्तारः । अन्यार्थमपि करो-
तीति चेत् । तथा प्रकृतेऽपि सर्व्वहितार्थं प्रयतमानत्वात् ।
न च कर्त्तृत्वमात्रं दुःखरूपं । पयःपानादेः सुखरूपत्वात् । तथा
च स्वार्थपरार्थकर्त्तृत्वं कारयितृत्वञ्च सिद्धम् ।

## परात्तु तच्छ्रुतेः ॥ ४१ ॥

कर्त्तृत्वं ब्रह्मगतमेव । तत्सम्बन्धादेव जीवे कर्त्तृत्वं तदंशत्वा-
दैश्वर्य्यादिवत् । न तु जड़गतमिति । अतो नान्योऽतोऽस्तीति
सर्व्वकर्त्तृत्वं घटते । कुत एतत् तच्छ्रुतेः । तस्यैव कर्त्तृत्वकार-
यितृत्वश्रवणात् । यमधोनिनीषति तमसाधु कारयतीति । सर्व्व-
कर्त्ता सर्व्वभोक्ता सर्व्वनियन्तेति । सर्व्वरूपत्वाच भगवति दोषः ।

## कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्या-दिभ्यः ॥ ४२ ॥

ननु वैषम्यनैर्घृण्ययोर्न परिहारः । अनादित्वेन तस्यैव
कारयितृत्वादिति पक्षं तु शब्दो निवारयति । प्रयत्नपर्य्यन्तं जीव-
कृत्यम् । अपे तस्याशक्यत्वात् स्वयमेव कारयति । यथा पुत्रं
यतमानं बालम् । पदार्थगुणदोषौ वर्णयन्नपि तत्प्रयत्नाभि-
निवेशं दृष्ट्वा तथैव कारयति । सर्व्वत्र तत्कारणत्वाय तदानीं
फलदातृत्वे या इच्छा तामेवानुवदति उन्नीषति निनीषतीति ।
अन्यथा विहितप्रतिषिद्धयोर्वैयर्थ्यापत्तेः । अप्रामाणिकत्वञ्च ।
फलदाने कर्म्मापेक्षः । कर्म्म कारणे प्रयत्नापेक्षः । प्रयत्नो कामा-
पेक्षः । कामे प्रवाहापेक्ष इति मर्य्यादारक्षार्थं वेदः । चकारात्

ततो न ब्रह्मणि दोषगन्धोऽपि । न चातीश्वरत्वं मर्य्यादामार्गस्य तथैव निर्म्माणात् । यथान्यथा स सृष्टिमध्य इति ।

अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॥ ४३ ॥

जीवस्य ब्रह्मसम्बन्धिरूपमुच्यते । जीवोनाम ब्रह्मण अंशः । कुतः । नानाव्यपदेशात् सर्व्वएवात्मानो व्युच्चरन्ति कपूयचरणाः रमणीयचरणा इति च । ननु ब्रह्मणो निरवयवत्वात् कथं जीवस्यांशत्वमिति वाच्यम् । न हि ब्रह्म निरंशं सांशमिति वा कश्चिल्लोके सिद्धं वेदैकसमधिगम्यत्वात् । सा च श्रुतिर्यथोपपद्यते तथा तदनुसारेण वेदार्थज्ञानार्थं युक्तिर्वक्तव्या । सा चेत् स्वयं नावगता तपोविशेषं चभिज्ञा वा प्रष्टव्या इति । ननु सर्व्वविप्लवः कर्त्तव्यः । तत्रैषा युक्तिः ।

विस्फुलिङ्गा इवाग्नेर्हि जड़जीवा विनिर्गताः ।
सर्व्वतः पाणिपादान्तात् सर्व्वतोक्षिशिरोमुखात् ॥
निरिन्द्रियात् स्वरूपेण तादृशादिति निश्चयः ।
सदंशेन जड़ाः पूर्व्वं चिदंशेनेतरे अपि ।
॥अन्यधर्म्मतिरोभावामूलेच्छातः स्वतन्त्रिण इति

ब्रह्मवादे अंशपक्ष एव । ननु अंशत्वे सजातीयत्वमायाति । श्रुत्यन्तरे पुनर्ब्रह्मदाशा ब्रह्मेमे कितवा उत । अथ सर्व्वस्यापि ब्रह्मविज्ञानेन विज्ञानप्रतिज्ञानात् दाशादीनामपि ब्रह्मत्वं प्रतीयते । तत्कार्य्यत्वएव स्यादिति चेत् । न । अन्यथा चापि प्रकारान्तरेणापि एके शाखिनः दाशकितवादित्वमधीयते शरीरत्वेन अंश-

त्वेन च। स्वरूपतः कार्य्याभावेऽपि प्रकारभेदेन कार्य्यत्वात्। तथाच न साजात्यं आनन्दांशस्य तिरोहितत्वात्। धर्म्मान्तरैस्तु साजात्यमिष्टमेव।

मन्त्रवर्णात् च ॥ ४४ ॥

पुरुष एवेदꣳसर्व्वमित्युक्त्वा पादोऽस्य विश्वा भूतानीति भूतानां जीवानां पादत्वं पादेषु स्थितत्वेन वा अंशत्वमिति।

अपि च स्मर्य्यते ॥ ४५ ॥

वेदे स्वतन्त्रतया उपपाद्य वेदान्तरेऽपि तथार्थ्यत्वानुस्मरणं। ममैवांशो जीवलोके जीवभूतः सनातन इति।

प्रकाशादिवन्नैवंपरः ॥ ४६ ॥

जीवस्यांशत्वे हस्तादिवत्तद्दुःखेन परस्यापि दुःखित्वं स्यादिति चेत्। न। एवंपरो न भवति। एवमिति प्रकारभेदः छिद्रत्वेनानुभव इति यावत्। अन्यथा सर्व्वरूपत्वात्। कुत एवं तत्राह प्रकाशादिवत्। नाग्नेर्हि तापो न हिमस्य तत् स्यादिति। प्रकाशग्रहणं धर्म्मत्वद्योतनाय। दुःखादयोऽपि प्रज्ञा-धर्म्मा इति। अतो हेतुध्वा अंशस्यैव दुःखित्वं न परस्य। अथवा प्रकाशः प्रकाशदोषेण यथा न दुष्टः पापस्यापि तदंशत्वादिति।

स्मरन्ति च ॥ ४७ ॥

स्मरन्ति च सर्व्वेऽपि ऋषयो अंशिनः दुःखसम्बन्धं स्मरन्ति।

तत्र यः परमात्मा हि स नित्यो निर्गुणः स्मृतः।
न लिप्यते फलैश्चापि पद्मपत्रमिवाम्भसेति।
कर्म्मात्मा त्वपरोयोऽसौ मोक्षबन्धैः स युज्यते।

एकत्वतया सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः। चकारात् तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति।

## अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत् ॥ ४८ ॥

नतु जीवस्य भगवदंशत्वे विधिविषयत्वाभावात्कर्मसम्बन्धाभावेन कथं फलसम्बन्धः। जीवस्य च पुनरनेकदेहसम्बन्धात् कः शूद्रः का भार्येति ज्ञानमप्यशक्यं। अतः कर्ममार्गस्य व्याकुलत्वात् कथं जीवस्यापि दुःखित्वमित्याशङ्का परिहरति। अनुज्ञापरिहारौ विधिनिषेधौ जीवस्य देहसम्बन्धात् यो देहो यदा गृहीतस्तत्कृतौ। यथा अग्निः चण्डालभाण्डस्थमुदकं तद्घटादिश्च परिह्रियते एवमुत्कृष्टं परिगृह्यते। तथा जीवेऽपि देहसम्बन्धकृतः सम्बन्धयाथार्थिको भगवत्कृतश्च। अध्यासिकोऽग्न्याधानान्निवर्त्तते द्वितीयो भगवतैव। जीवन्मुक्तानामपि व्यवहारदर्शनात्। श्रुतिस्तु भगवत्कृतसम्बन्धमेवाश्रित्याग्निहोत्रादिकं विधत्ते। अन्यथा विद्या स्वज्ञानस्य बोधयन्ती कर्माणि न विदध्यात्। शास्त्रज्ञानस्य पूर्वमेव सिद्धत्वात्। कथं सिद्धवदावश्यकं विदध्यात्। आसोऽपि देहसम्बन्ध एव।

## असन्ततेश्चाव्यतिकरः ॥ ४९ ॥

नतु देहस्यापि बाल्यकौमारादिभेदात् कथं कर्मकाले ब्राह्मणत्वादि। जीवैक्यादिति चेद्देहान्तरेऽपि स्यादिति तत्राह। देहान्तरे सन्ततिरपि नास्ति। बाल्यादिभेदे पुनः सन्ततिरेका। अतः सन्ततिभेदान्न कर्मणां सांकर्यमिति।

## आभास एव च ॥ ५० ॥

ननु सच्चिदानन्दस्य ब्रह्मणोंऽशः सच्चिदानन्द एव भवेत् अतः कथं प्रयाहे प्रवेशो भगवतश्च सर्वकार्याणि तत्राह। आभास एव जीव आनन्दांशस्य तिरोहितत्वात्। चकारादाकारस्याप्यभावः। ननु सर्वथा प्रतिबिम्बवन्मिथ्यात्वं जलचन्द्रवदित्येकस्थानिकत्वे दृष्टान्तः। तथा सत्यध्यासस्य स्वस्य न स्यात्। तत्र हत्यादिदोषप्रसङ्गश्च। अतो न मिथ्यात्वरूप आभासोऽत्र विवक्षितः।

## अदृष्टानियमात् ॥ ५१ ॥

इतिवत्तीय नैयायिकाद्यभिमतं जीवरूपं निराकरोति। नानात्मानो व्यवस्थात इति भोगव्यवस्थया जीवनानात्वमङ्गीकृतम्। तत्रादृष्टस्य नियामकत्वं तन्मते विभुं देशान्तरवस्तूत्पत्त्यन्यथानुपपत्त्या व्यापकत्वञ्चाङ्गीकृतं। एवञ्च क्रियमाणे मूल एव कुठारः स्यात्। सर्वेषामेव जीवानामेकशरीरसम्बन्धात् साक्षाददृष्टत्वङ्कवेत्। न च मिथ्याज्ञानेन व्यवस्था। तत्रापि तथा। तथानुपपत्त्या परिकल्पन। श्रुत्यैवोपपत्तेः। एतेन विरोधादविभागमाणमपि निराकृतं।

## अभिसन्ध्यादिष्वपि चैवं ॥ ५२ ॥

ननु मनप्रभृतीनां नियामकत्वात् तेषामीश्वरेच्छया नियतत्वात् न दोष इति चेत्। न। पूर्ववदेव दोषप्रसक्तिः। तादृशेश्वरकल्पना च पूर्वमेव निराकृता।

प्रदेशादिति चेन्नान्तर्भावात्॥ ५३॥

आत्मनो विभुत्वेऽपि प्रदेशभेदेन व्यवस्था आत्मनि तादृशः प्रदेशविशेषोऽस्ति येन सर्व्वमुपपद्यत इति चेत्। न। अन्यस्यापि प्रदेशस्तत्रान्तर्भवति। तत्रैव वा देहस्य देशान्तरगमने पूर्व्वदेशस्य त्यक्तत्वात् सोऽंशः अन्तर्भवेत् तिरोभूतो भवेदिति।

इति श्रीवेदव्यासमतवर्त्ति श्रीवल्लभविरचिते ब्रह्मसूत्राणुभाष्ये द्वितीयस्याध्यायस्य तृतीय पाद।

## चतुर्थः पादः ।

### तथा प्राणाः ॥ १ ॥

जीवशरीरमध्यवर्त्तिनां प्राणादीनां विचारार्थं पादारम्भः । तत्र जीवं निरूप्य तादृशधर्म्मवत्त्वं प्राणे प्रतिदिशति । प्राण-शब्दप्रयोगः प्रियत्वात् । प्राणाः इन्द्रियाणि मनसो मुख्यत्वा देकवचनं । उत्क्रान्तिगत्यागतीनामित्यारभ्य सर्व्वोपपत्तिरत्र-तिदिष्टा । चिदंशत्वापि तिरोभाव इति पृथङ्गिरूपणं । ननु तद्गुणसारत्वादयः कथमुपदिश्यन्त इति चेत् । सत्यं सर्व्वत्र तथापि ये प्राणं ब्रह्मोपासत इति ।

### गौण्यसम्भवात् ॥ २ ॥

ननु उत्क्रान्त्यादिश्रुतिर्गौणी भविष्यति । न । गौण्यसम्भ-वात् । सा श्रुतिर्गौणी न सम्भवति । एकैव श्रुतिर्जीवे मुख्या प्राणे गौणीति कथं सम्भवति ।

### तत् प्राक्श्रुतेश्च ॥ ३ ॥

जड़त्वेनाधिकविचारोऽत्र क्रियते । सृष्टेः पूर्व्वमपि प्राणा-दीनां स्थितिः श्रूयते । असद्वा इदमग्र आसीत् तदाहुः किं तदसदासीदित्यृषयो वाव तेऽग्रे असदासीत् । तदाहुः । के ते ऋषय इति प्राणा वा ऋषय इति । ननु सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमिति विरोध इति चेत् । स्वरूपोत्पत्ति-रेवात निषिध्यते जीववत् नतूद्गमः । उद्गमात् पूर्व्वन्तु सदे-

वेति श्रुतिः। चकारात् मोक्षे तस्यापि सम्पत्तिः श्रूयते स्थला-
न्तरे। एतस्माज्जायते प्राणो मनः सर्व्वेन्द्रियाणि चेति श्रुति-
र्विस्फुलिङ्गसदृशी।

### तत्पूर्व्वकत्वाद्वाचः ॥ ४ ॥

मनः पूर्व्वरूपं वागुत्तररूपमिति तस्य वक्षुरेव शिर इति।
तथाच वेदानां स्वत उत्पत्त्यभावात् तत्पूर्व्वरूपमनसः कथमुत्-
पत्तिः।

### सप्त गतेर्विशेषितत्वाच्च ॥ ५ ॥

तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्व्वे
प्राणा अनूत्क्रामन्तीति पूर्व्वोक्तानां चक्षुरादीनाम्। अथ
रूपज्ञो भवतीत्येकीभवति न पश्यतीत्याहुरित्यादिभिर्जीवगतिः
सप्तानां गतिभिर्विशेष्यते। सप्तगतत्वेन विशेषिताः एकीभव-
न्तीति। अतो जीवसमानयोगक्षेमत्वाज्जीवतुल्यत्वेति। चकारात्
तत्तदुपाख्यानेषु चक्षुःप्रभृतीनां देवतात्वं सम्वादश्च। चतश्चेतन-
तुल्यत्वम्। केचिदिदं सूत्रमुत्तरसूत्रपूर्व्वपक्षत्वेन योजयन्ति।
तत्रायमर्थः। ते प्राणाः कतीत्याकाङ्क्षायां सप्त प्राणाः प्रभवन्ति
तस्मात् सप्तार्चिषः समिधः सप्तजिह्वाः। अष्टौ ग्रहा अष्टावतिग्रहा
इति। सप्त वै शीर्षण्याः प्राणाद्वाव वाचाविति नव वै पुरुषे
प्राणा नाभिर्दशमी दश वै पशोः प्राणा आत्मैकादश इत्येवमादिषु
नानासङ्ख्या प्राणानां प्रतीता। तत्र श्रुतिविप्रतिषेधे किं युक्त-
मिति संशये सप्तैवेति प्राप्तम्। कुतः। गतेः सप्तानामेव गतिः
श्रूयते सप्त इमे लोका येषु चरन्ति प्राणा गुहाशया निहिताः

सप्त सप्तेति। किञ्च। विशेषितत्वाच्च जीवस्योत्क्रमणसमये सप्तानामेव विशेषितत्वम्। अन्ये तु पुनरेतेषामेव वृत्तिभेदाद्भेदा इति। एवं प्राप्ते उच्यते।

हस्तादयस्तु स्थितेऽतो नैवं॥ ६॥

पूर्व्वसम्बन्धे उत्तरत्र पूर्व्वपक्षः। तु शब्दः पूर्व्वपक्षं व्यावर्त्तयति। हस्तादयः सप्तभ्योऽधिकाः। हस्तौ चादातव्यञ्च उपस्थश्चानन्दयितव्यं च पायुश्च विसर्ज्जयितव्यञ्च पादौ च गन्तव्यं चेति चक्षुरादिगणनायामेतेऽपि चत्वार इन्द्रियत्वेन गणिताः। स्थिते सति श्रुतौ गणनया चक्षुरादितुल्यत्वे सति अतो हेतोः सप्तैवेति न किन्त्वेकादश प्रयान्तरगणनास्वनयाऽसम्भवाभिप्राया अधिकासङ्ग्रान्तःकरणभेदादिति। एकादशैवेन्द्रियाणीति स्थितम्।

अणवश्च॥ ७॥

सर्व्वे प्राणा अणुपरिमाणाः गतिमत्त्वेन नित्यत्वे अणुत्वमेव। परिमाणप्रमाणाभावात् पुनर्वचनम्।

श्रेष्ठश्च॥ ८॥

मुख्यश्च प्राणो नित्यगतिमान् अणुपरिमाणश्च। चकारादतिदेशः। नासदासीदित्यत्र आनीदवातं स्वधया तदेकमिति अननात्मकस्य पूर्व्वसत्ता प्रदर्शिता।

न वायुक्रिये पृथगुपदेशात्॥ ९॥

ननु मुख्यः प्राणो वायुरेव भविष्यति। इन्द्रियाणां क्रिया वा। एवं हि श्रूयते यः प्राणः स वायुः। एष वायुः पञ्चविधः प्राणोऽपानो व्यान उदानः समान इति सामान्यकरणवृत्तिः

प्राणाद्या वायवः पञ्चेति । तदान्तरीया आचचते तदुभयमपि न । कुतः । पृथगुपदेशात् । एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी इति प्राणवाय्वोः पृथगुपदेशात् । वृत्तितद्वतोरभेदेन ततोऽपि पृथगुपदेशाच्च ।

चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॥ १० ॥

स प्राणः स्वतन्त्रः परतन्त्रो वेति विचारे स्वतन्त्र इति तावत् प्राप्तं । सुप्तेषु वागादिषु प्राण एकोऽस्ततानाः प्राणः संवर्गो वागादीन् संवृङ्क्ते प्राण इतरान् प्राणान् रचसि मातेव पुत्रानिति इमामाशङ्कां निराकरोति तु शब्दः । चक्षुरादिवदयमपि प्राणः अस्वतन्त्रः । मुख्यतो भगवदधीनः व्यवहारे जीवाधीनः । कुतः । तत्सहशिष्ट्यादिभ्यः चक्षुरादिभिः सह शासनात् । इन्द्रियजयवत् प्राणजयस्यापि दृष्टत्वात् । आदिशब्देन जडत्वादयः ।

अकरणत्वाच्च न दोषस्तथाहि दर्शयति ॥ ११ ॥

ननु प्राणस्य जीवोपकरणत्वे तदुपकारकव्यापारवत्त्वमपेक्ष्यते । तच्चैकादशेव इत्त्यन्तरेऽपि सिद्धाः ।

एकादशासो मनसो हि वृत्तय
आकूतयः पञ्चधियोऽभिमानः ।
मात्राणि कर्माणि पुरश्च तासां
वदन्ति चैकादशवीरभूमीरिति ।

तथा कथिमाणस्य व्यापारोऽस्तीति चेत् । नैष दोषः । कुतः । अकरणत्वात् । करणस्यैव हि व्यापारोऽपेक्षितः । अन्यस्य

कार्य्यमात्रमपेक्षितं तत्राह। तथाहि कार्य्यत्वं युक्तं तत् श्रुतिरेव दर्शयति। तस्मिन्नुत्क्रामत्यथेतर इत्यादिश्रुतिभिः प्राणनिमित्तैव शरीरस्थितिरिति। तस्माद्व्यापाराभावेऽपि स्वरूपस्थितिमात्रेण तस्योपकारित्वम्।

पञ्चवृत्तेर्मनोवद्व्यपदिश्यते ॥ १२ ॥

व्यापारव्यतिरेकेणोपकारित्वमसमञ्जसमिति चेत्। तत्राह पञ्चवृत्तेः अहमेवैतत्पञ्चधात्मानं विभज्यैतद्बाणमवष्टभ्य विधारयामीति यथा मनसो द्वारभेदेनैवैकादृग्वृत्तयः स्वरूपत एव एवमेव प्राणस्यापि पञ्चधात्मानं विभज्य कार्य्यकारणं व्यपदिश्यते।

अणुश्च ॥ १३ ॥

अतिदेशेन प्राणमप्यणुत्वं पञ्चधात्मानं विभज्येति वचनात् सन्दिग्धं पुनर्विधीयते। अयमप्यणुः। चकारात् पूर्व्वोक्तसर्व्वसमुच्चयः।

ज्योतिराद्यधिष्ठानन्तु तदामननात् ॥ १४ ॥

वागादीनां देवताधिष्ठानवतां प्रवृत्तिः स्वत एव वा जीवाधिष्ठानप्रप्रेरणयोर्विद्यमानत्वादिति संशयः। विशेषकार्य्याभावात् न देवतापेक्षेति पूर्व्वपक्षं निराकरोति तु शब्दः। वागादीनां ज्योतिरादि अग्न्यादिरधिष्ठानमवश्यमङ्गीकर्त्तव्यम्। कुतः। तदामननात्। तथा आम्नायते अग्निर्वाक् भूत्वा मुखं प्राविशदित्यादि। अयमर्थः।

योऽध्यात्मिकोऽयं पुरुषः सोऽसावेवाधिदैविकः।
यस्तत्रोभयविच्छेदः स स्मृतो ह्याधिभौतिकः ॥ इति

आध्यात्मिकादीनां स्वरूपं वागादयथानुरूपा नित्याः। तत्र यदि त्रैविध्यं न कल्प्येत तदैकस्मिन्नेव शरीरे उपचीर्णं शरीरान्तरे न भवेत्। कल्प्यमाने तु अग्निर्देवतारूपोऽनेकरूपभवनसमर्थो वाग्रूपो भूत्वा सर्व्वत्र प्रविष्ट इति सङ्गच्छते। ते चान्यादयश्चेतना भगवदंशाश्चिरोहितानन्दाः सामर्थ्ययुक्ता इति कार्य्यवशादवगम्यन्ते। आध्यात्मिकाधिदैविकयोरेकत्वात् वदनादिकार्य्यार्थमाध्यात्मिका एव निरूपिता उद्गमने एतस्मात् जायते प्राण इत्यादिषु। वागादीनां नियमेन तत्तज्जीवसान्निध्यं ततश्चानिर्गमनं मृत्युरूपधर्म्मेण तत्र लयः पुनरुद्गमनं समष्टिव्यष्टिभावश्च अन्यथा नोपपद्येत। आधिभौतिकतत्तयायं भेद इत्यग्र व्यक्तीकरिष्यते। एवमेव ब्रह्मणोऽपि अनेन जीवेनात्मनानुप्रविश्येत्यत्रापि निःसन्दिग्धं द्रष्टव्यं। यदज्ञानात् सर्व्वविप्लववादव्यामोहः।

प्राणवता शब्दात्॥ १५॥

यदधिष्ठानमग्न्यादि तत् किं स्वत एव अन्यसहितं वेति सन्देहः। किं तावत् प्राप्तं स्वत एवेति पूर्व्वोक्तन्यायेन तावतैव सिद्धेरनवस्थानाच्च देवतात्वव्याघातश्चेत्येवं प्राप्ते उच्यते। प्राणवता अधिष्ठितं वागादि। कुतः। शब्दात्। सोऽयमग्निः परेण मृत्युमतिक्रान्तो दीप्यत इत्यादि। अयमर्थः। इयाह प्राजापत्या इत्यत्राधिष्ठातृत्वमग्न्यानामुक्तं देवा इत्यविशेषेणेन्द्रियाधिष्ठातृत्वात्।* तेषां प्रतिबन्धकासुरातिक्रमेण स्वर्गलोके गमनेच्छा

---

* ग पुस्तके तेषामित्यारभ्य आध्यपञ्जितानि बहूनि पदानि न दृश्यन्ते। तत्तु लिपिकरप्रमादादित्यवधारणीय।

बभूव। तत्र यत्रैनेव स्वर्ग इति तत्र जनकोह वैदेह इति ब्राह्मणे केनाक्रमेण यजमानः स्वर्गं लोकमाक्रमत इत्युपक्रम्य ऋत्विजा वायुना प्राणेनेति प्राणेनैवाक्रमणमिति सिद्धम्। तत्राध्योऽन्योन्याहाललवरणे तयोद्गाने यो वाचि भोगस्तं देवेभ्य इत्यागात। तदनु यमरूपयात्मना वैधानन्तरमप्रतिरूपं वदतीति निरूपित सोऽपि दोषो देवानां प्राप्नोति तत् श्रुतिविप्रतिपिद्धं मह वै देवान् पाप गच्छतीति। तदनु प्राण एवोद्गाताभिद्वः तेनान्येषामपि पापसम्बन्धोऽपि निवारितः। ततः परेण मृत्युमतिक्रान्तो दीप्यत इति यतो दीप्यमानस्यैवाधिष्ठातृत्वात् प्राणवर्तायाधिष्ठानमिति सिद्धम्।

## तस्य च नित्यत्वात्॥ १६ ॥

चान्यादेः प्राणसम्बन्धो नित्य इति सर्वदाधिष्ठातृत्वम्। प्राणस्य तत्सम्बन्धस्य चेति चकारार्थः। प्राणसहायेनैव यथोचितमर्योत्तम इति लोके स्वामिभृत्यन्यायेन जीवे भोगः फलिष्यति।

## तदिन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात्॥ १७ ॥

इदमत्र विचार्यते। इन्द्रियाणां प्राणाधीनसर्वव्यापारत्वात्तद्व्यपदेशाच्च प्राणभक्तिरूपाणीन्द्रियाणि तत्त्वान्तराणि वेति संशयः। तत्त्वान्तराण्येवेति सिद्धान्तः। तानि इन्द्रियाणि तत्त्वान्तराणि। कुतः। तद्व्यपदेशात्। इन्द्रियशब्देन व्यपदेशात्। एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि चेति भिन्नशब्दवाच्यानां लचिदेकशब्दवाच्यत्वेऽपि नैकत्वम्। आसन्येऽपि तर्हि भेदः स्यादित्यत आह। अन्यत्र श्रेष्ठात्। तस्य ते यौगिकाः शब्दा इति।

भेदश्रुतेः ॥ १८ ॥

यत्रापि प्राणशब्दप्रयोगः तत्रापि भेदेन श्रूयते। तमुत्क्रामन्तं प्राणोऽनूत्क्रामतीति। प्राणमनूत्क्रामन्तं सर्वे प्राणा अनुक्रामन्तीति।

वैलक्षण्याच्च ॥ १९ ॥

वैलक्षण्यञ्च प्राणस्य चेन्द्रियाणाञ्च। सुप्तेषु वागादिषु प्राणो जागर्त्ति। स्वामिसेवकवद्बहुविधं वैलक्षण्यं।

संज्ञामूर्त्तिक्लृप्तिस्तु त्रिवृत् कुर्वत उपदेशात् ॥ २० ॥

भूतभौतिकसृष्टिः परमेश्वरादेवेति निर्णीय नामरूपव्याकरणमपि परमेश्वरादेवेति निश्चयार्थमधिकरणारम्भः। लोके नामरूपकरणं कुलालादिजीवेषु प्रसिद्धमिति। अलौकिकेऽपि स्थावरजङ्गमे मयूरादिसंज्ञां मूर्त्तिञ्च जीवादेव हिरण्यगर्भादेर्भविष्यतीति ब्रह्मादिदेवानां जीवरूपाणामेव वागादिरूपेणानुप्रवेशात् तत्साहचर्य्येण नामरूपयोरपि जीवएव कर्त्ता भविष्यतीति आशङ्कां निराकरोति तुशब्दः। संज्ञामूर्त्त्योः क्लृप्तिः नामरूपयोर्निर्म्माणं त्रिवृत् कुर्वतः यस्त्रिवृत् करोति तस्मात्। सेयं देवतैक्षत हन्ताहमिमास्तिस्रोदेवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति। तासां त्रिवृतं त्रिवृतमेकैकं करवाणीति त्रिवृत्कर्त्ता परमेश्वरः। सएव नामरूपयोरपि कर्त्ता। कुतः। उपदेशात्। उप समीपे एकवाक्ये उभयकरणस्य प्रतिज्ञानात्। जीवस्य तु त्रिवृत्करणानन्तरं शरीरसम्बन्धे कर्त्तृत्वात्। तस्मात् नामरूपप्रपञ्चस्य भगवानेव कर्त्तेति सिद्धं।

## मांसादि भौमं यथाशब्दमितरयोश्च ॥ २१ ॥

इदमिदानीं विचार्य्यते। अन्नमशितन्त्रेधा विधीयते। तस्य यः स्थविष्ठो धातुस्तत् पुरीषं भवति। यो मध्यमस्तन्मांसं योऽणिष्ठस्तन्मनः। आपः पीतास्त्रेधा विधीयन्ते। यः स्थविष्ठो धातुस्तन्मूत्रं। यो मध्यमस्तल्लोहितं। योऽणिष्ठः स प्राणः। तेजोऽशितं त्रेधा विधीयते। तस्य यः स्थविष्ठोधातुस्तदस्थि भवति। यो मध्यमः सा मज्जा। योऽणिष्ठः सा वाक्। अन्नमयं हि सौम्य मनः आपोमयः प्राणस्तेजोमयी वागिति। तत्र संशयः। वाक्प्राणमनांसि किं भौतिकानि आहोस्वित् स्वतन्त्राणीति। एतस्माज्जायते प्राणो मनः सर्व्वेन्द्रियाणि चेति श्रुतिविप्रतिषेधात् संशयः। भिन्नत्कारणप्रसङ्गेनोदितामाशङ्कां निराकरोति। तत्र पूर्व्वपक्षमाह। मांसादि भौमं पुरीषमांसादि तेजोऽबन्नप्रकृतिकं। कुतः। यथाशब्दं। अन्नमशितमित्यादिश्रुतितो निःसन्दिग्धं प्रतिपादनात्। किमतो यद्येवं तदाह। इतरयोश्च वाचि तुल्यत्वाच्च सन्देहः। इतरयोर्मनःप्राणयोरपि भौतिकत्वं यथाशब्दं। उत्क्रमश्रुतिस्तु स्तुतिलेशानुवादपरा भविष्यति। उपपादकश्रुतिबाधात्। तस्मात् भौतिकान्येव मनःप्रभृतीनीत्येव प्राप्ते उच्यते।

## वैशेष्यात् तु तद्वादस्तद्वादः ॥ २२ ॥

अन्नादिभिर्विशेष्यते। मनःप्रभृति सम्यक्कार्य्यक्षमं भवति। तथादर्शनादुपादानाच्च। अतो वैशेष्यादेव हेतोरन्नमयत्वादिवादः। ननु कथमेतदवगम्यते। वैशेष्याद्दोषोवाद इत्युच्यते। अथात्मनेऽन्नाद्यमागायदित्यत्र प्राणएव सर्व्वासामस्थाना निर्द्दिष्टः।

स कथं तत्परिणामकार्य्यं स्यात्। वागादयश्च तत्रावार्थमनुप्रविष्टाः। सृष्टौ प्रथमतो भिन्नतया निर्देशात्। अतो न भौतिकानि मनःप्रभृतीनि। किन्तु तत्त्वान्तराणीति सिद्धं। तदाद्वृत्ति वीप्सा अध्यायसमाप्तिसूचिका।

इति वेदव्यासमतवर्त्ति श्रीवल्लभाचार्य्यविरचिते ब्रह्मसूत्राणुभाष्ये
द्वितीयाध्यायस्य चतुर्थः पादः। समाप्तोऽयं
द्वितीयोऽध्यायः।

---

## तृतीयोऽध्यायः।

### तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्यां ॥ १ ॥

सर्व्वोपनिषदां सिद्धोऽविरोधे समन्वयः। कथं बोधकता तासां। स तृतीये विचार्य्यते।

एकं वाक्यं प्रकरणं शाखाः सर्व्वाः सहैव वा।
एकां विद्यामनेकां वा जनयन्तीति चिन्त्यते॥
ससाधने हि पुरुषे जन्मना कर्म्मणा शुभे।
केवले वा यथायोगे प्रथमं तद्विचार्य्यते॥
विचारपूर्व्वकं तस्य ब्रह्मभावाप्तियोग्यता।
अधिकारे ततः सिद्धे विषयावहृतिस्ततः॥
अन्तरङ्गविचारेण गुणानामुपसंहृतिः।
बहिरङ्गविचारेण कर्म्मणामिति सा द्विधा॥

तस्मादधिकारिणो जन्मनिर्धारः तदनु तस्य ब्रह्मभावयोग्यता ततो गुणोपसंहारः ततोऽङ्गविचार इति। तत्र प्रथमे पादे जीवस्य पञ्चाग्न्यौपाधिकं जन्म विचार्यते। तत्र पूर्वजन्मनि निष्कामयज्ञकर्तुर्ज्ञानरहितस्य मरणे ज्ञानाभावेन यथाभिव्यक्त्यभावात् भूतसंस्कारक एव यज्ञो जात इति। निष्कामत्वाच्च तदधिकारिदेवाधीनान्येव भूतानीति। देवास्तत्र तत्र हुत्वा तस्य शरीरं सम्पादयन्तीति पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति श्रुतिः। तत्र जीवेन्द्रियाणां होमाभावेनाशुद्धिमाशङ्क्य तेषामपि होमं वक्तुमिदमधिकरणमारभते। न च पञ्चाहुतयो धूममार्ग एव तत्र गमनागमनयोर्बहुविशेषश्रवणात्। तथा हि 'ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसम्भवन्तीति तज्ज्ञानवतोऽपि पञ्चाग्निः प्राप्तिश्च तथा देवहुतानां चार्थं वा न स्यात् भजनार्थमेव तयोत्पत्तेः। पुनरावृत्तिः परं तुल्या। अथवा निष्काम एव धूममार्गः योगी प्राप्य निवर्तत इति स्मरणात्। भोगार्थमेव धूमादिलोकाः। निष्पत्तिस्तु पञ्चाग्न्यादेव। अन्ने प्रविष्टानामन्येषामपि रेतोद्वारा योनित उत्पत्तिरिति कपूयचरणवर्णनं। एवं त्रयीधर्ममनुप्रपन्ना गतागतं कामकामा लभन्त इति ज्ञानमार्गाद्भिन्न एव प्रकारः पृथगुपदेशात्। तत्राधिकारिशरीरनिष्पत्तये स्वयमेव गच्छति भूतसहितः श्रद्धाहोमानन्तरं सोमभावे * वा संश्लेष इति संशयः भिन्नपक्षे योनौ चेति। तत्र श्रौतोऽर्थे श्रौतन्यायेनैव निर्णयस्योचितत्वादाहुतावपाङ्गीकारापत्तेः संक्षतभूतानामुपस्थापकत्वाभावाच्छरीरवियोगे देवानाञ्च तावत् विलम्बे कारणाभावाच्च श्रद्धारूपा आप एव हूयन्ते ततो

* सोमभावे वा इति पुस्तकान्तर. पाठः।

न तैः परिष्वक्तो गच्छतीत्येवं प्राप्ते उच्यते । तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्यां । तस्य जीवस्य यज्ञादिकर्तुः अन्तरप्रतिपत्तौ अन्तरे मध्ये मुख्यप्रतिपत्तेर्मोक्षलक्षणाया अर्वाक् योग्यशरीरनिष्पत्त्यर्थं । नहि वस्तुतो यज्ञानामिदं फलं भवति अतो मुख्ये विलम्बात् प्रतिपत्तिरेषा तस्य मुख्यफलस्य वा अन्तरे या प्रतिपत्तिस्तदर्थं * वापेक्षते । अतः सम्यगेव च तत्कारणभूतैः संपरिष्वक्तएव रंहति । मरणानन्तमेव कर्मसमाप्तेः सम्यग्भूतानि तदैव संस्कृतानि प्रतिदिनसंस्कारार्थस्य नैकट्यम-परिष्वक्तः पूर्वं शरीरेण व्यवधानात् शरीरदाहे वा तद्गतानि भूतसूक्ष्माणि सम्यक् तमेवासक्तानि । तं विद्याकर्मणी समन्वार-भेते पूर्वपूर्वप्रज्ञा चेति । जीवपक्षे ज्ञानकर्मणी हि स्वरूपभूता आपः । तत्र हेतुः प्रश्ननिरूपणाभ्यां । वेत्थ यथा पञ्चम्यामाहुता आपः पुरुषवचसो भवन्तीति प्रश्नः । असौ वाव लोको गौतमाग्नि-स्तस्यादित्यएव समिदित्यादिनिरूपणं † । प्रश्ने हि पुरुषत्वं वदति न देहमात्रं तज्जीवाधिष्ठितानामेव भवति सिद्धवत्कार-वचनाच्च । निरूपणेऽपि चन्द्रो भवन्तीति तथापि सोमो राजा चेतनः । न ह्यन्याधिष्ठाने ह्यन्यस्य शरीरं भवेत् । तथा रेतो-गर्भाव अन्यथापि विनियोगसम्भवात् । जीवस्याहित्वेऽप्यपामेव मुख्यत्वं शरीरवत् अयं होमस्तत्र तथा तं आनयन्तीति न दुःखहेतुः । तस्मात् प्रश्ननिरूपणान्यथानुपपत्त्या संपरिष्वक्तएव संस्कृतैर्भूतै रंहतीति सिद्धं ।

---

* ख पुस्तके तदर्थं इत्यारभ्य ज्ञानकर्मणी हि स्वरूप इतोऽन्तपर्यन्तं नास्ति । तत्र लिपिकरप्रमादादेवेत्यवगन्तव्य ।

† मासिमिदिति खपुस्तकस्थत पाठ ।

व्यात्मकत्वात् तु भूयस्त्वात् ॥ २ ॥

ननु कथं भूतसंस्कारमात्रत्वमवगम्यते। यावता प्रश्ननिरूपणाभ्यामापएवावगम्यते। न च तावन्मात्रसंस्कारकत्वं। नियामकाभावात्। अस्मिं चैव तेन माप्रस्त्य यजमानः संस्कृतं इति विरोधश्चेति शङ्कां निराकरोति तु शब्दः। अपामेव ग्रहणेन तेजोऽवन्नानि गृहीतानि ज्ञातव्यानि। कुतः। त्र्यात्मकत्वात्। लोकादिनिर्माणानन्तरभावित्वात् ता आपस्त्रिवृत्कृता एव। अतस्त्रयोऽपि गृहीता अपां ग्रहणेन। उपलक्षणत्वेऽपि अपामेव ग्रहणे हेत्वन्तरमाह। भूयस्त्वात्। शुक्लादिविशेषाभावात् मध्यभावाच्च दीक्षितत्वेन भारूपत्वेनाग्रे वक्तव्यत्वात् शुक्लायामेवेदं शरीरं बहुहेतुकत्वमेव भूयस्त्वं बहुधा परिणामाच्च। द्रव्यभूयःकारत्वच्च। तस्मान्नियामकानां भूयस्त्वादपामेव ग्रहणं।

प्राणगतेश्च ॥ ३ ॥

वैदिकीं युक्तिमुक्त्वा लौकिकीमाह। प्राणस्य गतिः प्राणगतिः तमुत्क्रामन्तं प्राणोऽनूत्क्रामतीति प्राणाप्यायनजनकत्वादपां प्राणो गच्छन् स्वाप्यायकं गृहीत्वैव गच्छति। जलकावदन्यच्च देहसम्बन्धः। मुक्तौ न प्राणा गच्छन्ति। कर्मसुक्तावपि देहसम्बन्ध इति पौराणिकाः। देवभावस्त्वौपनिषदः। अतो दूरे प्राणगतिरर्चैव। अतोऽपां संश्लेषो वक्तव्यः। चकारात् विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा चेति सकर्मसद्भावं बोधयति श्रुतिः। तस्मादद्भिः परिष्वक्तो गच्छति।

अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥ ४ ॥

श्रुतिविरोधं परिहरति। परस्परविरोधे व्यवस्था वा

बोध्यते । ननु यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राण इत्यादिना अग्न्यादिगतिः प्राणानां श्रूयते । न च ओषधीर्लोमानि वनस्पतीन् केशा इत्यत्र प्रत्यक्षविरोधाद्बाधितविषयेयं श्रुतिरिति वाच्यं । आध्यात्मिकेन्द्रियमध्यपातात्लोमकेशा अप्याध्यात्मिकाएव ग्राह्याः । यैः कण्डूलावण्यप्रतीतिः दृश्यमानानि तु गोलकस्थानानि । तस्मात् प्राणोत्क्रमणश्रुतिरग्न्यादिभावश्रुत्या बाध्यत इति चेत् । न । भाक्तत्वात् । प्रकरणव्यतिरेकेणामुक्तविषये प्रवृत्ता भाक्ता भवति । अथ हैनं जारत्कारव आर्त्तभागः प्रपच्छेत्यत्र ग्रहातिग्रहनिरूपणानन्तरं मृतं दृष्ट्वा म्रियमाणप्रश्ने नामैव न जहात्यनन्तशातीति प्रतिज्ञाते प्राणोत्क्रमणप्रश्ने नेति प्रतिवचने वागादीनामग्न्यादिभावानुवादसतो मन्त्रणात् जीवस्य ब्रह्मभावोऽवगम्यते । सामर्थ्यागतत्वात् । तौ ह यदूचतुरिति कर्म्मप्रशंसा भिन्नप्रश्नोत्तरा । उभयोर्वचनविधानात् ब्रह्मविद्या च गोप्या । उत्क्रमणश्रुतिस्तु स यत्रायं शारीर आत्मेति ब्राह्मणे जीवस्य परलोकविहारार्थं । निष्क्रामति चक्षुष्टोवेत्यादिना प्राणानां विहारसाधकानां निर्गमनमात्र । अतो मुक्तामुक्तविषयभेदस्य व्यवस्थापकस्य विद्यमानत्वादग्न्यादिभावश्रुतिर्नोत्क्रमणश्रुतिबाधिका । तस्मादन्यत्र सिद्धो धर्म्मोऽन्यत्रारूपासाम्यात् योज्यमानोभाक्तो भवति । अतः प्राणोत्क्रमणमस्ति । तस्मात् सम्परिष्वक्तो गच्छतीति सिद्धम् ।

## प्रथमेऽश्रवणादिति चेन्न ताएव ह्युपपत्तेः ॥ ५ ॥

किञ्चिदाशङ्क्य परिहरति । असौ वाव लोको गौतमाग्निरित्यत्र देवाः श्रद्धां जुह्वतीति श्रुतेरापो न सङ्कीर्त्तिताः । अपां

### त्र्यात्मकत्वात् तु भूयस्त्वात् ॥ २ ॥

ननु कथं भूतसंस्कारमात्रत्वमवगम्यते । यावता प्रश्ननिरूपणाभ्यामापएवावगम्यन्ते । न च तावन्मात्रसंस्कारकत्वं । नियामकाभावात् । अस्मिं चैव तेन माएषस्य यजमानः सएष्कृत इति विरोधश्चेति शङ्कां निराकरोति तु शब्दः । अपामेव ग्रहणेन तेजोऽन्नानि गृहीतानि ज्ञातव्यानि । कुतः । त्र्यात्मकत्वात् । लोकादिनिर्माणानन्तरभावित्वात् ता आपस्त्रिवृत्कृता एव । अतस्त्रयोऽपि गृहीता अपां ग्रहणेन । उपलक्षणत्वेऽपि अपामेव ग्रहणे हेत्वन्तरमाह । भूयस्त्वात् । शुक्लादिधर्माभावात् मध्यभावाच्च दोषितशुक्लत्वेन भारूपत्वेनाप्ये वक्तव्यत्वात् शुक्लायामेवेदं शरीरं बहुहेतुकत्वमेव भूयस्त्वं बहुधा परिणामाच्च । द्रव्यभूयःकरत्वञ्च । तथा नियामकानां भूयस्त्वादपामेव ग्रहणं ।

### प्राणगतेश्च ॥ ३ ॥

वैदिकीं युक्तिमुक्त्वा लौकिकीमाह । प्राणस्य गतिः प्राणगतिः तमुत्क्रामन्तं प्राणोऽनूत्क्रामतीति प्राणाप्यायनजनकत्वादपां प्राणो गच्छन् स्वाप्यायकं गृहीत्वैव गच्छति । जलूकावदन्यत्र देहसम्बन्धः । मुक्तौ न प्राणा गच्छन्ति । क्रममुक्तावपि देहसम्बन्ध इति पौराणिकाः । देहभावस्त्वौपनिषदः । अतो दूरे प्राणगतिरस्त्येव । अतोऽपां संश्लेषो वक्तव्यः । चकारात् विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा चेति सकर्मसद्भावं बोधयति श्रुतिः । तस्मादद्भिः परिष्वक्तो गच्छति ।

### अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥ ४ ॥

श्रुतिविरोधं परिहरति । परस्परविरोधे व्यवस्था वा

बोध्यते। ननु यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राण इत्यादिना अग्न्यादिगतिः प्राणानां श्रूयते। न च ओषधीर्लोमानि वनस्पतीन् केशा इत्यत्र प्रत्यक्षविरोधाद्बाधितविषयेयं श्रुतिरिति वाच्यं। आध्यात्मिकेन्द्रियमध्यपातालोमकेशा आध्यात्मिकाएव ग्राह्याः। यैः कण्डूलावण्यप्रतीतिः दृश्यमानानि तु गोलकस्थानानि। तस्मात् प्राणोत्क्रमणश्रुतिरग्न्यादिभावश्रुत्या बाध्यत इति चेत्। न। भाक्तत्वात्। प्रकरणव्यतिरेकेणामुक्तविषये प्रवृत्ता भाक्ता भवति। अथ हैनं जारत्कारव आर्त्तभागः प्रपच्छेत्यत्र ग्रहातिग्रहप्रश्नानन्तरं मृत्युं दृष्ट्वा म्रियमाणप्रश्ने नामैव न जहात्यन्यत्सर्वं जहातीति प्रतिवाते प्राणोत्क्रमणप्रश्ने नेति प्रतिवचने वागादीनामग्न्यादिभावानुवादस्ततो मन्त्रयात् जीवस्य ब्रह्मभावोऽवगम्यते। सामस्त्यागतत्वात्। तौ ह यदूचतुरिति कर्मप्रशंसा भिन्नप्रश्नोत्तरा। उभयोर्वचनविधानात् ब्रह्मविद्या च गोप्या। उत्क्रमणश्रुतिस्तु स यत्रायं शारीर आत्मेति ब्राह्मणे जीवस्य परलोकविहारार्थं। निष्क्रामति चक्षुष्टोवेत्यादिना प्राणानां विहारसाधकानां निर्गमनमाह। अतो मुक्तामुक्तविषयभेदस्य व्यवस्थापकस्य विद्यमानत्वादग्न्यादिभावश्रुतिर्नोत्क्रमणश्रुतिबाधिका। तस्मादन्यत्र सिद्धो धर्मोऽन्यत्रास्नाम्याम्नात् योज्यमानो भाक्तो भवति। अतः प्राणोत्क्रमणमस्ति। तस्मात् सम्परिष्वक्तो गच्छतीति सिद्धम्।

प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥ ५ ॥

किञ्चिदाशङ्क्य परिहरति। असौ वाव लोको गौतमाग्निरित्यत्र देवाः यदां जुह्वतीति श्रुतेरापो न सङ्कीर्तिताः। अपां

हि पञ्चम्यामाहुतौ पुरुषवचनं। श्रद्धा मनोधर्मः स कथं हूयत इति चेत्। न। मनसा सह भविष्यति तथाप्यरुणान्यायेन धर्ममुख्यत्वं। तर्हि कथं प्रश्नोपसंहारौ। परोक्षवादाद्भविष्यति चमसवत् श्रद्धा वा आप इति श्रुतेः। शुद्धिहेतुत्वसाम्यात्। चन्द्रमा मनसोजात इति श्रुतिरेवापरा भविष्यति। तस्मात् प्रथमाहुतावपामश्रवणात् न ताभिः सम्परिष्वक्तो गच्छतीति चेत्। न। ताएव आपएव श्रद्धाशब्देनोच्यन्ते। हि युक्तोऽयमर्थः। यथा कर्मकाण्डे आपः श्रद्धाशब्देनोच्यन्ते तथा प्रकृतेऽपि परं नोपचारः उपपत्तेः। उपक्रमोपसंहारावन्यथाकर्त्तुं युक्तौ। श्रद्धासद्भावः संस्कारद्वारेण संस्कृतेषु भूतेषु सिद्धः। तेन मनःस्थाने आपएव वाच्याः। चन्द्रमा मनसो जात इति तु भिन्ना सृष्टिः। श्रद्धाप्रयोगस्तु कामनाकृतत्वाद्व्यर्थः। तत्र फलएव श्रद्धा न कर्मणि। यो यच्छ्रद्धः सएव स इति श्रद्धाया आश्रयस्य विषयभावजनकत्वात् कर्त्तुः कर्मभावाय श्रद्धाप्रयोगः। ततः संस्कृता आपः यजमानरूपा हूयमाना भवन्तीति सिद्धं भवति। तस्मात् प्रथमेऽप्यपामस्ति श्रवणं।

## अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥ ६ ॥

स्थितमेतज्जीवः सम्परिष्वक्तो रंहतीति। तत्रेदं विचार्य्यते। सर्व्वे जीवाः सम्परिष्वक्ता गच्छन्त्याहोस्वित् ज्ञानोपयोगिन इति विमर्शः। तत्र पञ्चाहुतिप्रकारे नाधिकारिणः श्रुताः। वेदे हि श्रुतानुसारिकल्पना। अतो विशेषस्याश्रुतत्वात् सर्व्वेषामेव पञ्चाहुतिप्रकार इति चेत्। न। इष्टादिकारिणां प्रतीतेः। साधारणपक्षं दूषयति। कुतः इष्टादिकारिणां

प्रतीतेः। इष्टादिकारिणः प्रतीयन्ते अन्नपदेन देवकर्तृत्वेन च। सोमभावसाम्याच्च * इष्टादिकारिणां धूममार्गस्थत्वाद्धने सोमभाव उक्तः। अत्रापि प्रथमाहुतिफलं सोमभाव उच्यते। अतः श्रुतिसाम्यादपि इष्टादिकारिणो रंहन्तीति सिद्धं।

भाक्तं वाऽनात्मवित्त्वात् तथाहि दर्शयति ॥ ७ ॥

किञ्चित् दूषणं परिहरति। ननु यदि श्रुतिसाम्येन सोमभावादिष्टादिकारिणो रंहन्तीत्युच्यते तदा सोमभावे तेषामनिष्टं श्रूयते। तद्देवानामन्नं तं देवा भक्षयन्तीति समानश्रुतौ आप्यायस्वापक्षीयस्वेत्येवमेतांस्तत्र भक्षयन्तीति चन्द्रदृष्टान्तेन ते च भक्ष्यन्ते। ततश्च देवाः सोमं पर्जन्येऽग्नौ कथं जुहुयुः। अतः पश्चाद्भुत्यभाव इत्याशङ्कां परिहरति वाशब्दः। तेषां सोमभावो गौणः भक्षणञ्च। प्रकृतेऽप्यङ्गारत्वाच्चन्द्रमसः कथमाहुतिफलं भवेत्। सोमभावस्य भाक्तत्वमग्रे निरूपयिष्यामः। इदानीं भक्षणस्य गौणत्वं निरूपयति। यद्भावे हि मुख्यं भक्षणं भवति तदन्यस्यान्यभावो नोपपद्यते। ब्रह्मज्ञाने तु भवति स सर्वं भवति तद्धैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्चेति। प्रकृते तु तन्न। अनात्मवित्त्वात्। तथा सति नाशएव भवेत्। अतो भक्षणमपि गौणं। तथाहि। श्रुतिरेव गौणभावं† शब्दस्य बोधयति। अथ योऽन्यां देवतामुपास्ते इत्यत्र यथा पशुशब्दएवमत्रापि भक्षणं सहक्रीडनं सेवकभावः। चन्द्रतुल्यापदेशाय तथावचनं। तथा सति तेषाममरत्वेन तथा स्तुति। चन्द्रस्य भक्षणं

---

* सोमभावसाम्याच्चेति पुस्तकान्तरसम्मतः पाठः।

† गौणभावमिति पुस्तकान्तरसम्मतः पाठः।

तु घ्राणादनुमीयते श्रुत्वा प्रथमोऽपिवृत्ते वह्निरित्यादिरूपया। देवानामभक्षणं भगवद्वचयवानामेव। अप्रनानशने तस्याविरुद्धे आधिभौतिकानां देवानामशनमेव। तस्माद्भक्षणस्य गौणत्वात् सोमभावे न काचिच्चिन्ता।

## कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवञ्च ॥ ८ ॥

प्रथमाहुतिः सफला विचारिता। द्वितीयां विचारयितुमधिकरणारम्भः। सोमस्य पर्जन्यहेतोर्वृष्टित्वमिति सोमाद्वृष्टिभावे रूपरसादीनां हीनतया प्रतीयमानत्वात् यागस्यावान्तरफलं तत्र भुक्तं इति निश्चितं। तत्र संशयः। किं सर्वमेवावान्तरफलं तत्र भुङ्क्ते आहोस्विदनुशयवान् वृष्टिर्भवतीति। सदाचारविभजनाभि सदाच... न्युक्तएव स्यादिति आचारहीनं न पुनन्ति वेदा इति बाधोऽत... अतो विचार उचितः। तत्रावान्तरफलस्यावमेपि अवान्तरफलत्वबाधात् भोक्तव्यस्यावरभावादेव सदाचारसिद्धेः। प्रयोजनाभावाच्च निरनुशयएव वृष्टिभावं प्राप्नोतीत्येवं प्राप्ते उच्यते। कृतात्यये अनुशयवान्। कृतस्य सोमभावस्य अत्यये नाशे सति अनुशयवान् अवान्तरफलसाधकलेशसहितएव वृष्टिभावं प्राप्नोति। कुतः। दृष्टस्मृतिभ्यां। दृष्टन्तावत् भोगसाधकमूलद्रव्यनाशेऽपि भोगसाधकतादृशदेहवस्त्रादिसहितएव तस्मात् स्थानादपगच्छति। अन्यथा सद्यएव देहपातो भवेत् *। अतो यथा लोके सानुशयः। स्मृतिश्च

* देहपातः स्यादिति वा पाठः।

यद्यच नः स्वर्गसुखावशेषितं
स्विष्टस्य दत्तस्य कृतस्य शोभनं ।
तेनाजनाभे स्मृतिमज्जन्म नः स्यात्
वर्षे हरिर्यद्भजतां शं तनोति ॥

इति देवगाथा । अतो यानीपथिकं जन्म अनुशयवत एव भवति । अन्यथा पूर्वजन्मस्मृत्यभावे विषयासक्तिः प्रसज्येत । ननु अनुशयसहकृतएव जीवो नाडिः परिष्वक्तो भवेत् अत आह । यथेतं यथागतं । अन्यथा प्रश्ननिरूपणयोर्बाधः स्यात् । तर्हि तावदवान्तरफलसाधकसहितः स्यादत आह । अनेवञ्च । एवंप्रकारयुक्तागमनं नास्ति भोगस्य जातत्वात् । चकाराद्वैराग्यसहितोऽपि । तस्मादनुशयवान् भिन्नप्रकाराद्भिः परिष्वक्तो देवकृपासहितो दृष्टिर्भवतीति ।

## चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः ॥ ९ ॥

किञ्चिदाशङ्क्य परिहरति । ननु नात्रोत्तमजन्मार्थमनुशयोऽपेक्ष्यते चरणादेव भविष्यति । तथ इह रमणीयचरणा अभ्यासो ह यत्ते रमणीयां योनिमापद्येरन् इत्यादिना यः पूर्वजन्मनि विहिताचारं करोति स उत्तमं जन्म प्राप्नोति । यस्तु निषिद्धाचरणं करोति स श्वादियोनिं प्राप्नोतीति साधुकारी साधुर्भवतीत्यादिश्रुत्या च प्रतिपाद्यते । प्रकृते तु तस्य रमणीयचरणस्य चरणादेव तस्य सम्यग्जन्म भविष्यति किमनुशयसहभावेनेति चेत् । न । चरणश्रुतौ या योनिरुक्ता सा उपलक्षणार्था अनेन पूर्वजन्मनि समीचीनं कृतमिति ज्ञापिका न तु तस्मिन् जन्मनि समीचीनकरणे नियामिका । अन्यथा

ब्राह्मणानां निषिद्धकरणं न स्यात् । तस्मादनुशयोऽपेक्षते ज्ञानोपयोगार्थमिति कार्ष्णाजिनिराचार्यो मन्यते । कार्ष्णाजिनिपक्षं पञ्चाग्निविद्याया भिन्नप्रकारत्वज्ञापनार्थं । तस्मादस्मन्मते भिन्नत्वात् न शङ्का न चोत्तरं । न हि पञ्चाग्निविद्यायां पुरुषादन्यभावः सम्भवति प्रकरणपरिगृहीता श्रुति र्नान्यन्यायसम्पादिका ।

आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥ १० ॥

नन्वेवं सति चरणश्रुतिरनर्थिका । प्रार्थनायां प्रयोजनाभावात् । अतो विधायकत्वं श्रुतेः इष्टानिष्टफलबोधकश्रुतिवत् । अतः कर्मतारतम्येन फलविधानात् निष्कामकर्मकर्त्तुः ज्ञानोपयोगिदेहविधानं भविष्यतीति अनुशयसद्भावो व्यर्थं इति चेत् । न । तदपेक्षत्वात् । धूमादिमार्गस्य तस्याः श्रुतेरपेक्षत्वात् । काम्येष्टादिकारिणः फलभोगानन्तरमुत्पत्तौ सुखानन्तरं दुःखमिति न्यायेन पापस्यैवोपस्थितत्वादसमीचीनशरीरप्राप्तिर्न भवत्विति रमणीयानुष्ठातॄणां रमणीयशरीरप्राप्तिरेव बोध्यते * नासमीचीनशरीरमिति । तस्मादन्यनिषेधार्थं सार्थकत्वादनुशयप्रतिषेधिका ।

किञ्च । रमणीययोनिः किमाकस्मिकी सकारणा वा । नाद्या वेदवादिनां । द्वितीये तु स्वकर्मणा पितृलोक इति चन्द्रादित्यरूपता च वक्तव्या प्रजामनु प्रजायन्ते श्मशानान्तक्रियाज्ञ इति च । त्रैविद्या मां सोमपा इत्यादिना इन्द्रलोकभोगानन्तरं तथैव पुनर्भवनञ्च वक्तव्यं । न च सर्व्वेषामैक्यं भिन्न-

* न असमीचीनशरीरमिति क पुस्तकस्थत पाठ ।

रूपत्वात्। तस्मात् कर्मकृतवैचित्र्येण श्रुतिस्मृतिभेदाः समर्थयितव्याः। न त्वेकमपरत्र निविशते। उपरोधप्रसङ्गात्। तथा च प्रकृतेऽपि अनुशयाभावे मनुष्यभवनयोर्नियमो न स्यात्। ब्राह्मणादीनामप्यन्ते बलिहरणे श्वचण्डालयोर्भक्षणं। ब्राह्मणभक्षणेऽपि मलभावे शूकरभक्षणं। अनुशयस्य नियामकत्वे तु पापादिष्वन्नभावएव यावत् समीचीनरेतोभावः। तस्मादुपलक्षणत्वेन चरणश्रुतिर्युक्ता। तस्मादनुशयसहितएव वृष्टिभावं प्राप्नोतीति सिद्धं।

सुकृतदुष्कृते एवेति तु बादरिः ॥ ११ ॥

फलाभिमुखानुशय इति तु स्वमतं। कर्म फलञ्च द्वयमेवेश्वरेच्छया नियतं। कर्म पुनर्भगवत्स्वरूपमेव यज्ञवादे सोमोऽभिव्यक्तः। फलपर्यन्तं तदादिसंयोग इति स्वमतं। अन्त्यसंयोगपक्षमाद्यैकदेशित्वज्ञापनाय। सुकृतदुष्कृते एव विहितनिषिद्धकर्मणी अनुशयइति बादरिराचार्यो मन्यते। तेन मोक्षपर्यन्तमनुशयोऽनुवर्तिष्यत इति सूत्रफलं। तुशब्देन निरनुशयपक्षश्चैव नास्तीत्युक्तं। एवं द्वितीयाहुतिर्निर्धारिता।

अनिष्टादिकारिणामपि च श्रुतं ॥ १२ ॥

तुल्यत्वेन विचारे ऐक्ये वा। पञ्चाहुतिधूममार्गयोः सोमभावं गतस्य पुनरावृत्त्युपसंहारे उपलक्षणेनापि पापाचारवतामुपसंहारदर्शनात् तेषामप्याहुतिसम्बन्धो धूममार्गश्च प्राप्नोति। तन्निराकरणार्थमधिकरणारम्भः। नन्वनिष्टादिकारिणामपि सोमभावः श्रूयते। इष्टादिकारिव्यतिरिक्तानां ये वैके चास्मा-

लोकात् प्रयान्ति चन्द्रमसमेव ते सर्व्वे गच्छन्तीति कौषीत-
किनः समामनन्ति। अत्र च कपूयां योनिमापद्यन्त इति
पर्य्यवसानं। तेन सर्व्वे चन्द्रमसं गच्छन्ति। अयमाशयः। कर्म्मा-
कर्म्मविकर्म्मेतित्रिविधो विधायको वेदः। अग्निहोत्रं जुहु-
यात् यस्य वेदश्च वेदी च विच्छिद्येते त्रिपुरुषं। न हिंस्या-
द्भूतजातानि। ब्राह्मणादीनामपि त्रिविधकरणं सम्भवति।
न हि सर्व्वोऽप्येकान्ततो विहितं वा प्रतिषिद्धं वा करोति। ततो
विहितकर्त्तुरपि वयस्त्रयात् ज्ञानाभावेन फलभोगनैयत्यात्
सोमभावानन्तरमेवाकर्म्मविकर्म्मभोगो वक्तव्यः। अतएवाविशेषोप-
संहारौ। तस्मात् सोमभावानन्तरमेव सर्व्वेषां जन्मेति प्राप्तं।

## संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥ १३ ॥

तु शब्दः पक्षं व्यावर्त्तयति। विहितव्यतिरिक्तकर्त्तॄणां
संयमने यमसविधाने सुखं दुःखं वा अनुभूय आरोहावरोहौ
अनुभवार्थमारोहं अनुभूयावरोह इति। कुतः। तद्गतिदर्श-
नात्। तेषां गतिर्विसदृशी दृश्यते। वेदे हि प्रथमं विहिता
द्वेधा गतिः सकामा निष्कामा चेति। सकामा यथाकाममनन्त-
विधा। निष्कामा ज्ञानरहिता। द्विविधा वैदिकगृह्यस्मार्त्त-
भेदेन। तत्र गृह्यस्मार्त्ते यमः श्रौते सोमभावः। तत्र त्रेताग्नि-
विधानेन निष्कामानामदक्षाणां पुण्यं स्यादित्यधिकारिविशेष-
णात् विशेषतः सामान्यतश्च प्रायश्चित्तविधानात्। यदर्वाचीन-
मेनो भ्रूणहत्यायास्तस्मान्मुच्यत इति तरति तरति ब्रह्महत्या-
मिति च सर्व्वप्रायश्चित्तविधानात् ब्रह्मानुभवाभावे सोमगति

रेव। पूर्व्वजन्मधर्म्मस्य चित्तशुद्ध्युपयोगः*। तदानीन्तनस्य गङ्गास्नानादेः श्रौताङ्गत्वं। अतः पापस्याभावात् पुण्यस्योपक्षीणत्वात् तस्य पञ्चाग्निप्रकारएव ज्ञानोपयोगिजन्मनि पापसंश्लेषाभावोपायमग्रे वक्ष्यति। पितृमेधप्रथमाहुतिमन्त्रस्तु मन्त्रत्वाद्यमवत् गतिनियामकः। चेताग्निविद्यारहितानां पुण्यपापोपभोगो यमएव।

वैवस्वते विविच्यन्ते यमे राजनि ते जनाः।
ये चेह† सत्येनेच्छन्ते य उ चानृतवादिनः॥

इति यमगतिः पञ्चाग्निविद्यायामेषा व्यवस्था। चित्तशुद्धिभावाभावाभ्यां वा अथवा काण्डद्वयव्यवस्था एकस्यैतद्वाक्यं सकामनिष्कामभेदो वा वेदान्तिनामपि पापार्थं यमापेक्षणात् सा गतिर्यमस्यैव। तस्मान्न सर्व्वेषां सोमगतिः।

## स्मरन्ति च॥ १४॥

स्मरन्ति च व्यासादयः।

यमेन पृष्टस्तत्राहं देवदेव जगत्पते।
पूर्व्वं त्वमशुभं भुंक्ष्व उताहो नृपते शुभं॥

इत्यादि। चकारान्लोकप्रसिद्धिः।

## अपि सप्त॥ १५॥

चेत्यनुवर्त्तते। पापोपभोगार्थं यमालयगमनमङ्गीकर्त्तव्यं यतस्तत्र नरकाः सप्त सन्ति रौरवादयः। सप्तसंख्या संख्याभेदे-

---

* चित्तशुद्ध्युपयोग इति ख पुस्तकस्थतः पाठः।

† ये चेह इति ख-पुस्तकस्थतः पाठः।

प्यवरूढ़ता। सर्व्वथा निराकरणाभावाय समग्रहणं। तस्मादयम-
गतिरस्ति।

## तत्रापि च तद्व्यापारादविरोधः ॥ १६ ॥

किञ्चिदाशङ्क्य परिहरति। ननु नरकेषु चित्रगुप्तादयो
भिन्ना एवाधिकारिणः सन्ति। तथा सति तृतीयः पन्थाः स्यादत
आह। तत्र नरकादिषु येऽधिकारिणस्ते यमायत्तास्तत्सेवकाः।
अतो यमस्यैव तत्रापि व्यापारात् तृतीयपथप्राप्तिः। चकारात्
सुखदुःखभोगेऽपि। तृतीयपथ एव विरोधः। अथवा यमगति-
मन्त्रलिङ्गसिद्धेः पापस्य च पौराणिकत्वे चन्द्रगतिरेवैव स्यादिति
विरोधः। तेषां यमसेवकत्वे तु मन्त्रलिङ्गयोवकत्वान्मार्गद्वयसिद्धेर-
विरोध। तस्माद्यमगतिरस्तीति सिद्धं।

## विद्याकर्म्मणोरिति तु प्रकृतत्वात् ॥ १७ ॥

साधारणत्वाभावाय पूर्व्वोक्तार्थसाधकमधिकरणमारभते।
ननु ये केचास्माल्लोकात् प्रयन्ति चन्द्रमसमेव ते सर्व्वे गच्छ-
न्तीत्यस्याः श्रुतेः का गतिः। पञ्चाग्निविद्याप्रस्तावे वा यमगतिः
कुतो नोक्ता। तस्मात् वेदविरोधात् न तृतीयपथसिद्धिरित्या-
शङ्कां परिहरति तु शब्दः। अत्र वेदान्ते गौणमुख्यफलदेहार्थं
विद्याकर्म्मणोरेव हेतुत्वेन निरूपणं। विद्यया देवयानं कर्म्मणा
सोमभाव इति तयोरेव प्रकृतत्वात् कारणत्वात्। तेन कौषीतकि
ब्राह्मणेऽपि प्रकृतत्वात्कर्म्मिण एव सर्व्वशब्देनोक्ताः। अत्रापि न
यममार्ग उक्तः। तस्मात् विद्याकर्म्मणोर्मुख्यत्वान्मार्गद्वयमेवोक्तं
नैतावता तृतीयबाधः।

न तृतीये तथोपलब्धेः ॥ १८ ॥

ननु द्वयोः स्तुत्यर्थं यत्तृतीयो मार्ग उक्त अथैतयोः पथोर्न कतरेण च न तानीमानि क्षुद्राण्यसकृदावर्त्तीनि भूतानि भवन्तीत्यादिना जुगुप्सेतेत्यन्तेन तृतीयनिन्दया द्वयोः स्तुतिरिति स एव तृतीयोऽस्तु किं यममार्गेणेत्यत आह। न तृतीये मार्गे तथा पुण्यपापयोरुपभोग उपलभ्यते। यतः समानन्नाप्यणे कीटः पतङ्गो यदि दंदशूकमिति योनौ निरूढेर्विद्यमानत्वान्न महत्पापोपभोगः। नापि कीटादिषु महासुखोपभोगः। एवंवाच्यता चोभयोर्युक्ता। यद्यपि महाराजादिराजदण्डादिषु तथोपभोगः सम्भवति तथापि रम्भादिसम्भोगे * नरके च यथा तथा न सम्भवति। जड़े तु पश्चान्याड़तिर्भरतएव द्योश्वरेच्छया जन्मद्वयमधिकं त्रिभिरिति वचनात् भरतोऽचमिति प्रतीतेव। ततः पूर्वसम्मरणादाक्यादिवदेव जन्मत्रयं। तस्मात् जायस्वेत्यादि वैलक्षण्यादतिरिक्तो यममार्गः। पञ्चाड़तिनियमाभावस्तु ज्ञानोपयोगिदेहैश्वर्य्यावतरणे। पुष्टिमार्गत्वान्न तत्र दोषः।

स्मर्य्यतेऽपि च लोके ॥ १९ ॥

साधकान्तरमाह। अपि च लोकेऽपि मूर्च्छादिषु यमलोकगमनसम्भाषणपुनरागमनानि स्मर्य्यन्ते।

दर्शनाच्च ॥ २० ॥

यमपुरुषा दृश्यन्तेऽपि कैश्चिदजामिलप्रभृतिभिः। चकारात्

---

* सम्भोगेनेति ख-पुस्तकगततः पाठः।

तेषां वाक्यादिश्रवणं। तस्मादेवमतमार्गे न किमपि बाधक मिति सिद्धं।

## तृतीयशब्दावरोधः संशोकजस्य ॥२१॥

तृतीयामाहुतिं विचारयति। तत्र वृष्टेरन्नं भवतीति तृतीयाहुतिः सफला। पूर्वद्वयं शब्दैकसमधिगम्यं। वृष्टेरन्नमिति साधनफलयोः प्रत्यक्षत्वात्र वृष्टिमात्रेणान्नं भवति बीजव्यतिरेकेण। बीजस्य हि फलं न निमित्तमात्रेण तद्भावो वक्तुं शक्यते। तस्मादसङ्गतं वृष्टेरन्नमित्याशङ्क्याह। तृतीयशब्दावरोधः। तृतीयाहुतौ शब्देन शब्दसाम्येन कारणभूतस्य जलस्य अवरोधो ग्रहणं। स एव सोम्येदमग्र आसीदित्यत्र तत्तेज ऐक्षत बहु स्यां प्रजायेयेति तदपोऽसृजत तस्माद्यत्र क्व च शोचति स्वेदते* वा पुरुषस्तेजस एव तदध्यापो जायन्त इत्यत्र कारणरूपाणां निरूपणे शोकजत्वमपामुक्तं। यत्र च तस्माद्यत्र क्व च वर्षति तदेव भूयिष्ठमन्नं भवतीति। अतः पञ्चाग्निविद्यायामपि देवहोमात् कारणभूतैव वृष्टिर्जातेति † नात्र बीजान्तरापेक्षा। शोकपदेन यदश्रु अशीर्यत तद्रजतं हिरण्यमभवदिति समुदायः सूचितः। यद्यपि तत्राप्शब्देन पृथिवी तथाप्यत्र पृथिव्या अग्निमिश्ररूपत्वाददोष एव। तस्मात् कारणशक्तियुक्ताया वृष्टेरन्नं भवतीति न काप्यनुपपत्तिः।

## साभाव्यापत्तिरुपपत्तेः ॥२२॥

किञ्चिदाशङ्क्य परिहरति। ननु कारणजलरूपवृष्टिरत्र

---

* स्वेदते इति ख पुस्तकपाठः।

† जातेत्यारभ्य सूचित इत्यन्तं ख-पुस्तके नास्ति।

वक्तुं न शक्यते यतः * समानधूममार्गश्रुतौ दृष्टेरन्नभावे ऐक्ये या तस्मिन् यावत् सम्पातमुषित्वा अथैतमेवाध्वानं पुनर्निवर्त्तते यथे-तमाकाशमित्यादिना तिलमाषा इति जायन्त इत्यन्तेन तत्र यथेतमित्याकाशमेव आकाशाच्चन्द्रमसमिति पूर्व्वमुक्तत्वादाका-शस्य मार्गतैव वायुर्भूत्वा धूमो भवतीत्यादिषु तत्तद्भावः श्रूयते। ते च विकृताः। तदनन्तरभावित्वात् वृष्टिरपि विकृतैव। तस्मात् कारणत्वमिति आशङ्का परिहरति। साभाव्यापत्तिरुपपत्तेः। आभाव्यापत्तिरेव। वायुवद्भाः आभानं। सर्व्वे वायुमण्डलेनाग-च्छन्तौ आकृतिर्वायुभवनशब्देनोच्यते। आकृतेरेव पदार्थ-त्वात्। आपत्तिशब्देन च तेजोभावापन्नस्य जलभावापत्तौ कान्तिनाशाच्छब्दइवेति द्योतयति। कुतः। उपपत्तेः। तथैवोप-पद्यते चित्रतुरगादिषु विकारस्य विकारान्तरापत्ताविवमेव व्यवस्था उपासनायां न तदपि। न च भूत्वा श्रुतिबाधः। प्रति-नियतपदार्थो हि ते भवनाभरोहाभ्यामेव तथावचनात्। अन्य-स्यान्यभावं वदन्ती श्रुतिरेव गौणत्वं वदति। कारणभाव-व्यतिरिक्तस्थले तथैव प्रतीतेः। तस्मात् तदाकृतिमात्रेण न स्वरूपान्यथाभावः।

## नातिचिरेण विशेषात्॥ २३॥

उपपत्त्यन्तरमाह। तद्रूपता च नातिचिरेण न बहुकालं तद्रूपता। कुतः। विशेषात्। अन्नभावापन्नस्यैव बहुकालव्यय-णात्। अतो वै खलु दुर्निष्प्रपतरमिति प्रपततरं प्रपततरं वा।

* यत इति क पुस्तके नास्ति।

र्णलोपः छान्दसः। यतः तृतीयाहुतौ न चिरेणेत्यायाति बहु-
कालस्थितौ हि तद्रूपता। कारणवशाद्देवानां मनुष्यभाववत्।
भिन्नपक्षे न कोऽपि दोषः। ऐक्यपक्षेऽपि ज्ञानवतो गृहस्थस्य
दुर्लभत्वादेवं वचनं। तस्मात् वृष्टेरन्नं भवतीति सिद्धं।

अन्याधिष्ठिते पूर्व्ववदभिलापात्॥ २४॥

चतुर्थी चाहुतिर्विचार्य्यते। ननु संसर्गजैः कर्म्मदोषैर्याति
स्थावरतां नर इति कथमस्यान्नत्वं। अपूर्व्वान्नत्वेऽपि कण्डन-
पाकादिषु क्लेशेन जीवस्यापगमात् कथं रेतोभावः। चर्व्वणो-
दर्य्यपाकस्त्वावश्यकएव। न च जीवस्य जड़भावः। मर्य्यादा-
भङ्गप्रसङ्गात्। तस्मात् कथमस्य रेतोभाव इत्याशङ्का परि-
हरति। अन्याधिष्ठिते वृष्टेरन्नभावसमयएव अन्यैर्जीवैरधिष्ठितो
व्रीह्यादि तस्मिन् अपूर्व्वंतद्भावापत्तिः* अतिथिवत् पूर्व्ववैलक्षण्येन
वा। कुतः। अभिलापात्। व्रीहियवा ओषधिवनस्पतयस्तिल-
माषा† इति पूर्व्ववत्तत्तद्भावमात्रं न वदति किं तु जगति स्थित
व्रीह्यादिभावएवाभिलप्यते। तथा सति यथान्येषु व्रीह्यादिषु
तदधिष्ठातृदेवतया नियुक्ता जीवास्तानात्मत्वेनाभिमन्यन्ते एव-
मयमपीति न कोऽपि दोषः। अधिष्ठाने हि वेदना। मरणानन्तरं
क्रिमिभावस्य दृष्टत्वात्। तस्मादस्य रेतोभावोयुक्तः।

अशुद्धमिति चेन्न शब्दात्॥ २५॥

किञ्चिदाशङ्का परिहरति। ननु अन्याधिष्ठाने पञ्चाग्निविद्य-

---

* अपूर्व्वंतद्भावापत्तिरिति ख।

† तिला माषा इति ख।

माणे * यातना जीवानामशुद्धत्वादशुद्धमन्नं स्यात् । तथाच कथं योग्यदेह इति चेत् । न । शब्दात् । देवा अन्नं जुह्वति तस्या आहुते रेतः सम्भवतीति देवैराहुतिरूपेण होमवचनात् शुद्धत्वं । अन्नस्य हि संस्कारेणैव शुद्धिरन्यथा यावज्जीवं का गतिः स्यात् । तस्मात् संस्कारशब्दाच्छुद्धमेवान्नं † ।

## रेतःसिग्योगोऽथ ॥ २६ ॥

पञ्चमाहुतिं विचारयति । ननु कथं पुरुषेऽन्नहोमाद्रेतोभावः । बाल्यकौमारवार्द्धकेषु व्यभिचारात् । तारुण्येऽपि न हि सर्व्वमन्नं रेतो भवति । जातमपि न नियमेन योनौ सिच्यते । नापि देवापेक्षा । पुरुषप्रयत्नस्य विद्यमानत्वादित्याशङ्क्य परिहरति । रेतःसिग्योगः । पुरुषशब्देन पौरुषधर्म्मवानुच्यते । पौरुषञ्च ‡ देशकालसंविधानेन अन्नवद्रेतःसेकसामर्थ्यं । न ह्येतत्सार्व्वजनीनं सार्व्वदिकं वा तदर्थं देवापेक्षा । तथा सति न कोऽपि व्यभिचारः ।

कथं पुरुषशब्दमात्रेण च ज्ञायते तत्राह । अथ आनन्तर्य्यात् । शरीरार्थमेव देवैस्तत्र तत्र होमः कृतः । तत्कथं पञ्चमाहुतावेवान्यथा भवेत् । तस्मादानन्तर्य्यात् पुरुषाहुति मेव रेतःसिग्योगः । योगशब्देनात्रापि अन्याधिष्ठानेन रेतःसिग्योगाभावः ।

## योनेः शरीरं ॥ २७ ॥

हूयमानं निरूप्य फलं निरूपयति । तस्या आहुतेर्गर्भः

---

* अन्याधिष्ठाने अनङ्गीक्रियमाणे इति ख° ।

† शुद्धत्वमेवान्नमिति ख° ।

‡ पुरुषश्चेति ग° ।

सम्भवतीत्युच्यते। तत्र सन्देहः। योनावन्तःस्थितमेव फलं बहिर्निर्गतं वेति। तत्र गर्भशब्देनान्तःस्थितएव शरीरपरत्वे श्रुतिबाधः स्यात्। उपसंहारोऽप्यग्रे कर्त्तव्याभावादुपपद्यते। ततश्च षण्मासानन्तरं गर्भे ज्ञानसम्भवात् जननानन्तरं न गुरूपसत्त्यादिकर्त्तव्यमित्याशङ्का परिहरति। योनेर्निर्गतं शरीरं गर्भशब्देनोच्यते। अन्तेऽस्थितस्यैव फलरूपत्वात्। मध्यभावस्या*प्रयोजकत्वात्। मातृपरिपाल्यत्वाय गर्भवचनं। कलिलादिभावे पुरुषवचनत्वाभावादुपसंहारानुपपत्तिश्च। शरीरशब्देन वैराग्यादियुक्तः सूचितः न तु स्वयं तदभिमानेन जात इति। तस्मात् योग्यदेहः साधनसहितो ब्रह्मज्ञानार्थं निरूपितः।

इति श्रीवेदव्यासमतवर्त्तिवल्लभविरचिते ब्रह्मसूत्राणुभाष्ये
तृतीयस्याध्यायस्य प्रथमः पादः।

---

## सन्ध्ये सृष्टिराह हि ॥ १ ॥

पूर्व्वपादे अधिकारियोग्यदेहोनिरूपितः। द्वितीये जीवस्य मुक्तियोग्यता निरूप्यते। तत्र प्रथमं स्वप्नं निरूपयति। स्वप्नस्य सत्यत्वे तत्तद्गुणदोषसम्बन्धो जीवस्य भवेत्। ततश्च निरूपिता शुद्धिर्व्यर्था स्यात्। अतः स्वप्नस्य मिथ्यात्वं प्रदर्शयितुमधिकरणारम्भः। तत्र पूर्व्वपक्षमाह। सन्ध्ये स्वप्ने सृष्टिराह। तस्य वा† एतस्य पुरुषस्य द्वे एव स्थाने भवत इदञ्च परलोकस्थानं च सन्ध्यं तृतीयं स्वप्नस्थानमित्युपक्रम्य न तत्र रथा न रथयोगा‡ न पन्थानो

* मध्यचाभावस्येति ख।

† तस्य द वा इति ख।

‡ न तत्र रथा रथयोग इति ख।

भवन्त्यथ रथान् रथयोगान् पथः सृजति* इत्यादिना सृष्टिराह । सन्ध्ये स्थाने सृष्टिरस्ति यतः श्रुतिः स्वयमेवाह । युक्तश्चायमर्थः । यथा श्रुतिर्वदति तथैव स्वप्ने दृश्यते । देवादिवाक्यानां प्रबोधेऽपि बाधाभावात् । न चेयमेव सृष्टिस्तत्र दृश्यते न तत्र रथा इत्यादिना निषेधात् । श्रुतिवादिनां श्रुतिरेव प्रमाणं किं पुनरनुभवसम्वादिनी । तस्मात् स्वप्ने सृष्टिरस्ति ।

## निर्म्मातारञ्चैके पुत्रादयश्च ॥ २ ॥

काठके चतुर्थवल्ल्यां श्रूयते । य एष † सुप्तेषु जागर्त्ति कामं कामं पुरुषो निर्म्मिमाणः तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यत इति निर्म्मातारमेके वदन्ति । यद्यपि सुषुप्त्युत्क्रान्त्योर्भेदेनेत्यत्र न तत्र रथा इत्यपि ब्रह्मप्रकरणं तथापि नियतधर्म्मपक्षे जीव एव कर्त्तेति प्रतिभाति । तदर्थं निःसन्दिग्धं वचनमुदाहरति । भगवन्निर्म्मितत्वात् स्वप्नस्यापि सत्यत्वं । नहि कर्त्तुः स्वापोऽस्ति येन भ्रमः स्यात् जागर्त्तीति वचनात् । इच्छापूर्व्वकञ्च सर्व्वं सृजति । शतायुषः पुत्रपौत्रानिति कामविषयाः पुत्रादय उक्ताः । ते च निर्म्मिताः परलोकसाधका इति लोकद्वयकल्पना । चकारद्वयेन कारणकार्य्यगताः सर्व्वे धर्म्मा उक्ताः । तस्मात् श्रुत्युपपत्तिभ्यां स्वप्नप्रपञ्चस्य सिद्धत्वात् तत्कृतगुणदोषसम्बन्धे पूर्व्वोक्तदेहनिर्म्माणं व्यर्थमित्येवं प्राप्ते ।

## मायामात्रन्तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॥ ३ ॥

तु शब्दः पक्षं व्यावर्त्तयति । स्वप्नसृष्टिर्मायामात्रं । तत्र हेतुः

* सृजते इति ख ।
† यएष इति ख ।

कात्स्न्येनानभिव्यक्तस्वरूपत्वात्। स्वप्नेन यस्य यादृशं स्वरूपं देशकालवस्तुसापेक्षं तथाभिव्यक्तिः कात्स्न्येनाभिव्यक्तिमदभावात्। अयमाशयः। श्रुतिः सृष्टिमेवाह न तस्य सत्यत्वमपि। यथैतदात्म्यमिदं सर्वं तत्सत्यमिति। आत्मानं स्वयमकुरुत तत् सत्यमित्याचक्षते कथमसतः सज्जायेतेत्यादिश्रुतिसहस्रेभ्यो-ऽस्य सत्यत्वं प्रतीयते नैवं स्वप्नप्रपञ्चस्य श्रुतिराह। सत्यप्रयोजनाभावाच्च। स्वप्नमात्रविहारस्तु महामायाविलासमाययापि सिध्यति। नापि भिन्नः प्रपञ्चः। जीवस्यैकत्वात्। अविद्यया मन्यत इति वचनाच्च तत्सुखदुःखभोगार्थमपि सत्यत्वमङ्गीकर्त्तव्यं। स्थानद्वयप्रतिज्ञा च विरुध्येत। जीवतोमृतांश्च पश्यतीति लोकद्वयदर्शनं। अतो लोकद्वयप्रतिच्छायरूपत्वात् मायया क्रीडायास्तस्यानुरोधाभावेनातिसुखत्वाद्भगवत्कृतमात्रवाचकत्वाच्च श्रुतेरतिरिक्तकल्पनायां प्रमाणाभावात् ज्योतिःशास्त्रनियमाभावाच्च मायामात्रमेव स्वप्न इति न तत्कृतगुणदोषसम्बन्धः। दोषितस्यान्नभोजनादिप्रायश्चित्तं तु भगवत्क्रीडायामपि प्रतिज्ञायत्वात् क्रियते तदानीं कर्तृत्वस्यारोपादन्यदा कर्तृत्वस्याभावत्वाच्च धर्माधर्मजनकत्वं। देवतास्वादिषु जीवब्रह्मणोर्विद्यमानत्वाद्युक्ता। अलौकिकज्ञाने हि प्रतिच्छायत्वात् * संवादः क्वचिद्भगवदावेशे ईषत्संवादोऽपि। तस्मात् स्वतन्त्रसत्यतायां प्रमाणाभावान्मायामात्रं स्वप्नप्रपञ्च इति सिद्धं।

सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥ ४ ॥

ननु तर्हि जीवसाक्षिकमेकदेशेन किमिति सृजति तत्राह।

---

* [illegible]

सूचकः। शुभाशुभफलसूचको भवति स्वप्नः। चकारात् कचिदाज्ञाविशेषदानं। कलिकालादेः प्रत्यक्षे बाधकत्वात्। युक्तश्चायमर्थः। प्रातः सूचकफलस्यैव* दृष्टत्वान्न तु स्वप्नपदार्थस्य। सूचकत्वे प्रमाणमाह।

यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति।
समृद्धिं तत्र जानीयात् तस्मिन् स्वप्ननिदर्शने॥

इत्यादि श्रुतेः। किञ्च। आचक्षते च तद्विदः। स्वप्नाध्यायविदस्तथैवाचक्षते। आरोहणं गोहस्तिकुञ्जराणामित्यादिना। तस्मात् सूचनार्थं जीवप्रदर्शनमिति।

## पराभिध्यानात् तु तिरोहितं ततोह्यस्य बन्धविपर्ययौ ॥ ५ ॥

किञ्चिदाशङ्क्य परिहरति। ननु जीवाय भगवान् सृष्टिं करोति प्रदर्शयति च स्वस्य सर्वलीलां। अंशश्चायं कथमस्य दुःखित्वमित्याशङ्क्य परिहरति तु शब्दः। अस्य जीवस्य ऐश्वर्यादि तिरोहितं। तत्र हेतुः। पराभिध्यानात्। परस्य भगवतोऽभितो ध्यानं सङ्केतस्य च सर्वतो भोगेच्छा तस्मात्। ईश्वरेच्छया जीवस्य भगवद्धर्मतिरोभावः ऐश्वर्यतिरोभावाद्दीनत्वं पराधीनत्वं वीर्यतिरोभावात् सर्वदुःखसहनं यशस्तिरोभावात् सर्वहीनत्वं श्रीतिरोभावाज्जन्मादिसर्वापद्विषयत्वं ज्ञानतिरोभावाद्देहादिष्वहंबुद्धि सर्वविपरीतज्ञानमपस्मारसहितस्यैव †वैराग्य-

---

* प्रातः सूचकफलस्यैवेति ख'।

† अपस्मारसहितस्यैवेति ख'।

तिरोभावादिपर्यासक्तिः। तन्मयतुल्या कार्य्यौ विपर्य्ययौ द्वयोः।
तिरोभावादेवैवं नान्यथा। युक्तोऽयमर्थः। एकस्यैकांशप्राकट्येऽपि
तथाभावात्। आनन्दांशस्तु पूर्वमेव तिरोहितो येन जीवभावः।
अतएव काममयः। अकामरूपत्वादानन्दस्य। निद्रा च सुतरां
तिरोभावकर्त्री भगवच्छक्तिः। अतोऽस्मिन् प्रस्तावे जीवस्य धर्म-
तिरोभाव उक्तः। अन्यथा भगवत ऐश्वर्य्यादिलीला निर्विषया
स्यात्। तस्मात्र जीवस्वरूपपर्य्यालोचनया किञ्चिदाशङ्कनीयं।

देहयोगाद्वा सोऽपि ॥ ६ ॥

ईश्वरेच्छयैश्वर्य्यादिकतिरोभावं सम्मते* निरूप्य मतान्तरे-
णापि नियतधर्मवादेन निरूपयति। देहयोगाद्वा। देहसम्बन्धा-
देवास्य सर्वतिरोभावः विपर्य्ययो वा। अपि शब्दादन्यत्।
अस्मिन्† पक्षे देहवियोगएव पुनरैश्वर्य्यादिप्राप्तिः पूर्वस्मिन् कल्पे
विद्यमानेऽपीति विशेषः। नत्वीश्वरेच्छया विकल्पः। कश्चित्
परमब्रह्मैव देहादिमान्। तदा अभिध्यानयोगयोराकस्मिकता
स्यात्। सर्वस्य वशी सर्वस्येशान इति विरोधश्च। कश्चित् तु
तस्याभिध्यानात् तृतीयं देहभेद इति श्रुत्यनुरोधेन जीवकर्तृ-
काभिध्यानं मत्वा प्रतिरोहितमिति कल्पयति विपर्य्ययशब्देन
च मोक्षं। बह्वध्याहारेण च सूत्रद्वयं योजयति। तत् ब्रह्म-
वादापरिज्ञानादसङ्गतेश्च साधनोपदेशस्य भ्रान्तोक्तमित्युपेक्ष्यं।
निद्राया विवेकज्ञानाभावायसरत्वायथा व्याख्यातएवार्थः।

---

* ईश्वरेच्छयैवैश्वर्य्यादि इति ख॰।

† तस्मिन्निति ख॰।

## तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ ७ ॥

प्रसङ्गाज्जीवस्याज्ञानं निरूप्य सुषुप्तौ केवलमज्ञानं निरूपयितुं स्थानस्वप्नाभावे निरूपयति । एवं श्रूयते नाडीरनुक्रम्य तासु तदा भवति यदा सुप्तः स्वप्नं न कञ्चन* पश्यति अथास्मिन् प्राण एवैकधा भवतीति । तथा प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमिति । तत्र संशयः । स्वप्नवत् प्रपञ्चसृष्टिं मायिकीमपि भगवान् करोति न वेति संशयः । तत्र य एष सुप्तेषु जागर्तीत्यत्र जीवस्वापसमये भगवत्सृष्टेरुक्तत्वात् स्वप्नं न कञ्चन पश्यतीत्यत्रापि† दर्शनमात्रनिषेधात् न बाह्यं किञ्चन वेद नान्तरमिति च जागरणस्वप्नप्रपञ्चयोरविशेषेणादर्शनकथनात् सुषुप्तावपि प्रपञ्चनिर्माणमस्तीत्यवगन्तव्यं । ततश्च कस्यामप्यवस्थायां प्रपञ्चव्यतिरेकाभावात् मुक्तावपि स्यात् । स्वाप्ययसम्पत्त्योरज्ञानमात्रविशेषात् सति सम्पद्य न विदुः सति सम्पद्यामह इति । तस्मात् बाह्यसत्सम्पत्त्योर्विद्यमानयोरपि यथा ज्ञानाभावादग्रहणमेवं प्रपञ्चस्यापीत्येवं प्राप्ते उच्यते । तदभावो नाडीषु । तस्य स्वप्नस्याभावो नाडीषु तथा आत्मनि च । कुतः । तच्छ्रुतेः । प्रपञ्चाभावश्रुतेः । कामनया हि प्रपञ्चः सुषुप्तावस्थाया अकामरूपत्वश्रुतेः । तद्वा अस्यैतदाप्तकाममात्मकाममकामं रूपमिति । नाडीषु आत्मनि चेतिग्रहणात् सुषुप्तिर्द्विविधेति सूचयति । तथाहि । हिता नाम नाड्यः पुरीतद्व्याप्ता हृदयदेशात् बाह्याः ।

---

* स्वप्नं कञ्चनेति ख ।

† अत्रापि चेति ख ।

मध्यन्तरः परमात्मा हृदयदेशस्तु जीवस्य इन्द्रियाणां न सएव देशः । तत्र निद्रया भगवच्छक्त्या बहिर्दृष्ट्याच्छादने भगवल्लीलायां तां पश्यति । तथाप्याच्छादने गाढ़सुप्तो*ज्ञानरहितः क्रियाशक्त्या अन्तर्भगवन्तं वा प्रविशति बहिर्नाड़ीषु वा समायाति । अतएव बृहदारण्यकषष्ठे । यत्र सुप्तो न कञ्चन कामं कामयते इति वारद्वयमाह । ता वा अस्यैता नाम नाड्यः तद्वा अस्यैतदाप्तकाममिति भेदेन । सुषुप्तिद्वयेऽपि ज्ञानशक्तिः सर्व्वथा तिरोधानात् । तस्मात् सुषुप्तौ न प्रपञ्चसृष्टिः ।

अतः प्रबोधोऽस्मात् ॥ ८ ॥

प्रबोधे सन्देहः । प्रतियोन्याद्रवति बुद्धान्तायैवेति जीवसमानधर्म्मसह्यप्रकरणे निरूपितं । ततो नाड़ीभ्यः पुनर्हृदयदेशं गत्वा भगवतो वा समागत्य जागर्त्तीति आहोस्विद्यत्र स्थितस्ततएव जागर्त्तीति । तत्र श्रुत्यनुरोधात् हृदयदेशमागत्य जागर्त्तीत्येव प्राप्ते उच्यते । अतः नाड़ीभ्यएव प्रबोधः । गर्त्तपतितस्य प्रबोधे हि ततो गमनं प्रतियोन्याद्रवणन्तु भगवत इति । किञ्च । प्रबोधोऽस्मात् । अस्मादात्मनः सकाशादेव प्रबोधः । प्रियएव संपरिष्वक्तस्य बोधाभावे कथमागमनं । अतएव संपरिष्वक्तो निविड़निद्रः । तस्माद्यत्रैव तिष्ठति तत एव प्रबोध इति सिद्धं ।

सएव तु कर्म्मानुस्मृतिशब्दविधिभ्यः ॥ ९ ॥

किञ्चिदाशङ्का परिहरति । ननु प्रियएव प्राज्ञेनात्मना

---

* गाढ़सुप्तो इति ख ।

परिष्वक्तस्य ब्रह्मलोकं गतस्य प्रबोधेन ज्ञाने मुक्त एव भवेत् न * पुनरागच्छेत्। अतो भगवदिच्छया देहनिर्वाहाय तत्स्थाने नियुक्तोऽन्य एव जीवः समायातु अन्यतः प्रबोधे तु स एव। व्यवहारस्तु तावता सेत्स्यति। मुक्त्यर्थं प्रयत्नस्तु न कर्त्तव्य इत्याशङ्कां परिहरति तु शब्दः। अन्यथाऽपि प्रबोधे स एव। कुतः। कर्मानुस्मृतिशब्दविधिभ्यः। चत्वारो हेतवः लौकिकवैदिकयोर्ज्ञानकर्मभेदात्। तत्र लौकिके कर्माणि सामिकृतकर्मणः शेषसमापनात्। न हि कश्चिदपि सुप्तप्रतिबुद्धः सामिकृतं न समापयतीति क्वचित्सिद्धं। तथानुस्मृतिः। न हि पूर्वदृष्टं न स्मरतीति क्वचित्सिद्धं। शब्दाश्च। पुण्यः पुण्येन कर्मणा भवति पापः पापेन क्षेप †। तदाभूत् कुत एतदागादिति तथा सति संपद्येत्यादयश्च। विधयश्च। श्वोभूते ब्रह्माणं वृणीते श्वोभूते शेषं समाप्नुयात् एक एव यजेत द्वादशरात्रीर्दीक्षितः स्यादित्यादि यः कामयेत वीरो म आजायेतेत्यादयः ‡। भगवतैव मर्यादारक्षार्थं तथाकरणात् पूर्वपक्षयुक्तयो दुर्बलाः। तस्मात् स एव प्रतिबुध्यते।

## मुग्धेऽर्द्धसम्पत्तिः परिशेषात् ॥ १० ॥

किञ्चिदाशङ्क्य परिहरति। ननु अत्र कर्मानुस्मृतयो न सन्ति तत्रान्यो भविष्यति कश्चिन्मूर्च्छादिविशेषे सर्वस्मृतिनाशेन मुग्धभावदर्शनात्। तत्र यथा लौकिकवैदिकव्यवहारा-

---

* नास्ति ख।

† क्षेपेति ख।

‡ आजायेतेति ख।

न्यथाऽबोधकता स्यात्। तत्र स्वगतधर्म्माणामविरुद्धानामपिम-
पादे विचारः। जड़जीवधर्म्मत्वेन प्रतीतानामत्र विचारः
क्रियते। तत्र क्वचिज्जड़जीवधर्म्मा भगवति बोध्यन्ते क्वचिन्निषि-
ध्यन्ते। यथा सर्व्वकर्म्मा सर्व्वकामः। न चैते जीवधर्म्मा एव न
भवन्तीति वाच्यं। उच्चावचकर्म्मणां कामानाञ्च जीवगतत्व-
प्रतीतेः। नेतरोऽनुपपत्तेरिति सर्व्वत्र वैलक्षण्यस्योक्तत्वात्। कार्य्य-
विशेषधर्म्माणां कारणे वक्तुमशक्यत्वात्। न च कारणधर्म्मा एव
सर्व्वे कार्य्ये अंशे वा प्रतीयन्त इति वाच्यं। अस्थूलमनण्वित्यादि-
वाक्यैः प्रापञ्चिकसर्व्वधर्म्मवैलक्षण्यस्योक्तत्वात्। अत्र केचिद्विरोध-
मेवमाहुः। सर्व्वत्र कारणत्वाद्भगवानस्ति। ततश्च स्थूले स्थूलः
अणौ अणुः उच्चावचकर्त्तरि उच्चावचकर्त्ता उच्चावचकामे उच्चा-
वचकामः पृथिव्यां सर्व्वगन्धः जलादावगन्धः एवं रसादिषु एवं
स्थानतः परस्योभयलिङ्गमुपपद्यते। अथवा कारणएव रूपम-
रूपञ्चावच्छेदभेदेन अचिन्त्यसामर्थ्याद्वा अन्यथा असतः सज्जनन-
प्रसङ्ग इति। अपिनासंप्रश्नेति इति। एतदुभयमपि न। कुतः।
सर्व्वत्र हि। सर्व्वत्रैतादृशं रूपं भगवत उपदिश्यते हि। हि
युक्तोऽयमर्थः। भगवत्स्वरूपप्रतिपादकानि हि एतानि वाक्यानि
न त्वनुवादकानि। वैयर्थ्यापत्तेः। अचिन्त्यत्वे ज्ञानानुदयः। तमेव
विदित्वाऽतिमृत्युमेति भक्त्या मामभिजानाति यावान् यश्चास्मि
यादृशः ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरमिति ज्ञाना-
नन्तरमेव सायुज्यप्राप्तेः। न च यस्यामतं तस्य मतं मतं यस्य न
वेद सः। अविज्ञातं विजानतां विज्ञातमविजानतामिति
वाच्यं। शास्त्रानारम्भप्रसङ्गात्। अथ ये विरोधः परिहरणीयः।
सर्व्वे हि विरोधा अत्र चिन्त्यन्ते। नापि तत्तदुपादानभूतप्रदेश

विशेषेणाविरोधः। अनुवादकत्वेन वैयर्थ्यापत्तेः। न च भगवति भेदोऽस्ति सत्यारथमेकमेवाद्वितीयमिति वचनात्। एतत्कल्पनायामपि श्रुतिविरोधः सिद्धः। श्रुत्यविरोधार्थमेव हि प्रवृत्तेः। तस्मान्न मतान्तरानुसारेण जड़जीवधर्म्माणां सत्यासत्वे परिहर्त्तुं शक्यं।

## न भेदादिति चेन्न प्रत्येकमतद्वचनात्॥ १२॥

प्रकारान्तरेण समाधानमाशङ्क्य परिहरति। न भवदुक्तो विरोधः सम्भवति। भेदात्। कारणकार्य्येषु सर्व्वत्र भेदाङ्गीकारात्। प्रपञ्चविलक्षणं ब्रह्म भिन्नं प्रपञ्चधर्म्मवद्ब्रह्म भिन्नं तथाज्ञानं आनन्द एकस्य भेदस्याङ्गीकारे सर्व्वमुपपद्यत इति चेत्। न। प्रत्येकमतद्वचनात् अभेदवचनात्। इयं पृथिवी सर्व्वेषां भूतानामध्विति ब्राह्मणे अयमेव स योऽयमिति सर्व्वत्राभेदवचनात् कार्य्यकारणरूपप्रकाराणां भेदनिषेधात्। तस्मान्न भेदाङ्गीकारेण श्रुतयो योजयितुं शक्याः।

## अपि चैवमेके॥ १३॥

भेदाङ्गीकारे बाधकमाह। अपि च एवमेवाभेदमेव भेदनिषेधेनैके शाखिनो वदन्ति मनसैवेदमाप्तव्यं नेह नानास्ति किञ्चन मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यतीति भेददर्शननिन्दावचनात्। तस्मान्न भेदाङ्गीकारः कर्त्तुं शक्यः। इव शब्दो बहूनामिति ख्यातत्वार्थः। तस्मादुपनिषत्सु सर्व्वप्रकारो विरोधः सिद्धः।

## अरूपवदेव हि तत्प्रधानत्वात्॥ १४॥

.. एकदेशिमतेन समाधानमाह। कथमत्र सन्देहः विरोधो वा

जड़जीवधर्म्माणां विधिनिषेधयोः। जड़जीवयोर्हि जड़जीवधर्म्मा भवन्ति। अन्यत्र तूपदिश्यमाना उपासनार्था भवन्ति। ननूक्तो भेदाभावः सत्यं तथापि कार्य्यकारणांशभावकृतस्य* भगवद्विहारार्थं जातस्य भेदस्य निषेद्धुमशक्यत्वात्। तस्मात् ब्रह्मणि जड़जीवधर्म्माणां निषेधो युक्तः। उपचारात् तु सर्व्वकर्म्मादयः। विपरीतं किं न स्यादत आह। अरूपवदेव। रूप्यते निरूप्यते व्यवह्रियत इति रूपं सर्व्वव्यवहारविषयत्वं तद्युक्तं रूपवत् विश्वं। ब्रह्म तु तद्विलक्षणं। कार्य्यकारणयोर्भिन्नोर्वैलक्षण्यस्य युक्तत्वात्। नन्ववैलक्षण्यमपि युक्तं कारणत्वादत आह। तत्प्रधानत्वात्। तस्य ब्रह्मणः† प्रधानत्वान्मुख्यत्वात्। यत्र हि तत्प्रतिपाद्यते‡ तत्र तस्य मुख्यत्वं। ब्रह्मप्रतिपादने ब्रह्मधर्म्माणामेव मुख्यत्वं नान्यधर्म्माणां। यथा प्रयासनस्य मुख्यत्वं तथा सर्व्वाप्नोति लौकिककर्म्मानुवादेन भगवत्सम्बन्धे स्पष्टमेवामुख्यत्वं। विशिष्टबोधनेऽपि सर्व्वशब्दस्य प्रसिद्धानुवादकत्वादतिरिक्तकल्पनायां गौरवात् प्रमाणाभावाच्च। यथाकथञ्चित्तद्धर्म्मवत्त्वेन ज्ञानस्योपयोगात् लोकधर्म्मानेवानूद्य वैशिष्ट्यबोधनमुचितं। अरूपमिति वक्तव्ये अरूपवदिति वचनं। भिन्नधर्म्माणामेवं निर्णयः। न तु प्रयासनवद्भगवद्धर्म्माणां। तस्मात् कार्य्यगततद्धर्म्माणामपि कार्य्यत्वात् भगवत्त्वं न भगवद्धर्म्मत्वमिति सिद्धं।

---

* कार्य्यकारणांशभावे कृतस्येति खं।

† तस्य ब्रह्मण इति ख पुस्तके नास्ति।

‡ यत्र हि यत्प्रतिपाद्यते इति खं।

## प्रकाशवच्चावैयर्थ्यात् ॥ १५ ॥

ननु सर्वव्यवहारातीते शास्त्रवैफल्यं। मनसैवैतदाप्तव्यमिति विरोधश्च न परिहृतः। तन्त्वौपनिषदं पुरुषं पृच्छामि यतो वाचो निवर्तन्त इति चेत्तत्राह। प्रकाशवत्। यथा सौरः प्रकाशो व्यवहार्यः अव्यवहार्यश्च। न हि स्वतः सम्पादयितुं शक्यते स्थापयितुं वा। आगते तु सूर्ये मेघाद्यभावे च सान्निध्यमात्रेण व्यवहारं कर्तुं शक्यते तथा लौकिकवाङ्मनोभिर्न शक्यते व्यवहर्तुं ईश्वरसन्निधाने तु शक्यत इति वचनाच्छ श्रुतिः। कुत एतदवगम्यते तत्राह। अवैयर्थ्यात्। अन्यथा शास्त्रं व्यर्थं स्यात्। चकाराद्धर्माणां तथात्वविरोधः परिहृतः। आसीनो दूरं व्रजति अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्ण इत्यादौ अलौकिका भगवद्धर्मा उच्यन्ते। अकारणककार्यवचनात् तद्धर्माणामलौकिकत्वं बोधयति। तस्माद्व्यवहार्योऽपि न शास्त्रवैफल्यं।

## आह च तन्मात्रं ॥ १६ ॥

किञ्चिदाशङ्क्य परिहरति। नन्वलौकिकानीन्द्रियाणि विरोधाभावाय कथं न कल्प्यन्ते। अन्यथा अकारणककार्यत्वं तत्र च नित्यमलौकिकत्वं ततश्च पश्यत्यचक्षुरिति विरोध इति आशङ्क्य परिहरति। आह च श्रुतिः स्वयमेव तन्मात्रं प्रज्ञानघनमात्रं स यथा सैन्धवघनोऽनन्तरोऽबाह्यः* कृत्स्नो रसघन एवं वा अरे अयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन

---

* अनन्तरबाह्य इति ख।

एवेति। स्वरूपातिरिक्तानामिन्द्रियाणामभावात्। न च क्रिया-
भावोऽपि वेदविरोधेन तथा कल्पयितुमशक्यत्वात्। वेदनिश्वा-
सायनभूतसमुत्थानादे*रुक्तत्वाच्च। अतो नेन्द्रियाणां परिकल्पना
किन्तु सर्व्वाकारस्वरूपं वस्त्वेव तादृशमिति मन्तव्यं सत्स्ववच-
नात्प्रकारात् सर्व्वेन्द्रियविवर्ज्जितमिति स्मृतिरपि। तथापीन्द्रिय-
कल्पनयाविरोधः†।

दर्शयति चाथो अपि स्मर्य्यते ॥ १७ ॥

पुनः प्रकारान्तरेण विरोधमाशङ्क्य‡ परिहरति। ननु ब्रह्म
जगत्कारणमिति सिद्धं। तच्च समवायि निमित्तं चेति च।
कारणधर्म्मा एव हि कार्य्ये भवन्ति। यथाभावनायामन्यथा-
कल्पनं। कामादयो धर्म्माश्च स्मृतौ विहिताः§। ते ब्रह्मण्येव
भवितुं युक्ताः। निषेधिकापि श्रुतिर्न्नहि वेदवादिनामणुमात्र-
मप्यन्यथाकल्पनमुचितमित्याशङ्क्य परिहरति। दर्शयति श्रुति-
रेव जड़जीवधर्म्माणां भगवत्यभाव इति। द्वे वाव ब्रह्मणो रूप
इत्युपक्रम्य द्वेधा पञ्चभूतान्युक्त्वा अथात आदेशो नेति नेती-
त्याह। इति शब्दः प्रकारवाची। ब्रह्म पञ्च महाभूतानि भवति
न त्वेवंप्रकारकं तत्साधयति। न भवत्येव ब्रह्म तादृशं। हि
युक्तोऽयमर्थः। एतस्माज्जातमिति। न हि कार्य्यकारणयोरैक्यः
प्रकारो भवति। अतो नेतीतिप्रकारनिषेधोपसंहारः। ननु
समवायित्वमात्रत्वं किन्त्वन्यत्परमस्ति इति रूपं निरूप्य नाम

* भेदविनाशायनभूतेति खं।

† इन्द्रियकल्पनयाविरोध इति खं।

‡ विरोधमाशङ्कयितुम् शक्यत्वादिति खं।

§ श्रुतिविहिता इति खं।

निरूपयति सत्यस्य सत्यमिति। तेन प्रपञ्चातिरिक्तब्रह्मणो विद्यमानत्वात् प्रपञ्चधर्म्मवचनं तस्मिन्नौपचारिकमेव युक्तं। श्रुत्यैव तथा प्रतिपादनात्। चकारः पूर्व्वयुक्त्यनुसन्धानार्थः। अथो इति प्रक्रमभेदोऽपि। अथात आदेश इति भिन्नप्रक्रमेणाह। श्रुतेरन्यार्थता निराकरणायाह। अपि स्मर्यते। अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यत इति। सदसतोः ज्ञेयत्वात् ज्ञेयनिरूपणे निषेधः। प्रपञ्चधर्म्मा भगवति उच्यन्ते वेदादौ न तु तद्धर्म्मा भवन्तीति ज्ञापयति। तस्मात् श्रुतिस्मृतिभ्यामेव तथा निर्णयः।

अतएव चोपमा सूर्य्यकादिवत् ॥ १८ ॥

प्रपञ्चधर्म्मा भगवत्युपचारादुच्यन्त इत्यत्र निदर्शनान्तरमाह। अतएव। इममेव निर्णयमाश्रित्य समः प्लुषिणा समो नागेन समो मशकेन सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्व्वेणेति निरूपमस्य भगवतो यदुपमानन्तत्तद्धर्म्मसम्बन्धात्। न चात्र स्वतन्त्रतादृश्यधर्म्मवत्त्वं ब्रह्मणो वक्तुं युक्तं। नन्विदमपि विरुद्धमित्याशङ्क्य दृष्टान्तमाह। सूर्य्यकादिवत्। सूर्य्येण सहितं जलं सूर्य्यकं। यथा

अयं ज्योतिरात्मा विवस्वानपोभिन्ना बहुधैकोऽनुगच्छन्।
एकधा बहुधा चैव दृश्यते जलचन्द्रवदिति।

यथेतरसंश्लिष्टस्योपमानत्वं एवं समः प्लुषिणेत्यपि। चकारस्तु विरोधाभावो वक्तव्यः। अधिकरणञ्च सम्पूर्णमेकदेशिन इति सूचयति। तस्माज्जाड्यचौर्यधर्म्माणां भगवत्युपचारो निषेधस्तु मुख्य इति।

अम्बुवदग्रहणात्तु न तथात्वं ॥ १९ ॥

मुख्यसिद्धान्तं वक्तुमेकदेशिनं दूषयति । तु शब्दस्तथा सिद्धान्तं व्यावर्त्तयति । तथात्वं । समवायातिरिक्तस्य तद्धर्मयोगात् जडजीवधर्मयोगात् सर्व्वकामत्वादयो न भवन्ति । कुतः । अम्बुवदग्रहणात् । सर्व्वपरस्य हि प्रतिबिम्बेऽधिकरणधर्मवत्त्वं तत्र रूपरहितं तत्र विद्यमानस्य न प्रतिबिम्बत इति वक्तव्यं । तथापि समतविरोधादम्बुवदग्रहणमिति । स्वच्छमम्बु प्रतिबिम्बं गृह्णाति न हि तथाधर्म्मा गृहीतुं शक्नुवन्ति धर्म्मत्वाच्च । सर्व्वाधारत्वेन तथोच्यमाने वैयर्थ्यमिति पूर्व्वमवोचाम । न च स्वमात् क्षयनं वेदेनोच्यते अप्रतारकत्वात् सर्व्वज्ञत्वाच्च । विप्लववादिनएवैवं वचनं न वैदिकस्य । पृथिव्यां तिष्ठन् इत्यादि विरोधश्च । तस्मात् ब्रह्मधर्म्माएव सर्व्वकामादयो न तूपाधिसम्बन्धादौपचारिका इति ।

वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवं ॥ २० ॥

सिद्धान्तेन विरोधपरिहारमाह । विरोधो हि परिहरणीयो लोकवेदाभ्यां । तदनुसारेण महानवकाशोऽल्पोऽवकाशो यथावकाशं दृश्य समसानिति लौकिकवैदिकव्यवहारो वस्तुधर्म्मविरुद्धो दृश्यते । व्यापकत्वं वृद्धिह्रासौ च आकाशस्यैव । तत्र यथा करके प्रविष्ट आकाशस्तथा व्यवह्रियते तथा सत्युभयसामञ्जस्यं भवति । अन्यथा एकतरबाधो भवति । एवं । तत्तदनुप्रवेशात् ब्रह्मापीत्थं । न चौपाधिकाश्च जपाकुसुमलौहित्यवदन्यधर्म्मत्वाभावात् । अन्यानुविधायित्वेऽपि स्वधर्म्माएव तौ । कारणत्वादिवत् । न

आगन्तुकत्वात् तद्धर्मा एव न भवन्तीति वाच्यं। अन्यधर्मत्वे प्रमाणाभावात् तद्गतत्वप्रतीतेश्च दृष्टत्वाच्चाविरोधः। अविरोधप्रकारोऽयं यथोभयसामञ्जस्यं भवति। प्रकारोऽपि तस्यैव तथा ज्ञातव्यः। तस्माद्यथाकाशस्य वृद्धिह्रासभाक्त्वं करकादिष्वन्तर्भावात् तथैवोभयसामञ्जस्यादेवं ब्रह्मापि। वृद्धिह्रासपदेन शरीरे आकाशजीवयोरेकमुदाहरणं बोधयति।

## दर्शनाच्च ॥ २१ ॥

हेत्वन्तरमाह भगवति सर्वे विरुद्धधर्मा दृश्यन्ते। न हि दृष्टे अनुपपन्नं नाम व्याघातात्। तादृशमेव तद्व्यवस्थितिव्यवसायः प्रामाणिकः। चकारादुलूखलबन्धनादिषु प्रत्यक्षमेवोभयसाधकं दृष्टमिति। अथो अमुष्यैव ममार्भकस्येति च। तस्मात् श्रुतिस्मृतिप्रत्यक्षैः सर्वविरुद्धधर्माश्रयत्वेन ब्रह्मप्रतीतेर्न विरोधः।

## प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥ २२ ॥

परमार्थतो विरोधं परिहृत्य युक्त्यापि प्रतिषेधति। ननु सर्वविशेषधर्माणामस्थूलादिवाक्यैर्निषेधात् कथमविरोधः प्रत्येतव्य इति चेत् तत्राह। प्रकृतैतावत्त्वं हि प्रतिषेधति। प्रकृते यदेतावत् परिदृश्यमाना यावन्तः पदार्था लौकिकास्तेषामेव धर्मान् निषेधति। प्रतीतस्यैव हि निषेधात्। अतो जगद्वैलक्षण्यमेवास्थूलादिवाक्यैः प्रतिपाद्यते न तु वेदोक्ता ब्रह्मधर्मा* निषेद्धुं शक्यन्ते। कुत एतदवगम्यते तत्राह। ततो ब्रवीति च

* वेदोक्ता धर्मा इति ख।

भूयः । यथैव वाक्यं पूर्वं निषेधति तस्मिन्नेव वाक्ये पुनस्तमेव विधत्ते । यतो वाचो निवर्तन्ते अप्राप्य मनसा सह आनन्दं ब्रह्मणो विद्वानिति । तथा अस्थूलवाक्येऽपि एतस्यैव प्रशासने एतद्विद्वा आकाश ओतश्च प्रोतश्चेति । चकारादेकवाक्योपाख्यानभेदौ संग्रहीतौ । सर्वत्र लौकिकं प्रतिषेधत्यलौकिकं विधत्त इति युक्त्या निर्णयः । तस्मात् युक्तयाप्यविरोधः ।

## तदव्यक्तमाह हि ॥ २३ ॥

शब्दबलविचारेण विरोधं परिहृत्यार्थबलविचारेणाविरोधप्रतिपादनायाधिकरणमारभते । सर्वाणि विरुद्धवाक्यान्युदाहृत्य चिन्त्यते । न चक्षुषा गृह्यते कश्चिद्धीरः प्रत्यगात्मानमैक्षत् नापि वाचा सर्वे वेदा यत्पदमामनन्ति अप्राप्य मनसा सह मनसैवैतदाप्तव्यं अशब्दमगन्धमरसं सर्वरूपः सर्वगन्धः सर्वरस अपाणिपाद इत्यादि विश्वतश्चक्षुरित्यादि निर्गुणश्च यः सर्वज्ञः सर्वशक्तिरित्यादि विरुद्धवाक्यानि । न हि वस्तु विकल्पं सम्भवति । वाक्यद्वयमपि प्रमाणं । तथा सति प्रमाणान्तरानुरोधेनैकस्य स्वार्थे प्रामाण्यमन्यस्योपचरितार्थत्वमिति युक्तं । तत्र प्रत्यक्षानुरोधेन निर्णयो विचार्यते । तत्र पूर्वपक्षमाह । तदव्यक्तं । तत् ब्रह्म अव्यक्तमेव भवितुमर्हति । कुतः । आह हि । श्रुतिप्रत्यक्षाभ्यां नेति नेत्यात्माऽग्राह्यो न हि गृह्यत इति । न हि गृह्यत इत्यनुभवसाधकं प्रमाणं श्रुतिराह । न हि केन चिदपि चक्षुषा मनसा ब्रह्म दृष्टमस्ति । सर्वरूपत्वे तु सर्वैरेव द्रष्टुं शक्येत । तस्मात् सर्वधर्मवत्त्वेन प्रतिपादकान्युपचरितार्थान्येवानुभयविरोधादित्येवं प्राप्तं ।

धर्म्मोयामपि ब्रह्मत्वे एकविज्ञानेन सर्व्वविज्ञानमुपपद्यते * नान्यथा। ततश्च प्रथमं ब्रह्म स्वधर्म्मरूपेण भवति तदनु क्रियादिरूपेण प्रपञ्चरूपेण च। तावतैव सर्व्ववेदार्थसिद्धिः। न च लौकिकी युक्तिस्तत्रापेक्ष्यते येन तादृशस्य कथं सर्व्वभाव इति पर्य्यनुयोगो भवेत्। धर्म्मकल्पनायामपि नैषा तर्केण मतिरपनेयेति † समाधानं। उत्पत्त्या चोपपत्त्या च विचारद्वयं उपपत्त्या पूर्व्वनयनं स्वसिद्धान्तः एकदेशिनस्तद्विपरीतं। उभयमपि सूत्रकारस्य सम्मतमिति।

## प्रतिषेधाच्च॥३०॥

एकदेशिमते उपपत्त्यन्तरमाह। एकमेवेत्युक्त्वा पुनरद्वितीयमिति द्वितीयं प्रतिषेधति। स एवकारेणैव सिद्धो ह्यर्थः सन् धर्म्मनिषेधमपि सूचयति ऐक्षतेति वचनात् तदुत्पत्तिः। चकारादेकविज्ञानेन सर्व्वविज्ञानोपक्रमः परिगृहीतः। तस्मात् ब्रह्मणि कश्चिद्विरोध इति सिद्धं।

## परमतः सेतून्मानसंबन्धभेदव्यपदेशेभ्यः॥३१॥

धर्म्मिधर्म्मविरोधः परिहृतः। धर्म्मान्तरविरोधपरिहारार्थमधिकरणमारभते। तत्र पूर्व्वपक्षमाह। परमतः। अतोऽपि ब्रह्मणः परमन्यदुत्कृष्टं फलमस्ति ‡। तत्र वैदिकहेतवः। सेतून्मानसंबन्धभेदव्यपदेशेभ्यः। यद्यपि समन्वयएवैते दोषाः

* उपपद्यते इति ख।
† आपनेयेति ख।
‡ उत्कृष्टमस्तीति ख।

परिहृताः तथापि स्वरूपविरोधपरिहारप्रस्तावात् पुन-
रुच्यन्ते। सर्व्ववाक्यप्रतिपाद्यमेकमेवेत्यपि न सिद्धं। एतै-
र्हेतुभिः परिच्छेदेन धर्म्मिभेदे सिद्धे न पूर्व्वाधिकरणसिद्धान्त-
विरोधः। ननु समन्वयेन ब्रह्मत्व[*]मुत्तरपादेनैक्यं पूर्व्वाधि-
करणेनाविरोध इति व्यर्थमिदमधिकरणमिति चेन्न। धर्म्म-
बलविचारोऽयं समन्वये चोत्तरपादे च शब्दबलविचारः। धर्म्मि-
विचारात् पूर्व्वेण गतार्थत्वं।

फलतः साधनतश्च प्रमेयाच्च प्रमाणतः।
विचारेणाहृतश्चेत् कोऽन्यं साधयितुं क्षमः॥

अतो हेतून् बाधकानाह। एकदेशबाधकत्वात् तत्र फलतो
बाधमाह[†]। सेतुव्यपदेशात्। अथ य आत्मा स सेतुर्विधृति-
रिति दहर उत्तरेभ्य इत्यत्र ब्रह्मत्वमस्य सिद्धं। अथ य इहा-
त्मानमनुविद्य व्रजन्तीत्युपक्रम्य सर्व्वेषु लोकेषु कामचारो भवती-
त्युक्ता कामाननुपपाद्याज्ञानव्यवधानं ज्ञानपर्य्यवसायमुक्ता आत्मा-
नन्तरं संसारसम्बन्धाभावाय सेतुत्वं वदति। पापाधिकरणार्थं
यश्च तरति तद्धताय दोषा गच्छन्तीति च। अतः संसार-
फलयोर्मध्ये विद्यमानत्वात् तीर्णस्यैव फलश्रवणात् फलरूपं वस्तु
किञ्चिदन्यदस्तीति ज्ञायते। निधित्वेन फलवचनमवान्तरफल-
परं भविष्यति। एतमानन्दमयमात्मानमुपसंक्रम्येत्यप्ययोदा-
हरणं। तथा उन्मानव्यपदेशात्। तत्रैव यावान्वा अयमा-
काशस्तावानेषोऽन्तर्हृदय आकाश इति साधनयुक्तिप्रश्ने उन्मानेन

---

* ब्रह्म इति ख।
† बाधकेनुमाह इति ख।

परिच्छेदं निरूपयति। दृष्टान्तदार्ष्टान्तिकत्वेन प्रानं साधनं *। तत्र बहिरङ्गकामप्रधानमपि साधनं भवति। चतुष्पाद्ब्रह्म भूतादिपादाय ज्ञातव्याः। तथा सम्बन्धव्यपदेशात्। तत्रैव प्रमेयनिरूपणप्रस्तावे उभयस्मिन्नित्यादिना आधाराधेयसम्बन्धो निरूपितः। अत्र च वस्तुपरिच्छेदो निरूपितः। प्राज्ञेनात्मना संपरिष्वक्त † इति च। तथा भेदव्यपदेशात्। य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते य एषोऽक्षिणि पुरुषो दृश्यत इत्यत्र स्थानद्वयस्थितयोः पुरुषयोः परस्परं धर्मातिदेशमाह। अविस्थितनिरूपकमतिदेशः प्रमाणमिति। धर्मभेदे तु स एवायमिति वदेत। अतो देशकालवस्तुस्वरूपपरिच्छेदाच्चतुर्विधपरिच्छेदरहितमन्यत्किञ्चिदस्तीति प्रतिपन्नव्यमित्येवं प्राप्ते।

## सामान्यात्तु ॥ ३२ ॥

तु शब्दः पक्षं व्यावर्त्तयति। समानस्य भावः सामान्यं सेतुकाशादिशब्दास्तद्धर्मातिदेशार्थमुच्यन्ते न तु तत्कृतं दोषमपि कल्पयन्ति। संसारसागरोत्तरणोपायत्वात् सेतुत्वं। निर्लेपायाकाशत्वं। कामाभिदोहाय चतुष्पात्त्वं। अस्पृतत्वाय षोडशकलत्वं। अतिदुर्लभत्वाय सम्बन्धः। दिव्यत्वाय धर्मातिदेशः। कुण्डपायिनामयने मासाग्निहोत्रवद्गुणार्थमेव वचनं न दोषार्थमिति। न ततोऽन्यशङ्का उत्पादनीया। तस्माच्च पूर्वोक्ता दोषाः।

* प्राणसाधनमिति ख।

† परिष्वक्त इति ख।

बुद्ध्यर्थः पादवत्॥ ३३॥

अन्यसमानधर्मवत्त्वं कुतोपयुज्यत इत्यत आह। बुद्ध्यर्थः। तथाव्यपदेशो बुद्ध्यर्थः बुद्धिरेव प्रयोजनं यस्य। तथोपासनार्थं प्रयुक्तमित्याशङ्क्य दृष्टान्तमाह। यथा भूतादीनां पादत्वस्थानमुपासनार्थं तथा तत्तद्रूपवत्त्वेन ज्ञानार्थं स्वधर्मप्रदर्शनार्थोऽयमुच्यते।

स्थानविशेषात् प्रकाशादिवत्॥ ३४॥

ननु स एवायमित्यतिदेशेऽपि तथा बुद्धिः सम्भवत्येवेति धर्मी धर्मातिदेश इत्याशङ्क्य तथोक्तेऽपि समानधर्मत्वज्ञानाभावे हेतुमाह। स्थानविशेषादिति। धर्म्यैक्येऽपि स्थानविशेषप्राप्त्या न समानधर्मत्वं दृश्यते अन्यत्रापि न तथात्वमायास्यतीत्यतिदेशो धर्माणामपि कृत इत्यर्थः। अस्मिन्नर्थे दृष्टान्तमाह प्रकाशादिवदिति। यदादित्यगतं तेज इति वाक्यादादित्यचन्द्राग्निगते तेजसामैक्येऽपि न समानप्रकाशत्वं यथा तथात्रापीति * ज्ञानसुखादित्यर्थः। आदिपदादेकस्यैव कालस्य यथोपाधिविशेषसम्बन्धादुत्तरायणत्वादुत्तमधर्मवत्त्वं तद्विपरीतधर्मवत्त्वं तथेत्यपि + संगृह्यते।

उपपत्तेश्च॥ ३५॥

किञ्च। सत्यज्ञानाद्युक्तधर्मविशिष्टब्रह्मणोऽन्य उत्तमोऽस्तीति वदता तत्रैतदुत्कृष्टधर्मवत्त्वं वाच्यं। तच्चायुक्तं। प्रमाणा-

* तथापीति पा॰ ।

† तथेत्यत्रापीति पा॰ ।

परिच्छेदं निरूपयति । दृष्टान्तदार्ष्टान्तिकत्वेन ज्ञानं साधनं * । तत्र बहिराकाशज्ञानमपि साधनं भवति । चतुष्पाच्च ब्रह्म भूतादिपादाश्च ज्ञातव्याः । तथा सम्बन्धव्यपदेशात् । तत्रैव प्रमेयनिरूपणप्रस्तावे उभावस्मिन्नित्यादिना आधाराधेयसम्बन्धो निरूपितः । अत्र च वस्तुपरिच्छेदो निरूपितः । प्राज्ञेनात्मना संपरिष्वक्त † इति च । तथा भेदव्यपदेशात् । य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते य एषोऽन्तरक्षिणि पुरुषो दृश्यत इत्यत्र स्थानद्वयस्थितयोः पुरुषयोः परस्परं धर्मातिदेशमाह । अक्षिस्थितनिरूपकमतिदेशः प्रमाणमिति । धर्मभेदे तु स एवायमिति वदेत । अतो देशकालवस्तुस्वरूपपरिच्छेदाच्चतुर्विधपरिच्छेददर्शितमन्यत्किञ्चिदस्तीति प्रतिपत्तव्यमित्येवं प्राप्ते ।

सामान्यात्तु ॥ ३२ ॥

तु शब्दः पक्षं व्यावर्त्तयति । समानस्य भावः सामान्यं सेत्वाकाशादिशब्दास्तद्धर्मातिदेशार्थमुच्यन्ते न तु तद्गतं दोषमपि कल्पयन्ति । संसारसागरोत्तरणोपायत्वात् सेतुत्वं । निर्लेपायामायत्वं । कामाभिदोहाय चतुष्पात्त्वं । अनन्तत्वाय षोडशकलत्वं । अतिदुर्लभत्वाय सम्बन्धः । दिव्यत्वाय धर्मातिदेशः । कुण्डपायिनामयने मासाग्निहोत्रवद्गुणार्थमेव वचनं न दोषार्थमिति । न ततोऽन्यथाशङ्का उत्पादनीया । तस्माच्च पूर्वोक्ता दोषाः ।

---

* ज्ञानसाधनमिति ख ।

† परिष्वक्त इति ख ।

### बुद्ध्यर्थः पादवत् ॥ ३३ ॥

असमानधर्मवत्त्वं कुतोपयुज्यत इत्यत आह। बुद्ध्यर्थः। तथा व्यपदेशो बुद्ध्यर्थः बुद्धिरेव प्रयोजनं यस्य। तथोपासनार्थं प्रयुक्तमित्याशङ्क्य दृष्टान्तमाह। यथा भूतादीनां पादत्वख्यानमुपासनार्थं तथा तत्तद्रूपवत्त्वेन ज्ञानार्थं स्वधर्मप्रशंसार्थो ऽयमुच्यते।

### स्थानविशेषात् प्रकाशादिवत् ॥ ३४ ॥

ननु स एवायमित्यतिदेशोऽपि तथा बुद्धिः सम्पद्येतैवेति व्यर्थो धर्मातिदेश इत्याशङ्क्य तयोरैक्येऽपि समानधर्मत्वज्ञानाभावे हेतुमाह। स्थानविशेषादिति। धर्मैक्येऽपि स्थानविशेषप्राप्त्या न समानधर्मत्वं दृश्यते अन्यथापि न तथात्वमायातीत्यतिदेशो धर्माणामपि कृत इत्यर्थः। अस्मिन्नर्थे दृष्टान्तमाह प्रकाशादिवदिति। यदादित्यगतं तेज इति वाक्यादादित्यचन्द्राग्निगते तेजस्यैक्येऽपि न समानप्रकाशत्वं यथा तथात्रापीति * स्थानसम्बन्धादित्यर्थः। आदिपदादेकस्यैव कालस्य यथोपाधिविशेषसम्बन्धादुत्तरायणत्वादुत्तमधर्मवत्त्वं तद्विपरीतधर्मवत्त्वं तथैव्यपि † संदृश्यते।

### उपपत्तेश्च ॥ ३५ ॥

किञ्च। सत्यज्ञानाद्युत्कृष्टधर्मविशिष्टब्रह्मणोऽन्य उत्तमोऽस्तीति वदता तस्यैतदुत्कृष्टधर्मवत्त्वं वाच्यं। तच्चाशक्यं। प्रमाणा-

---

* स्थानेति ख ।

† तथैवायातीति ख ।

भावात्। साम्येऽपि तथा। विशेषाभावोऽद्वैतश्रुतिविरोधश्च। तस्मादितः परस्यानुपपन्नत्वादुक्तरूपमेव परमकाष्ठापन्नं वस्तित्युपपद्यत इत्यर्थः।

## तथान्यप्रतिषेधात्॥ ३६॥

यथा सेत्वादयः श्रुत्योक्ताश्च्यैव न तत्समश्चाभ्यधिकश्च दृश्यत इति श्रुत्यैव ततोऽधिकस्य प्रतिषेधात् तथाप्युक्तरूपएव मार्गोऽनुसर्त्तव्य इत्यर्थः। अवतारकाले पूर्वं स्वसत्त्याविर्भावमकृत्वा पश्चात् तदाविर्भावे कृते लोकानां पूर्वावस्थातो भगवत्येवाधिक्यमिव प्रतीतं भवतीत्यभिप्रायेणान्यपदोपादानं।

## अनेन सर्व्वगतत्वमायामशब्दादिभ्यः॥ ३७॥

प्रकरणमुपसंहरन् फलितमर्थमाह। अनेन सेत्वादिव्यपदेशानां मुख्यार्थकत्वनिराकरणेन व्यापकत्वं ब्रह्मणः सिद्धमित्यर्थ इति केचित्। तन्न। जन्माद्यस्य यत इत्यादिना सर्व्वदेशगतकार्य्यकर्त्तृत्वमुक्तमिति तेनैव व्यापकत्वस्य सिद्धत्वात्। न चाविरोधसाधनप्रकरणत्वात् पूर्वसिद्धं सर्व्वगतत्वमनेनोक्तन्यायेन कृत्वा सेत्वादिवाक्यैः सममविरुद्धमित्यर्थ इति वाच्यं। अग्रिमपदवैयर्थ्यापत्तेरिति चेत्। अत्रैवं ज्ञेयं। नोक्तकर्त्तृत्वेन व्यापकत्वमेकान्ततो ब्रह्मणि बोद्धुं शक्नोति। योगसिद्धदूरश्रवणादिवत्परिच्छिन्नेनाप्यनेकदेशगतकार्य्यकरणसामर्थ्यविशेषस्य वक्तुं शक्यत्वात्। अन्यथा पूर्वसिद्धव्यापकत्वविरोधेन सेत्वादिव्यपदेशैः परिच्छिन्नत्वेन ब्रह्मणोऽन्यस्य परत्वं न शङ्केत। विरोधपरिहाराय तु सामान्यात्त्वविरोध इति वदेत्। तस्मादिदं सूत्रार्थो ज्ञेयः। अनेन ब्रह्मणोऽन्यस्य परत्वनिरासे आयामशब्दादिभ्यो

व्यापकत्ववाचकश्रुतिवाक्यादिभ्यः साचात्सर्व्वगतत्वप्रतिपादकेभ्य एवं सर्व्वगतत्वं सिध्यति न तु गौतमीयानामिव कर्तृत्वाद्यनुपपत्त्येत्यर्थः । ते च शब्दा आकाशवत्सर्व्वगतश्च नित्यः ज्यायान्दिवो ज्यायानाकाशात् वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्व्वमित्यादयः । आदिपदात् सर्व्वतः पाणिपादं तत् सर्व्वतोऽक्षिशिरोमुखं सर्व्वतः श्रुतिमल्लोके सर्व्वमावृत्य तिष्ठतीत्यादि स्मृतयः संग्टह्यन्ते । एतेन ब्रह्मणि श्रुतिरेव मुख्यं प्रमाणं अनुमानन्तु विलम्बोपस्थितिकत्वेन साध्यसिद्धिपराहतमपीच्छाविशेषेण जननीयचैदभ्युच्चयमात्रं पर्य्यवसास्यतीति भावः ।

फलमत उपपत्तेः ॥ ३८ ॥

एवं सर्व्वोत्तमत्वनिरूपणेनोत्तमाधिकारिणां भजनीयत्वप्रयोजकं रूपमुक्त्वा तदितराधिकारिणामन्तदाह । ते हि फलप्रेप्सवएव भजिष्यन्ति । तच्च फलदातृत्वएव सम्भवतीति तदाह । अतः ईश्वरादेव फलं भवति यत्किञ्चिदैहिकं पारलौकिकं वा । कुतः उपपत्तेः । सर्व्वस्य वशी सर्व्वस्येशान इति श्रुतिर्वसुमानैश्वर्य्यमसङ्कुचितमाह । न ह्यन्यस्य वस्तुन्यौदार्य्य समर्थोऽतो भगवानेव तथेत्यर्थः । केचित्त्वत्रैव कर्म्मणस्तत्कार्य्यापूर्व्वस्य च फलदातृत्वमाशङ्क्य तत्रानुपपत्तिमचोपपन्नत्वेन व्याकुर्व्वन्ति । तत्त्वर्थे जैमिनिमतोपन्यासस्वमतोपन्यासाभ्यां व्यासएव व्यक्तीकरिष्यतीत्यधुनैवाप्राप्तनिराकरणमग्रिमसूत्रद्वयवैयर्थ्यं स्यादिति चिन्त्यं ।

## श्रुतत्वाच्च ॥ ३९ ॥

पूर्व्वसूत्रेण श्रुतमीशित्वं फलदानउपपत्तित्वेन निरूपितं । इह तु साक्षाच्छ्रुतिमेव फलदातृत्ववाचिकां प्रमाणयति । सा च स वा एष महानज आत्मान्नादो वसुदान इत्यादिरूपा । चकारात् सुखं दुःखं भवोऽभाव इत्युपक्रम्य भवन्ति भावा भूतानां मत्त एव पृथग्विधा इत्यादिरूपा स्मृतिः संगृह्यते ।

## धर्म्मं जैमिनिरत एव ॥ ४० ॥

अथ * कर्म्मवादी प्रत्यवतिष्ठते । ननु कर्म्मण एव फलमिति पक्षेऽप्युपपत्त्यवधी तुल्या । तथाहि ईश्वरवादिनां † कर्म्मनिरपेक्षेण तेन फलमिति न वक्तुं शक्यं विधिवैयर्थ्यप्रसक्त्यनुपपत्तिप्रसङ्गाभ्यां । तत्सापेक्षत्वे तदेवास्तु कृतं तत्सापेक्षेण तेन । न चाचेतनं चेतनाधिष्ठितमेव कार्य्यक्षममिति केवलेन तेन फलासम्भवः ‡ इति वाच्यं । कर्म्मस्वरूपं स्वर्गादिकञ्च न लोकसिद्धं किन्तु श्रुतिसिद्धं । तत्र च स्वर्गादिफलसाधकत्वेनैवोत्पत्तिवाक्येष्वर्थवादेषु § चाग्निष्टोमेन स्वर्गकामो यजेत अग्निहोत्रं जुहोति प्रजाकाम इत्यादि दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत परमेष्ठिनो वा एष यज्ञोऽग्र आसीत्तेन स परमां काष्ठामगच्छदित्यादिषु कर्म्म श्रूयते । स च तत्साध्यत्वेनैव । एवं सति लोके-

---

* खपुस्तके अथ इति नास्ति ।

† ईश्वरवादिनामपीति ख ।

‡ तेन न फलं सम्भवतीति ख ।

§ उत्पत्तिवाक्ये अर्थवादेषु इति ख ।

ऽन्यथादर्शनेऽपि धर्म्मिग्राहकप्रमाणेन तथैव सिद्धत्वान्नात्र काचन शङ्का। ईश्वरवादिनो नित्यज्ञानादिमत्त्व इव। आमुष्मिकफलत्वेन तन्निबन्धकापगमे भवतीत्यावयोस्तुल्यं। तस्याशुतरविनाशित्वेऽपि श्रुतिसिद्धकारणतानिर्वाहाय तद्व्यापारोऽपूर्व्वं कल्प्यते। अविषमादीश्वराद्विषमफलोत्पत्त्यनुपपत्तिर्वैषम्यनैर्घृण्ये च स्यातां अतः कर्म्मण एव फलमिति जैमिनिर्मनुते।

## पूर्व्वन्तु वादरायणो, हेतुव्यपदेशात्॥ ४१॥

तु शब्दः पूर्व्वपक्षव्युदासार्थः। वादरायणस्त्वाचार्य्य इतः पूर्व्वोक्तमीश्वरमेव फलदत्वेन मनुते। कुतः हेतुव्यपदेशात्। हेतुत्वेन श्रुतौ व्यपदेशादित्यर्थः। एष ह्येव साधु कर्म्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषत एष उ एवासाधु कर्म्म कारयति यमधोनिनीषत इति श्रुतौ न केवलं कर्म्मकारयितृत्वमुच्यतेऽपि तु फलदित्सया तथात्वं। अतः फलदत्वमीश्वरस्यैव व्यपदिष्टं भवतीति नानुपपत्तिः काचित्। नन्वीश्वरस्य स्वतः फलदानसमर्थस्य * फलदित्सायां सत्यां कर्म्मकारणे को हेतुः कार्य्यवैचित्र्यञ्च कथमित्यादि चोद्यं कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्य इत्यत्र निरस्तं। विद्वन्मण्डने प्रौढ़िवादित्वेन च †। अतः सकामैरपि स एव भजनीयोनान्य इति सिद्धं।

इति श्रीवेदव्यासमतवर्त्तिश्रीवल्लभदीक्षितविरचिते ब्रह्मसूत्राणुभाष्ये तृतीयस्याध्यायस्य द्वितीयः पाद॰।

---

* फलदाने समर्थस्येति ख॰।

† विद्वत्त्वेन चेति ख॰।

## तृतीयः पादः ।



### सर्व्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥ १ ॥

पूर्व्वपादे जडजीवधर्म्मनिराकरणेन शुद्धसच्चिदानन्दविग्रहरूपत्वं ब्रह्मणो निरूपितं। इह तु ब्रह्मणएव * धर्म्मा विचार्य्यन्ते। ते चेदेकस्मिन् वाक्यएव सर्व्वे पठिता भवेयुस्तदा न विचारणीया भवेयुर्व्विरोधाभावात्। पठिताश्च तत्तदुपासनप्रकरणेषु क्वचित् तएव क्वचिद्भिन्ना यथा वाजसनेयिनः पञ्चाग्निविद्यां प्रस्तुत्य षष्ठमन्यमग्निं पठन्ति तस्याग्निरेवाग्निरिति। छन्दोगास्तु पञ्चसंख्ययैवोपसंहरन्ति। अथ य एतानेवं पञ्चाग्नीन्वेदेति। तथा प्राणसंवादे मुख्यप्राणादन्यांश्चतुरः प्राणान् वाक्चक्षुःश्रोत्रमनांसि पठन्ति। वाजसनेयिनस्तु तमपि पञ्चमं पठन्ति।

अपरञ्च। अथर्व्वोपनिषत्सु क्वचिद्गोकुलवृन्दाकाननसंचरद्गोपरूपमनघकल्पद्रुमप्रसूनविरचितविचित्रवनीरुकालिन्दीसलिलकल्लोलसङ्गिमृदुतरपवनचलद्दलकविराजमानगण्डमण्डलद्युतिमण्डितकुण्डलप्रभानुभावितवामांसमिलन्मूर्द्धन्यमहामणिकमुरलिकामुखामलोमिलद्विततरलकरकमलयुगलाङ्गुलीवयंवद्विविधस्वरमूर्च्छनामोहितव्रजवरनितम्बिनीकदम्बकटाक्षकुवलयार्च्चित

* ब्रह्मणा एव इति ख।

† व्रजवरनितम्बिनीति ख।

क्वचित् कोदण्डमण्डितभुजदण्डखण्डितप्रचण्डदशमुण्डमतिविचित्रचरित्राभिरामं रामस्वरूपं क्वचिदतिकरालवदनविनाशितकमलाकमलासनप्रभासनादिकानृकेसरिरूपं क्वचिद्दुरुक्रमादिरूपञ्च निरूप्यते। तथा च द्रव्यदेवताभेदाद्यागभेदवद्धर्म्याश्रमावापोद्वापाभ्यां दृष्टादृष्टफलभेदाच्च वेद्यभेदे प्राप्ते ब्रह्मानेकत्वापत्तौ श्रुतिविरोधाद्विनिगमकाभावात् सर्वेषामुपासनाविषयाणामब्रह्मत्वमापतितं। ननूपासनाविषयाणामौपाधिकत्वात्तेषाञ्चाविद्याकल्पितत्वात् तद्विशिष्टानां तथात्वं युक्तमेव। न चैवं तन्निरूपकाणां वेदान्तानामब्रह्मपरत्वप्रसङ्गः। शुद्धस्य ब्रह्मणो दुर्ज्ञेयत्वेनोपाधिविशिष्टोपासनया चित्तशुद्धौ सत्यां स्वत एव तज्ज्ञानं भविष्यतीत्येतत्तात्पर्यकत्वादिति चेत् नैवं। समन्वयविरोधापत्तेः। तासां ब्रह्मविद्यात्वहानेश्च श्रुतेः प्रतारकत्वापत्तेश्च। अपरञ्च।

> योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते।
> किं तेन न कृतं पापं चौरेणात्मापहारिणा॥

इत्यन्यथाज्ञानं निन्दन्ती श्रुतिः कथं फलसाधकत्वेन तत्तदुपासनां वदेत्। स्पष्टार्थानां श्रुतिवाक्यानां निर्णयमकृत्वा सन्दिग्धार्थानां ज्योतिराकाशादिशब्दानां तद्वाचकत्वं न निर्णीयाद्भगवान् व्यासः। एवञ्च सत्युक्तरीत्या यागवत्तेषां परस्परं भेदश्चावश्यक इत्यलपत् पायारज्जुरिति प्राप्तेऽभिधीयते। सर्ववेदान्तप्रत्ययं। अनेकरूपनिरूपकैः सर्वैर्वेदान्तैः प्रत्ययो ज्ञानं यस्य तत्तथा। ब्रह्मणोऽनन्तरूपत्वेऽपि यानि यानि रूपाणि विविधैर्जीवैरुपासितुं शक्यानि तानि तानि रूपाणि तैस्तैर्वेदान्तैर्निरूप्यन्त इति तावद्रूपात्मकमेव ब्रह्मेत्यर्थः। तत्र हेतुः

चोदनाद्यविशेषादिति । चोद्यते कर्त्तव्यत्वेन बोध्यतेऽनेनेति चोदना विधिवाक्यमिति यावत् तस्या अविशेषादित्यर्थः । यथैकस्मिन्नग्निष्टोमे शाखाभेदेऽपि चोदना तथैव भवत्यग्निष्टोमेन यजेतेति तथेहापि सर्व्वेषु वेदान्तेषु ब्रह्मत्वेनैवोपासना विधीयत इति तथा । आदिपदात्त्वाचार्य्यपरम्पराभेदेन मोक्षफलकत्वकथनमप्युपासनानामविशिष्टमिति प्रयोजनसंयोगः संगृह्यते ।

## भेदान्नेति चेन्नैकस्यामपि ॥ २ ॥

ननु दृष्टदेवताभेदाद्यागभेदवदुपास्यानां धर्म्मभेदेन मिथोभेदादुक्तहेत्वसिद्धिं भेदान्नेति चेदित्यनेनाशङ्क्य तत्परिहारमाह सूत्रकारः एकस्यामपीति सूत्रावयवेन । यथैकस्यामपि गृहीतषोडशिकायामतिरात्रव्यक्तावगृहीतषोडशिकायाः सकाशाद्गुणाधिक्येऽपि नातिरात्रभिन्नयागत्वमतिरात्रलक्षणकर्म्मैवाधिकृत्य । तद्ग्रहणाग्रहणयोर्विधानादेवमिहापि ब्रह्मैवाधिकृत्य तत्तद्धर्म्मवैशिष्ट्यावैशिष्ट्ययोरुक्तत्वाच्च ब्रह्मोपासनाभिन्नत्वमुपासनासु । तथा च ब्रह्मधर्म्मत्वेनाभेदस्य विवक्षितत्वात्त्वदुक्तहेत्वसिद्धिः । एवं सति यत्र कस्मिन्नुपास्ये रूपेऽन्यस्माद्रूपादधिका गुणा उच्यन्ते तत्र तेषामुपसंहार उचित इति भावः । अत्रायं विशेषो ज्ञेयः । उपासनाविषयेष्वखिलेष्वविशिष्टं ब्रह्मत्वं ज्ञात्वा येष्वेवान्तरं रूपं ■ उपास्ते तस्य तत्र सर्वे गुणा उपसंहर्त्तुमुचिताः । यत्त्वनन्तेषु विभूतिरूपेष्वोमित्यक्षरादिष्वोमित्येतदक्षरं ब्रह्मेति ज्ञात्वोपास्ते

तस्य शाखान्तरीया अप्येतदक्षरोपासनप्रकरणोक्ता एवोपसंह-र्त्तव्या नान्ये । तद्रूपमधिकृत्यैव तेषां गुणानां कथनादन्यथातिप्रसङ्गात् । इयन्तूपासनामार्गीया * व्यवस्थोक्ता । भक्तिमार्गीया त्वेतद्विलक्षणा साग्रे वाच्येति । नन्वग्निष्टोमसेयो हि यावन्तो धर्मास्तैत्तिरीयके पठ्यन्ते ते तावन्तो वाजसनेयके । तथा च तदुक्तरीत्या वाजसनेयिनामतद्धर्मोपसंहारोऽपि न्याय्यो भवेन्न-त्वेवं सः शिष्टाचारादिविरोधात् । तथा पञ्चाग्निविद्यामेवाधि-कृत्योक्तोऽपि षष्ठोऽग्निर्न छन्दोगैः प्रकृत उपसंहर्त्तुं । तथैवाथ-र्वणिकैर्नैकस्मिन् रूपे रूपान्तरधर्म्मा इति प्राप्त उत्तरं पठति ॥

स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च सववच्च तन्नियमः ॥ ३ ॥

स्वाध्यायो वेदः । स एकमेव कर्म्म शाखाभेदेन भिन्नभिन्न-प्रकारकं बोधयतीति तत्प्रयुक्तः सम्यग्भूतेऽग्निष्टोमादिलक्षण आचारे तत्तच्छाखाधारनियमोऽन्यूनानधिककरणलक्षण इत्यर्थः । तावद्भिरेवाङ्गैर्योगसम्पत्तेरधिककरणस्याप्रयोजनकत्वात् तावता-मेवाङ्गानां करणं । ननूक्तं तद्धर्म्माणामप्युपसंहारस्त्वदुक्तरीत्या सम्भवतीत्यत आह । अधिकारादिति । सर्व्वेषां शाखिनां स्वस्वशाखोक्तकर्म्मण्येवाधिकारो न परशाखोक्तेऽप्यतोऽपि तथा नियमः । चकारात् स्वशाखोक्तात् कर्म्मणोऽतिरिक्तत्करणे न्यूनकरणे च यदस्य कर्म्मण इत्यादि प्रायश्चित्तश्रवणमपि तन्नि-यमे हेतुः समुच्चीयते । अतएव क्वचित् परशाखोक्तमपि व्यव-

* उपासनमार्गीया इति ख ।

स्थितविकल्पविषयत्वेन कल्पसूत्र उच्यते। विकल्पे तूभयस्या-
शास्त्रार्थत्वमुपसंहारे तूभयस्यापि शास्त्रार्थत्वमतोऽपि नात्रोप-
संहारशङ्का। अत्र दृष्टान्तमाह सववदिति। यथा सवाः
होमाः सप्तसूर्यादयः शतौदनपर्यन्ता वेदान्तरोदितत्वेनान्य-
नभिसम्बन्धादथर्वणोदितैकाग्निसम्बन्धाच्चाथर्वणिकानामेव कार्य-
त्वेन नियम्यन्ते तथा तत्तच्छाखायास्तथात्वात् तदुक्तएव
कर्मणि तत्तच्छाखिनामधिकाराच्च स्वस्वशाखोक्तादन्यूनानति-
रिक्तकर्मकरणनियम इत्यर्थः। प्रकृतेऽपि यद्रूपोपासनाप्रकरणे
यावन्तो धर्मा उक्तास्तस्मिन् रूपे तावद्धर्मवत्त्वेनैवोपासना कार्या
तद्बोधकप्रमाणानुरोधात्तु रूपान्तरोपासनप्रकरणोक्ता साधा-
रणधर्मवत्त्वेनापि। तथा सति मत्स्योपासकस्य चापशरादिक-
मपि भावनीयं स्यात् पुरुषरूपोपासकस्य च तच्चयोजनायाम-
शृङ्गादिकं। नन्वथर्वणोपनिषत्सु श्रीरामोपासनायां यो वै ये
मत्स्यकूर्माद्यवतारा भूर्भुवः सुवस्तस्मै वै नमो नम इति वाक्ये
न तदितरावताररूपत्वमुच्यते तेन तद्धर्मवत्त्वमप्याक्षिप्यते।
सत्यमाक्षिप्यते तद्धर्मवत्त्वं तत्रायमभिसन्धिः। परमकाष्ठापन्नं
ब्रह्मस्वरूपमिदमिति ज्ञात्वा ह्युपासना कार्या। तेनैतस्यैवान्यैः-
वतारास्तत्तद्रूपेण तानि तानि कर्माण्ययमेव कृतवानिति ध्येयं
परं न तु तस्मिन्नेव रूपे अन्यावतारधर्मवत्त्वमपीति। तथाच
तस्मिंस्तस्मिन्नवतारे तत्तद्धर्मवानिति बुद्ध्या बोध्यते न तु सर्व-
त्वेति। तत्र बाधकमुक्तमेव। प्राणाद्युपासनस्त्वेतावान्विशेषो यथा
कर्मण्यतिरेके प्रायश्चित्तश्रवणं बाधकं श्रीरामस्वरूपाद्युपासनासु
च तेनावतारेणाकृतकर्मणश्च भावनेऽपराधो बाधको योऽन्यथा
सन्तमात्मानमित्यादिवाक्यम्। न तथा प्राणाद्युपासनास्वधिक

गुणस्येतरत्रोपसंहारे किञ्चिद्बाधकं दृश्यत इति स कर्त्तुं शक्यत इति । ननु पुरुषादिरूपस्य विग्रहस्यैव शुद्धब्रह्मत्वादयमेवावतारान्तरेष्वपि लीलाकर्त्तेति ध्यानमनुपपन्नमिति चेत् मैवं । धर्म्मिग्राहकमानेनैकस्यैव शुद्धस्यैवानन्दरूपत्वेन सिद्धत्वात् । वस्तुतएव तथात्वाच्च काचिद्बाधा । यथैकस्यैवान्योन्याभावस्यात्यन्ताभावप्रतियोगिकतद्रूपत्वं तावत्प्रतियोगिकात्यन्ताभावरूपत्वस्याभाव प्रतियोगिकान्योन्याभावात्यन्ताभावरूपत्वस्याभावाभावरूपत्वेप्यभावरूपत्वमेव चाङ्गीक्रियते तथेहाप्यस्तु अभावत्वस्याप्रयोजकत्वात् धर्म्मिग्राहकमानस्यैव तथात्वात् । तच्च तैत्तिरीयोपनिषत्सु ।

> यत एवं नाम्यदणीयसश्चि
> परात्परं यन्महतो महान्तं ।
> यदेकमव्यक्तमनन्तरूपं
> विश्वं पुराणन्तमसः परस्तात् ॥

इत्यादि श्रुतिरूपं प्रसिद्धमेव ।

अपरञ्च । सर्व्वासामुपासनानां हि ब्रह्मविज्ञानसाधनत्वेन श्रुतौ निरूपणं क्रियते । यत्प्रकारिकोपासनाविज्ञानहेतुः स प्रकारश्च निरूप्यते । एवं सत्येकस्यां शाखायां कतिपयगुणनिरूपणं तदितरस्यां शाखायां तदतिरिक्तानामपि गुणानामित्यत्र को हेतुरिति * पृच्छामः । उपसंहारेण प्राप्तिं अनिरूपणे हेतुं चेद्वदसि तत्र ब्रूमः एवं सति न्यूनगुणनिरूपिका श्रुतिः स्वोक्तानपि गुणान् न वदेत् । तथाहि । उपासनानां ब्रह्म-

---

* इत्यत्र हेतुरिति खं ।

विज्ञानफलकत्वस्य * निर्णीतत्वात् तस्य चैकजातीयत्वाद्दृष्ट-
वत्क्लृप्ताशेषसाधनसाध्यत्वादशेषतद्विरूपिकैव श्रुतिर्निरूपयेत्
अन्यात्रूपासनाया नामोक्तोपासीतेत्येतावदेव वदेत् गुणानामा-
क्षेपलभ्यत्वाच्च वदेत्। उपसंहार्य्यानपि वा वदेत्। निरूपयति
च गुणान्नोपसंहार्य्यान्। न च स्वस्वशाखामात्राध्येतृणामुपासना-
सिध्यर्थं सर्वशाखास्वप्युपासनप्रकारोक्तिरिति वाच्यं। परशाखाऽ-
ध्यानेन तदुक्तगुणोपसंहारस्याप्यसम्भवेनोपासनाया एवासम्भवा-
पातात्। तस्मात् स्वस्वशाखोक्तप्रकारिकोपासनायामेव सर्वेषा-
मधिकारात् तथैव ब्रह्मविज्ञानं भवति तैत्तिरीयाणां वाज-
सनेयिप्रभृतीनाञ्चाग्निष्टोमसम्पत्त्या स्वर्गइव। प्रकृते सर्वो-
पास्यत्वद्विज्ञानं ब्रह्मविज्ञानमेव। न हि रूपरसगन्धादिमत्यां
भुवि पुरुषभेदेनैकस्यैव नैकप्रकारकं यद्ज्ञानं न तद्ज्ञानं।
एतेनानन्तधर्मवत्त्वं ब्रह्मणि ज्ञापितं। तदुक्तं। परास्य शक्ति-
र्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चेति। अत्र
स्वाभाविकीति विशेषणादविद्याकल्पितत्वं धर्माणां निरस्तं।
केचित्त्वाथर्वणिकानां विद्यां प्रति शिरोव्रतापेक्षणादन्येषां तदन-
पेक्षणाद्विद्याभेद इति प्राप्त उच्यते। स्वाध्यायस्यैष धर्मो न
विद्यायाः। कथमिदमवगम्यते। यतस्तथात्वेन स्वाध्यायधर्म-
त्वेन समाचारे वेदव्रतोपदेशनपरे ग्रन्थे आथर्वणिका इदमपि
वेदव्रतत्वेन समामनन्ति नैतदचीर्णव्रतोऽधीत इति चाधिकृत-
विषयादेतच्छब्दादध्ययनशब्दाच्च स्वोपनिषदध्ययनधर्म एवैष
इति निर्धार्य्यते। तस्मादनवद्यं विद्यैकत्वमिति सूत्रार्थं वदन्ति।

---

* ब्रह्मविज्ञानफलकत्वेति ख।

स चिन्त्यते । न ह्यस्य विद्याधर्मत्वं विद्याभेदकं । उक्तन्यायेनान्यत्रापि तदुपसंहारस्य वक्तुं शक्यत्वात् । न चानुपसंहारार्थमेवातद्धर्मत्वं बोध्यत इति वाच्यं । उपक्रमोपसंहाराभ्यां विद्यैकत्वनिर्णयस्यैव दृश्यमानत्वादुपेक्षद्व भाति । ननु तदुक्तियैया तथास्तु प्रतद्धर्मत्वबोधनस्यानुपसंहारार्थकत्वे कानुपपत्तिरिति चेत् । उच्यते । सूत्रस्य तदुक्तार्थत्वे हि तत्साध्यर्थकल्पना सएव च न साधीयान् । तथाहि । स्वाध्यायोऽध्येतव्य इत्यादिषु स्वाध्यायशब्दस्य वेदवाचकत्वं प्रसिद्धं समाचारशब्दस्य विहितक्रियावाचकत्वञ्च । तत्रोभयोरपि मुख्योऽर्थो बाध्यते । तस्मिन् सम्भवति तद्बाधस्त्वयुक्तः ।

किञ्चैव मत्वग्निष्टोममेवोद्दिश्येत्यादिनोक्ताशङ्काया अनिवृत्तिरिति । नन्वथर्वणोपनिषत्सु पठ्यते स होवाचाब्जयोनिः योऽवताराणां मध्ये श्रेष्ठोऽवतारः को भविता येन लोकास्तुष्टा देवास्तुष्टा भवन्ति य स्मृत्वा मुक्ता अस्मात् संसाराद्भवन्ति कथ चास्यावतारस्य ब्रह्मता भवति । स होवाच तत्र हि नारायणो देव इत्युपक्रम्य मथुरास्वरूपं निरूप्य निगद्यते यत्रासौ संस्थितः कृष्णः स्त्रीभिः शक्त्या समाहित इति तेनास्यावतारस्याशेषावताराणां मध्ये श्रैष्ठ्यं निरूप्यते । श्रीभागवतेऽपि च एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयमिति गीयते । पूर्वोक्तरीत्या [illegible] सर्वतुल्यता प्रतीयत इति नैकतरनिर्द्धारः सम्भवति । किञ्च ब्रह्मणो निरवयवत्वेनैकस्यांशित्वमन्येषां तदंशत्वमित्यपि वक्तुमशक्यमिति मासेऽभिधीयते । सत्त्वं यस्य प्रिया मूर्त्तिः विशुद्धसत्त्वं तत्र धाम शान्तमित्यादिवाक्यैरप्राकृती भगवत्स्थानभूत-सत्त्वनामा भगवद्धर्मरूपएव कथनाहि याद्दशेन रूपेण भगवान्

कार्य्यं कर्त्तुमिच्छति तादृग्रूपत्वं प्रकटीकृत्य तस्मिन् स्वयमा-
विर्भूयाय पिण्डे वह्निवत् तत्तत्कार्य्याणि करोति यस्मिन् यस्मि
न्नवतारे स्वांशः इत्युच्यते तत्र हि विग्रहस्तथाविर्भूत ब्रह्म-
स्वरूपत्व प्रतीयते। विग्रहस्य सत्वात्मकत्वेन धर्मरूपत्वात् तथा-
विर्भूतस्यैव ब्रह्मतत्समुद्दिष्टस्यावतारत्वेन गणनात् तत्रैकस्यै-
वांशस्य तद्रूपत्वं यत् तदेवांशत्व। यथाधिष्ठानमनपेक्ष्य स्वयमेव
शुद्धं साकारं ब्रह्माविर्भवति भक्तार्थं स स्वयं पूर्णो भगवानु
च्यते। एतदेव च ध्येयमतएव मत्स्येन पाणिपादात्मत्वं स्वस्मिन्
स्फुटं ज्ञापयितुं लीलादिभावेनाविर्भूय। तेन यादृग्यादृग्
लीलाविशिष्टं यद्यद्बाल्यपौगण्डाद्यवस्थाविशिष्टं तत्तद्रूपं नित्य-
मेवेति वयं जानीमः। न चैवं सच्चिदानन्दविग्रहोक्तिः सर्व्वत्र
विरुद्धा भवेदिति वाच्यं। सत्वस्यापि भगवद्धर्मत्वेन सच्चिदानन्द-
रूपत्वादविरोधात्। मत्स्याद्यधिष्ठातृरूपाणि तु विभूतिरूपाणि।
एतच्च यथातथा भक्तिहंसे प्रपञ्चितं। तच्च प्रकाशाश्रयवद्वा
तेजस्त्वादिति न्यायेन भगवद्धर्म्माणामपि सच्चिदानन्दरूपत्वात्
हीनाधिकारिणामप्युपासकानां फलेप्सूनां तत्तत्फलदानार्थ-
मैश्वर्य्यादिरूपेण तत्र तत्र स्थितत्वमेव। नन्वेतस्यैव शुद्धस्यैवा-
नन्तरूपत्वं भवतैवोक्तमतो मत्स्यादिरूपेष्वपि नाधिष्ठानत्वेन
तत्त्वं वक्तुं शक्यं। किञ्चैवं निराकारस्वभावस्य ब्रह्मण सिध्यतीति
सत्याश्रयहितसाकारोक्तिरप्यनुपपन्नेति चेत्। नैवं। सत्ताधि
ष्ठानत्वस्य प्रमाणसिद्धत्वेनानपनोद्यत्वात्। "तयोस्त्वदेकमव्यक्त-
मित्यादि"। साकाट्यं हि भक्तिनिमित्तकं सा तु बहुविधेति तदनु-

---

* [illegible]

रूपं प्राकट्यमपि तथा* । सर्गादिकार्य्येष्वधिकृतानां भक्तानामितरासक्तिरयुक्तेत्युपाध्यन्तरितस्नेहवत्त्वाद्वाऽनन्तरूपत्वेन मत्स्यादिरूपोऽपि तदर्थं तदवधानेन प्रकटीभवति । ये तु भगवत्स्वरूपमात्रासक्तास्तदर्थं स्वयमेवातदवधानेन प्रादुर्भवति । एतेनैव निराकारत्वशङ्कापि† निरस्ता । एतेन सोपधिस्नेहवदर्थमेव मत्स्यादिरूपप्राकट्यस्य प्रमाणसिद्धत्वान्निरुपधितदर्थमेव श्रीव्रजनाथप्राकट्यस्यापि तथात्वात् सोपाधिस्नेहवत्स्वपि पुरुषार्थदानस्यानुषङ्गिकत्वात् पुरुषविध इति श्रुतेश्चैतदेवरूपं रसो वै स इत्यादिश्रुतिप्रतिपाद्यं निरुपधिस्नेहवतां विषय इदमेव च श्रेष्ठं मत्स्यादिरूपन्तु सोपधि तद्वतामेव तथा तादृक्तद्वतामर्थ एव प्राकट्यादित्यवसीयते । एवं सति गुणभेदस्याप्रयोजकत्वात् सर्ववेदान्तप्रत्ययत्वं ब्रह्मणो निष्प्रत्यूहं ।

दर्शयति च ॥ ४ ॥

वेद्यैकत्वेन विद्यानामेकत्वं श्रुतिर्दर्शयति सर्वे वेदा यत्पदमामनन्तीत्यादिना । उपासनाप्रकारभेदेनोपास्यभेददर्शने दोषञ्च दर्शयति यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते अथ तस्य भयं भवतीति । उदित्यव्ययमप्यर्थकं । तथा चाल्पमप्यन्तरं कुरुत इत्यर्थः ।

उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च ॥ ५ ॥

ननु पूर्वसूत्रोक्तरीत्या गुणोपसंहारो न क्वचिदपि प्राप्तावसर इति सिद्धं । दृश्यते चोपसंहारः श्रीगोपालोपनिषत्सु यो वै दि

* न वर्षेति ख ।

† निराकारत्वशङ्का इति ख ।

मत्स्यकूर्मादयवतारा इत्यादिनोक्तावताररूपत्वस्य श्रीरामे नमस्ते रघुवर्याय रावणान्तकराय चेत्यादिषु तद्गतियुगच्छब्द-विषये श्रीव्रजनाथे रघुवर्यत्वादेरित्याशङ्का तत्प्रयोजकं रूपमाह। उपसंहार इत्यादिना। उक्तस्थलादिषु य उपसंहारः* सतर्थस्य पदार्थस्य भगवल्लक्षणयो†भयत्राप्यभेदादित्यर्थः। नन्वेवं सति मत्स्ये शरचापादिकं पुरुषे‡ शृङ्गादिकं भावनीयं स्यादिति चेत्। तत्राह। विधिशेषवदिति। यथा विधिशेषाणामग्निहोत्रादीनामग्निहोत्रत्वादिलक्षणे धर्मे समानेऽपि सति स्वस्वशाखोक्तप्रकारकस्यैव करणं नान्यशाखोक्तधर्मोपसंहार एवमिहापि तत्तदवतारोपासकस्य तत्तदसाधारणधर्मवत्त्वेनैवोपासनं नान्यावतारधर्मवत्त्वेनापीत्यर्थः। यद्वा मत्वर्थीयोवत्प्रत्ययोऽत्र। तथाच विधिशेषोऽर्थवादस्तद्वत् समानत्व भवति यत्तत्र चोपसंहार इत्यर्थः। अत्रैवं ज्ञेयं। एकस्यां श्रुतौ यस्य कर्मणो यत् फलमुच्यते तदितरस्यां तस्यैव कर्मणस्तदितरत् फलमुच्यते। एवं सति द्वितीयश्रुत्युक्तफलकामनयापि तदेव कर्म कर्त्तव्यं भवतीति तत्फलसाधकत्वस्योपसंहारः। यथा यदैन्द्रदेवेन यजते प्रजा एव तद्यजमानः सृजत इत्येका श्रुतिरस्य यागस्य प्रजाफलकत्वमाह। यदैन्द्रदेवेन यजते। अग्निमेव तत्संवत्सरमाप्नोति तस्मादैन्द्रदेवेन यजमानः। संवत्सरीणां स्वस्तिमाशास्त इत्याशासीतेति द्वितीया श्रुतिराह तत्रोक्तरीतिरिति। यत्तु

---

* उक्तस्थलादिषु उपसंहार इति खं।

† भगवल्लक्षणयोरिति खं।

‡ पुरुषे च इति खं।

विधिभेदानामग्निहोत्रादिधर्माणां तदैवैक्यमग्निहोत्रादिकर्म सर्वत्रैव्यर्थाभेदादुपसंहार इति तन्न साधु । अग्निहोत्रादेस्तत्तच्छाखिनां स्वस्वशाखोक्तप्रकारेणैव करणादितरेके प्रायश्चित्तश्रवणाच्चान्यशाखोक्तधर्मोपसंहारः शास्त्रवचनः । प्राणाद्युपासना स्वधिकगुणस्यैतत्रोपसंहारे न किञ्चिद्बाधकं दृश्यत इति तत्र स कर्त्तुं शक्यत इति चकारेण तद्वाद्ययः सङ्गृह्यन्ते । वस्तुतस्तु पूर्वसमुच्चयार्थश्चकारः । आखान्तरोक्तधर्मोपसंहारप्रयोजनाभावस्य स्वाध्यायस्य तथात्वेनेत्यत्र निरूपितत्वात् । उपसंहारश्चोक्तमनेन सूत्रेणोक्तं ।

## अन्यथात्वं शब्दादिति चेन्नाविशेषात् ॥ ६ ॥

ननु उपासनासूत्रन्यायेन गुणोपसंहारोऽनुपाख्यानां ब्रह्मत्वेनैक्ये सति भवति । मिथोविरुद्धानां गुणानां शान्तत्वक्रूरत्वतपोभोगादीनामुपसंहारे क्रियमाणे स्वरूपाणामन्यथात्वं अब्रह्मत्वं स्यादित्यर्थः । तत्र हेतुः शब्दादिति । एकत्वैकरसत्वादिधर्मनिरूपकश्रुतेरित्यर्थः । समाधत्ते नाविशेषादिति । एकरसत्वं यथा श्रुतिबलाद्विधीयते तथा विरुद्धधर्मवत्त्वमपि तत एव तथेत्यर्थः । तेन वस्त्वेव तत् तादृगलौकिकमिति भावः ।

## न वा प्रकरणभेदात्परोवरीयस्त्वादिवत् ॥ ७ ॥

पूर्वसूत्रोक्ताशङ्कानिराकरणं वा विकल्पेन पूर्वोक्तात् प्रकारान्तरेण कर्त्तव्य इत्याह । न वेति । तमेवाह । प्रकरणभेदादिति । अयमयं भावः । श्रुतिप्रामाण्यादेव तदुक्तधर्मवत् ब्रह्मेति मन्तव्यं । एवं सति यादृशोऽधिकारिणो यादृग्वेद्यं

रूपं तादृशस्य तस्य तादृक् तन्निरूपयति प्रकरणभेदेन। तथाच ज्ञानप्रकरणे ज्ञानाधिकारिणो यादृग्रूपं ज्ञेयं तादृक्तत् तस्मै निरूपयति अदृश्यमग्राह्यमित्यादिरूपा श्रुतिः। भक्तिप्रकरणे तु भक्तेर्बहुविधत्वात् यादृग्यादृग्भक्तानां यादृक् यादृक् तदनुभवविषय*स्तादृक्तादृक् निरूपयत्यथर्वणोपनिषदिति। अत्र दृष्टान्तमाह। परोवरीयस्त्वादिवदिति। अस्मिन्मे लोकेऽर्द्धुकं स्यादिति कामयत आराधयाऽवान्तरदीक्षा पूर्वमुक्ता। तदर्थे परोवरीयसीमवान्तरदीक्षामुपेयाद्यः कामयेतामुष्मिन्मे लोकेऽर्द्धुकं स्यादिति चतुर्थेऽथ योनय द्वावप्येकमेवा वै परोवरीयस्यवान्तरदीक्षेति पठितं। अत्र दीक्षाप्रकरणे पठितत्वाद्दीक्षां विनोक्तरीत्या व्रते तु न परोवरीयस्त्वमेवं भक्तिप्रकरणीयानामथर्वणोपनिषदाद्युक्तरूपाणां न भक्तिरहितोपास्यत्वं। ज्ञानसाधनत्वेन विष्णुस्मरणादावपि क्रियमाणे भक्तित्वं नेति। अथवा पूर्वसूत्रेण सर्वरूपेषु मिथः सर्वधर्म्माणामुपसंहारः प्राप्तः। स चैकान्तिभक्तानुभवविरुद्ध इत्यत व्यवस्थितविकल्पमाह न वेत्यादिना। सर्वेष्ववतारेषु भगवदवतारत्वेन साधारणी भक्तिर्यस्य स सर्वेषामुपसंहारं करोतु नाम यस्त्वेकान्ती तस्य स्वेष्टोत्कर्षेणान्तःकरणमेकस्मिन्नेव रूपे पर्यवसितमिति रूपान्तरमन्तःकरणारूढं न भवत्येवेति नोपसंहारसम्भावनापीति। तदेतदुच्यते न वेत्यनेन। तत्र हेतुः प्रकरणभेदादिति। श्रुत्यादिषु तत्तदधिकारिणमुद्दिश्य तत्तत्प्रकरणमुक्तं तेनात्र प्रकरणपदेनाधिकार उच्यते। एवं सत्युपासकादिभ्य उक्तरीत्योत्कृष्टाधिकारादित्यर्थः

---

* तादृगनुभवविषय इति ख।

सम्पद्यते । परोवरीयस्त्वादिवदिति । परस्मात्परस्य वराञ्च वरीयानिति परोवरीयानुद्गीथः । तथा चाच्यादित्यादिगतहिरण्मश्मश्रुत्वादिगुणविशिष्टोपासनाया अप्युद्गीथोपासनत्वेन साम्येऽपि सर्वोत्कृष्टत्वेनाचोद्गीथोपासत इति न हिरण्मश्मश्रुत्वादिगुणोपसंहारः परोवरीयस्त्वगुणविशिष्टोद्गीथोपासनायामेवं प्रकृतेऽपीति ।

## संज्ञातश्चेत् तदुक्तमस्ति तु तदपि ॥ ८ ॥

एकात्म्यनेकात्मिनोरपि श्रीरामोपासकत्वादिसंज्ञा त्वविशिष्टेत्येकात्मिनोऽप्युपसंहारो युक्तं इत्याशङ्कोत्तरन्तु न वा प्रकरणभेदादित्यनेनैवोक्तं । संज्ञा तु लौकिक्यधिकारत्वान्तरः सएव बलीयानिति। संज्ञैकत्वस्य हेतोरन्वयव्यभिचारमाह अस्ति तु तदपीति । प्रमिति * भेदेष्वप्युपासनेषु परोवरीयस्त्वादिषु सञ्ज्ञैकत्वमुद्गीथोपासनेऽप्यस्तीत्यर्थः ।

## व्याप्तेश्च समञ्जसम् ॥ ९ ॥

अथेदं विचार्य्यते । उपास्येषु रूपेषु वात्स्यपौगण्डादिकमप्युच्यते । तथा सति विरुद्धे न्यूनाधिकभाव आपततीति तथोक्तं सच्चिदानन्दत्वमनुपपन्नं स्यात् तेषां सदैकरूपत्वात् प्राकृतत्वे च सर्व्वमसमञ्जसं स्यादिति प्राप्त आह व्याप्तेरिति । सर्व्वतः पाणिपादं तदित्यादिश्रुतेः साकारमेव व्यापकमिति । चकारात् सर्व्वरस इति श्रुत्या रसात्मकत्वेन भक्तानां यादृग्रूपेण लीलारसानुभवस्तादृग्रूपं क्रमेण योगमायापसारणेन प्रकटी-

---

* प्रमितेरिति ख ।

करोतीति वास्यादिभावोपपत्तेः सर्व्वमुपपन्नमित्यर्थः। तेन यावदुक्तधर्म्मवद् ब्रह्मेति सिद्धं। ननु ब्रह्मधर्म्मवत्त्वेन * ते सर्व्वे नित्या वाच्यास्ते च तत्तद्रूपविशिष्टास्तत्र चैकस्यैव भक्तस्य पौर्व्वापर्य्येणानेकलीलासम्बन्धित्वं श्रूयते। तथाच पूर्व्वलीलाया नित्यत्वेन तत्सम्बन्धिभक्तस्यापि तथात्वं वाच्यं। एवं सति तस्यैवाग्रिमलीलासम्बन्धोऽशक्यवचनः। तथा वचने [illegible] पूर्व्वलीलाया नित्यत्वं † भज्येत। नित्यत्वे त्वग्रिमलीलासम्बन्धिनो भिन्नत्वं‡ स्यात् तथानुभवे तद्वेदकमानविरुद्धमित्यत उत्तरं पठति।

सर्व्वाभेदादन्यत्रेमे ॥ १० ॥

लीलामध्यपातिनां सर्व्वेषां पदार्थानां ब्रह्मणा सहाभेदाद्ब्रह्मण एकत्वात् पूर्व्वलीलातोऽन्यत्रोत्तरलीलायामपीमे पूर्व्वलीलासम्बन्धिन एव त इत्यर्थः। अयेदमाकूतं। रसो वै स इति श्रुत्या § सर्व्वरस ॥ इति श्रुत्या च सर्व्वरसात्मकत्वं ब्रह्मणो निर्णीतं। तत्रच यस्य रसस्य ये विभावानुभावादिरूपास्तैः स रसः सम्पद्यत आतानवितानात्मकतन्तुभिः पट इवातस्तत्तादात्म्यं रसस्येति सर्व्वाभेदो निःप्रत्यूह इति। ननु विरुद्धदिकयोरेकजातीयभावयोर्भक्तातिशयेन युगपदेकजातीयलीलासहितभगवत्प्रादुर्भावे भगवतो व्यापकत्वेनैवं प्रादुर्भावेऽप्युप-

---

* ब्रह्मधर्म्मत्वेनेति ख।

† नित्यत्वे इति ख।

‡ सम्बन्धिभिन्नत्वमिति ख।

§ श्रुत्या चेति ख।

॥ खपुस्तके सर्व्वरस इति श्रुतिर्न परिगृहीता।

पन्नत्वेऽपि लीलापदार्थानामव्यापकत्वात् युगपदाविर्भावोऽनुपपन्नः *। भक्तयोः समानत्वाद्भक्तिमार्गविरोधापातादिनियमकाभावाच्चैकत्र मायया प्रदर्शयतीति च वक्तुं युक्तमिति शङ्कैताभ्यां सूत्राभ्यां निरस्तेति ध्येयं। ब्रह्मणो व्यापकत्वाल्लीलायाश्च तेन सहाभेदात् तथात्वादेकस्मै भक्ताय यथा ब्रह्मणा सह लीलापदार्था आविर्भवन्ति तथैव तदैवान्यत्रापि भक्तसमानदेशे चाविर्भवन्तीति सर्वं सामञ्जस्यात्। ननु व्यापकत्ववत् पूर्णानन्दैश्वर्यवीर्यादयोऽपि धर्म्माश्चेषु प्रतीता भवेयुः न चैवमस्ति दुःखसम्भावनायां प्रभुमेव प्रार्थयन्ति यतः। एवं सति व्यापकत्वमपि न वक्तुं शक्यं तुल्यत्वादत उत्तरं पठति।

आनन्दादयः प्रधानस्य ॥ ११ ॥

पूर्णानन्दैश्वर्यादयः प्रधानस्य धर्म्मिणो ब्रह्मण एव धर्म्माः लीलापदार्थास्तु ब्रह्मधर्म्मत्वेन व्यापका उच्यन्ते। व्यापकस्य धर्म्मिणोऽनागन्तुकधर्म्मस्य व्यापकत्वनियमात् न हि धर्म्मेषु पूर्णानन्दत्वादयः सम्भवन्ति। धर्म्मित्वापत्त्या धर्म्मव्याहतेः †। अत एवात्र प्रधानपदमुपात्तं गुणभावेन लीलापदार्थानामाविर्भाव इति ज्ञापयितुं।

प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥ १२ ॥

ननूपासकस्य प्रियत्वादिप्रकारकब्रह्मज्ञानमादाय प्रियत्वादिधर्म्माणां शिरस्त्वादिरूपत्वमानन्दमयाधिकरणे निरूपितमिति

---

* आविर्भावानुपपत्तेरिति ख।

† व्याहतेरिति ख।

लीलास्थानामपि प्रियत्वादिज्ञानस्य सत्त्वादत्रापि स्वरूपोपास-
कस्य प्रियशिरस्त्वादिधर्म्माणामुपसंहारः कार्य्य इत्याशङ्का परि-
हरति प्रियशिरस्त्वाद्यप्राप्तिरिति । चित्तशुद्धितारतम्यहेतुक-
प्रियत्वादिज्ञानं लीलास्थानां चित्तशुद्ध्य*पेक्षाभावान्न सम्भव-
तीति न तेषामत्रोपसंहारः कार्य्य इत्यर्थः । अथवा नन्वानन्द-
मयोपासनायामथर्वणोपनिषदुक्तपक्षरावयवागमोक्तप्रकारेण कुर्व्वतः
पुरुषरूपे पक्षाद्युपसंहारस्यायुक्तत्वादानन्दमयाधिकरणे तद्रूप-
स्योक्तत्वात् पुरुषरूपः कथमानन्दमयः । तथात्वे वा कथं
नोक्तोपसंहारः । अपरञ्च । मोदप्रमोदयोरुपचितानुपचिता-
नन्दरूपयोर्गुणपक्षत्वेन देशभेदेनापि भिन्नत्वा†न्नित्यानन्दैकरसे
ब्रह्मणि तादृग्रूपकथनमनुपपन्नमित्याशङ्क्य परिहरति । प्रिय-
शिरस्त्वादीति । यद्यथर्वणोपास्यात् प्रियशिरस्त्वादिविशिष्टस्य
भेदः स्यात् तदा तदप्राप्तिः ‡ स्यान्न च तथेति प्रियशिरस्त्वादिक-
मुपासनामार्गीयव्याथर्वणिकादेरुपसंहार्य्यमेवेत्यर्थः । चित्तशुद्धि-
तारतम्यहेतुकं प्रियत्वादिज्ञानमिति पक्षे परोक्षवादपक्षेऽपि
तत्र भेदाभावान्मोदप्रमोदयोर्न स्वदुष्टरूपत्वमित्यर्थः । ब्रह्म-
धर्म्मा एव भिन्ना इत्युपासनार्थं तानादाय शिरःपक्षादि निरू-
प्यत इति तत्रैव निरूपितमस्माभिः । यद्यप्यानन्दमयाधि-
करण एवास्यार्थस्योक्तत्वादियं श्रुतिः सम्भवति तथापि गुणोप-
संहारपक्षे § मिथ्यावादिन आपाततः श्रुतिः सम्भवतीत्याशये-

* चित्तशुद्ध्यपेक्षाभावादिति ख ।

† देशभेदेनाभिन्नत्वादिति ख ।

‡ तदा तदप्राप्तिः स्यादिति क पुस्तके नास्ति ।

§ पक्षे इति ख ।

णोक्ता निरस्ता। नतूपास्यरूपस्याविरुद्धाएव गुणा उपसंह-र्त्तव्या न तु विरुद्धाः। तथाच पुरुषरूपे पक्षादि विरुद्धमिति न तदुपसंहार्य्यमित्याशङ्क्याह।

इतरे त्वर्थसामान्यात् ॥ १३ ॥

इतरे पुरुषरूपे विरुद्धत्वेन ये भासमाना धर्म्मास्तेऽप्युप-संहर्त्तव्याः। तत्र विरोधशङ्काव्यवच्छेदज्ञापनाय तु शब्दः। तत्र हेतुरर्थसामान्यादिति। अर्थः पदार्थः आनन्दमयलक्षणस्तस्य समानत्वादेकत्वादित्यर्थः। यथानन्दमयाधिकरणे उक्तप्रकारेण ये प्रियत्वादिधर्म्मास्तेषामेवोपसंहारः कार्य्यः न तु पुरुषरूपे पक्षादीनामपीत्यग्रिमं पठति।

आध्यानाय प्रयोजनाभावात् ॥ १४ ॥

आनन्दस्वरूपस्य यावन्तो धर्म्मा भक्तिमार्गीयाः परोक्षवादे-नोक्तास्ते प्रियत्वप्राधान्यादयस्तेषां सर्व्वेषां ध्यानमासमन्ताद्ध्यानं तदर्थं ये धर्म्मा * प्रयुक्तास्तएवोपसंहर्त्तव्या नान्ये। तत्र हेतुः प्रयोजनाभावादिति। ध्यानपदार्थस्य तावद्भिरेव सिद्धेरधिकोप-संहारे तदभावादित्यर्थः। अन्येषामनुपसंहारे हेत्वन्तरमप्याह।

आत्मशब्दाच्च ॥ १५ ॥

प्रियमेवेत्यादिना परोक्षवादेनोक्तानां प्रियप्राधान्यादीना-मेव भावना कार्य्या न तु यथाश्रुतानां शिरःपक्षादीनां। तेषा-मविवक्षितत्वात्। तत्र हेतुरात्मशब्दादिति। आनन्द आत्मे-

* तदर्थं च धर्म्माः इति ख।

† उपयुक्ता इति ख।

त्वेन पूर्वोक्तानां प्रियप्राधान्यादीनां रसात्मकानामात्मा स्वरूपमानन्द इत्युक्तं। अग्रे रसो वै स इति वक्ष्यमाणत्वात् तस्य च स्थायिभावात्मकत्वात् तस्यैवानन्दमयत्वाच्च प्रियविषयकलीलामध्यपातिभक्तज्ञानप्रकाराणामपि रसात्मकत्वेनानन्दरूपत्वात् तेषामुपासना तूत्तमाधिकाराभावात् शिरःपक्षादिरूपेण कार्य्येति भाववती श्रुतिस्तथा न्यरूपयत्। एतेन यत्परम्परासम्बन्धेऽप्युपास्यत्वं तदस्य महत्त्वं * कियदवधिवाच्यमिति ज्ञाप्यते। एवं सत्युपासनामार्गीयोपास्यं विभूतिरूपं न तु मूलरूपं यत्र योगेन वाक्यादिति ज्ञेयं।

## आत्मगृहीतिरितरवदुत्तरात्॥ १६॥

तैत्तिरीयकेऽन्नमयादिनिरूपणे पुरुषविधत्वं तेषां निरूप्य तस्यैष एव शारीर आत्मा † यः पूर्व्वस्येति सर्व्वत्र निगद्यते। तत्रानन्दमयपर्य्यन्तं शारीरात्मत्वकथनाद्भवति संशयः। शरीराभिमानी जीवएव कश्चिदुत ब्रह्मैव। तत्र शारीरपदात् जीवएव भवितुमर्हति। तथा सत्यानन्दमयस्यापि ब्रह्मत्वं नोपपद्यते। उच्यते च भार्गव्यां विद्यायां अन्नं ब्रह्मेति व्यजानादित्यारभ्यानन्दमयपर्य्यन्तमानन्दो ब्रह्मेति व्यजानादित्यन्तया श्रुत्या ब्रह्मत्वमित्युभयतः पाशारज्जुरिति प्राप्त आह। इतरवत् जीववत् आत्मगृहीतिः आत्मपदग्रहणं। तस्यैष एव शारीर आत्मेति यत्तदुत्तरात्। यः पूर्व्वस्येति सर्व्वत्रोक्तत्वात् सर्व्वेभ्य उत्तर आनन्दमयस्तस्माद्धेतोरित्यर्थः। अन्नमयादिषु सर्व्वेष्वानन्दमयस्यैवोक्त-

---

* तदात्मकत्वमिति ख।

† पुरुषएव शारीर आत्मा इति ख।

तत्तच्छरीराभिमानित्वात् तथा। एतद्यथा तथानन्दमयाधिकरणे * प्रपञ्चितमस्माभिः। अथ योऽन्योऽन्तर आत्मेत्यन्नमयादन्यत्र सर्व्वोक्तत्वात् पूर्व्वपूर्व्वनिरूपितो यः स इतर इत्युच्यते। तथा च यः पूर्व्वस्येति श्रुत्येतरवत् पूर्व्वनिरूपितवत् प्रकृतस्याप्यात्मपदग्रहणं कथनं यत्तदुत्तरादिति।

अन्वयादिति चेत्स्यादवधारणात् ॥ १७ ॥

ननु सर्व्वत्रान्योऽन्तर आत्मेति श्रुत्या प्रत्येकमन्नमयादीनां भेदनिरूपणाच्छारीरपदाच्च भिन्नो भिन्नो जीव † आत्मा शरीराभिमानी सर्व्वत्रोच्यते। आनन्दमयेऽपि तथोक्तिर्या सा आनन्दमयस्य ब्रह्मत्वेन व्यापकत्वेन ‡ सर्व्वत्रान्वयात् सर्व्वेषु शरीरेषु सम्बन्धादित्याशङ्क्य तन्निरासायोक्तेऽर्थे उपपत्तिमाह। स्यादित्यादिना। स्यात्। आनन्द एवोक्तसर्व्वशरीराभिमानी भवतीत्यर्थः। तत्र हेतुरवधारणादिति। एष एवेत्येवकारेणेतरनिषेधपूर्व्वकमानन्दमयस्यैवात्मत्वनिर्द्धारादित्यर्थः।

कार्य्याख्यानादपूर्व्वं ॥ १८ ॥

तैत्तिरीयके पठ्यते। तस्माद्वा एतस्मादात्मन आकाशः सम्भूत इत्युपक्रम्य महाभूतसृष्टिमुक्त्वा आम्नायते पृथिव्या ओषधयः ओषधीभ्योऽन्नं अन्नात् पुरुषः स वा एष पुरुषोऽन्नरसमय इति। एतदर्थेऽन्नस्योत्पत्तिस्थितिलयहेतुत्वमुक्त्वा येऽन्नं ब्रह्मोपासत इत्युच्यते। भृगुवरुणसंवादे चान्नं ब्रह्मेति व्यजानादित्युच्यते। तत्र स वा

---

* एतत् यथानन्दमयाधिकरणे इति ख'।

† शारीरपदाच्च भिन्नो जीव इति ख'।

‡ व्यापकत्वेनेति खपुस्तके नास्ति।

एष पुरुषोऽक्षरसमय इत्यनेन पूर्व्वोक्तएव पुरुष उच्यत उत तद्भिन्न इति भवति संशयः। किमत्र युक्तं पूर्व्वोक्त एवेति। यतः पूर्व्वोक्तस्यैव स वा एष इत्यनेन प्रत्यभिज्ञानं प्रतीयते तत्र ब्रह्मत्वेनोपासना कार्य्येत्यभिप्रायेण ब्रह्मत्वेन सूयत इति प्राप्त आह। कार्य्याख्यानादपूर्व्वमिति। पूर्व्वस्यात्मकार्य्यस्य पुरुषस्याख्यानात् स वा एष इत्यनेनाग्रिमश्रुतिभिर्ब्रह्मत्वेन प्रतिपिपादयिषितमपूर्व्वरूपमेवोच्यते न तु पूर्व्वमित्यर्थः। स वा एष इति प्रत्यभिज्ञानमिति यदुक्तं तत्र। अन्नात् पुरुष इत्यन्तेनाधिभौतिकतन्निरूपणात् स वा एष इत्यनेनाध्यात्मिकतन्निरूपणादुभयोश्च भेदात्। अतएव संशयाभावायाह। वै निश्चयेन। एष वक्ष्यमाणः पुरुषः सः। आध्यात्मिकत्वेन प्रसिद्धोऽक्षरसमय इति। अन्यथा ब्रह्मात्मकतपोलक्षणसाधनेनाधिकारे सम्पन्नेऽन्नं ब्रह्मेति व्यजानादिति न वदेत्। न चैतदपि तत् तथात्वेन सूयत इति वाच्यं। श्रुतेः प्रतारकत्वापत्तेः। आनन्दमयान्तमेवमेव निरूपणाच्च। अतएवाध्यात्माऽग्रे निरूपितो यः पूर्व्वस्येति तत्राधिदैविक आनन्दमयः। अथवा वाजसनेयिशाखायामात्मेत्येवोपासीतेत्युपक्रम्य तदेतत् प्रेयः पुत्रात् प्रेयोवित्तात् प्रेयोऽन्यस्मात् सर्व्वस्मादन्तरतरं यदयमात्मेत्येतदपेक्ष्यान्यस्य प्रियत्वं निराकृत्येश्वरो हि तथा स्यादात्मानमेव प्रियमुपासीतेति पठ्यते। अत्रात्मौपाधिकत्वात् सर्व्वत्र प्रियत्वात्मपदेन जीवात्मनएव प्रियत्वेनोपासना विधीयत उतेश्वरपदात् परमात्मन इति भवति संशयः। किमत्र युक्तं जीवात्मनएवेति। अतः * यथा पुत्रादेरात्मौपाधिकप्रिय-

* पुत इति ख।

त्वोक्त्या जीवात्मनएव प्रियत्वमुच्यतेऽन्यत्र श्रुतौ तथेहापि प्रेयः पुत्रादित्यादिकथनाज्जीवात्मैव भवितुमर्हतीति प्राप्त आह। कार्य्याख्यानादपूर्व्वमिति। इतः पूर्व्वमाम्नायते प्राणन्नेव प्राणो नाम भवति वदन्वाक् पश्यंश्चक्षुः शृण्वन् श्रोत्रं मन्वानोमन-स्तान्यस्यैतानि कर्म्मनामान्येवेति। तथाच प्राणनवदनादि-कार्य्यैः तत्तत्प्राणवागादित्वेनैकस्यैवात्मन आख्यानात् कथ-नादपूर्व्वं। पूर्व्वं पुत्रवित्ताद्यभिमानदशायां न वा अरे पत्युः कामाय पतिः प्रियो भवतीत्यादिना यत्प्रियत्वेनोच्यते तस्मात्प्रिय-मात्मशब्दवाच्यमचेत्यर्थः। लोके हि प्राणवाग्वागिन्द्रिया-दीनामिव तत्तच्छब्दवाच्यता न तु जीवस्य अत एवाग्रे श्रुतिराह ईश्वरो हि तथा स्यादिति। अत एव प्रेयोऽन्यस्मात् सर्व्वस्माद-न्तरतरं यदयमात्मेत्याह। अन्तरो जीवात्मा ततोऽप्यतिशये-नान्तरमन्तरतरं पुरुषोत्तमस्वरूपमेव भवितुमर्हतीति एतेन प्रियत्वस्यैवात्मरूपत्वं सिध्यति। तेनाविकृतत्वपरमानन्दत्वा-दयोऽपि धर्म्मा उपसंहर्त्तव्याः। ननु विपद्दे चक्षुःश्रोत्रादीनां वैलक्षण्यप्रतीतेरात्मनश्चैकरसत्वादुक्तकर्म्मनामवत्त्वं कथमनुपपन्न-मित्याशङ्क्योत्तरं पठति।

## समान एवं चाभेदात् ॥ १९ ॥

चोऽप्यर्थे। तथाचैवमपि सति श्रोत्रचक्षुरादिवैलक्षण्य-प्रतीतावपि सति समान एकरूपएव न तु विषमस्तत्र हेतुर-भेदादिति। चक्षुरादीनां ब्रह्मत्वेन परस्परमभेदादित्यर्थः। अत्रे-दमाकूतं। तन्त्वौपनिषदं पुरुषं पृच्छामीति श्रुतेरुपनिषद्वेद्यमेव ब्रह्मस्वरूपं। तत्र प्राणन्नेव प्राणो भवति वदन्वागित्यादिरूपाः

प्रतिनियतेन्द्रियग्राह्यानर्थान् स्वरूपेणैव स्वहृदये तत्तच्छब्दवाच्यं भवतीति वदन्ति। तद्वाच्यता च व्यवहार्यत्वे। स च तदैतत् प्रेयः पुत्रादिवाक्यैकवाक्यतया निरूपधिप्रेष्ठतामेव व्यवहार्य इति गम्यते। स चाविर्भूतेऽवतारस्वरूपएव सम्भवति। एवं सति तत्र भक्तैर्भगवद्विषये तत्तदवयवेषु भेदेन यथायथा व्यवह्रियते तथातथैव तदेकमेवाखण्डसच्चिदानन्दरूपं ब्रह्मेत्यर्थः सम्पद्यते। एवंविधो लोके न प्रसिद्ध इत्यसम्भावना स्यात् तदभावायापि श्रुतिराह ईश्वरो हि तथा स्यादिति। एतेनाविर्भूतरूपे व्यापकत्वैकरसत्वसच्चिदानन्दत्वादयो धर्मा उपसंहर्त्तव्या अनाविर्भूतेऽपीति स्थितं। एवं सत्याविर्भावेऽनाविर्भावेऽपीश्वरः समानः। न त्वाविर्भावे कायनागन्तुकान्धर्मानादायाविर्भवतीति वक्तुं शक्यं अनाविर्भूतस्यापि एवं आविर्भूतप्रकारेणैवाभेदादित्यपि सूत्रार्थः सूत्रकाराभिमत इति ज्ञातव्यं। चकारेण विरुद्धसर्वधर्माश्रयत्वं समुच्चीयते। एवं साकाराविर्भूतभगवद्रूपे पूर्वोक्तधर्मास्तदुपासकेनोपसंहर्त्तव्या इति सिद्धं।

अथ यत्र कार्यविशेषेच्छया जीवे स्वयमाविशति तदावेशात्तद्धर्मा अपि केचित् तस्मिन्नाविर्भवन्ति तत्रोपासकेनाखिलब्रह्मधर्मोपसंहारः कर्त्तव्यो न वेति सन्देहसमाधाने विकल्पेनाह सूत्राभ्यां। तत्रादौ विधिपक्षमाह।

## सम्बन्धादेवमन्यत्रापि ॥ २० ॥

अन्यत्रापि जीवेऽप्येवं ब्रह्मधर्मोपासना कार्या। तत्र हेतुः सम्बन्धादिति। अयोगोलके वह्नेरिव तस्मिन्नावेशलक्षणः सम्बन्धोऽस्तीति तत्त्वेन व्यपदेशाच्च तथेत्यर्थः। अत्रैवं ज्ञेयं। अयन्तु

जीवोऽत्राविष्टं भगवन्तमहमुपास इति जानाति चेत्तदा न सा जीवगामिन्युपासना किन्तु ब्रह्मगामिन्येव । तत्राखिलधर्म्मोपसंहारे न किञ्चिद्बाधकं । यत्र ब्रह्मत्वेनैव ज्ञात्वोपास्ते तत्रापि तं यथा यथोपासते तथैव भवति । तद्भूतान् भावयतीति श्रुतेर्गुर्वादौ जीवत्वबुद्धि" निषेधाच्च तथा । तत्तदुपासकस्य * तदुपासनासिद्ध्यर्थं तत्फलदानार्थं ताहग्रूपो भगवानाविशतीति च तथा । यस्त्वन्तरङ्गभगवद्भक्तं हृद्याविर्भूतभगवत्कं ज्ञात्वैतद्भजनेनाहं भगवन्तं प्राप्स्यामीति ज्ञात्वा तमेव भजते स भक्तिमार्गीय इति भक्तहृद्याविर्भूतेऽपि रूप उपसंहारो धर्म्माणां तेन न कार्य्य इत्यग्रिमं पठति ।

न वाविशेषात् ॥ २१ ॥

अनुपसंहारे हेतुरविशेषादिति । अस्य भक्तभक्तत्वेन तद्भजनरसास्वादनेन विस्मृततदाविष्टभगवत्कत्वेन तन्निरपेक्षत्वेन वा तदाविष्टभगवति गुणोपसंहारेऽनुपसंहारे वा भक्तोपासनाया विशेषाभावादित्यर्थः । अनुपसंहारस्यात्र बाधकत्वाभावज्ञापनाय वा शब्दः । विशेषादिति वा । पूर्व्वं विहितत्वेन भगवदाकारादिषु भजनं कुर्व्वंस्तद्रूपभक्तसङ्गेन तद्भजनेन च पूर्व्वस्मादतिविशिष्टं रसमनुभूतवानिति रसास्वादे विशेषाद्गुणोपसंहारं स न करोतीत्यनुवादः । विहितत्वेन गुणोपसंहारपूर्व्वकोपासनायां नीरसत्वेन अनादरज्ञापनाय वा शब्दः । भगवदवतारकरूपोऽपि बादरायणः प्रासङ्गिकेऽपि भक्तिमार्गस्मरणे तदीय

---

* जीवबुद्धिनिषेधादिति ख ।

† तत्र याहगुपासक इति ख ।

रसावेशपरवशस्तद्भावस्वभावमनूक्तवान्। अपि च। उपसंहारो* हि तत्रानुक्तानामन्यलोकानां गुणानां तत्र सत्त्वेन ज्ञानमात्रं। उक्तरूपभक्तरूपं भक्ताय तु तद्भजनीये भक्तएवालौकिकाननुभावान् भगवान् प्रत्यक्षं दर्शयतीति न तत्रोपसंहारापेक्षा-गन्धोऽपीत्युत्तरं पठति।

दर्शयति च ॥ २२ ॥

ननु भक्तभक्तः स्वस्येत्यलौकिकं वीर्य्यं दृष्ट्वा तदाविष्टे भगवति तत्सन्धारकत्वस्येन्द्रादीनामपि तदाज्ञापेक्षित्वं दृष्ट्वा द्युलोक-व्यापकत्वस्योपसंहारं करिष्यतीत्याशङ्क्याह।

सम्भृतिद्युव्याप्त्यपि चातः ॥ २३ ॥

राणायनीयानां खिलेषु पठ्यते। ब्रह्मज्येष्ठा वीर्य्या सम्भृतानि, ब्रह्माग्रे ज्येष्ठं दिवमाततान। ब्रह्म भूतानां प्रथमन्तु जज्ञे तेनार्हति ब्रह्मणा स्पर्धितुं क इति। अस्यार्थस्तु अन्ये हि पुरुषैः सहायानपेक्ष्य विक्रमाः सम्भ्रियन्ते तेन तत्पराक्रमाणां त एव नियतपूर्व्वभावित्वरूपकारणत्वेन ज्येष्ठाः ब्रह्मधर्म्माणान्तु ब्रह्मैव ज्येष्ठमनन्यापेक्षं सृष्ट्यादि करोतीत्यर्थः। एवं सति ब्रह्मज्येष्ठं येषां तानि ब्रह्मज्येष्ठानि वीर्य्याणि। अत्र छन्दसि बहुवचनस्य डादेशः। किञ्च। अन्येषां वीर्य्याणां यत्नपद्धतिमध्ये भङ्गोऽपि भवति तेन ते स्ववीर्य्याणि न सम्भृतानि ब्रह्मवीर्य्याणि तु ब्रह्मणा सम्भृतानि निःप्रत्यूहं सम्भृतानीत्यर्थः। तत्र ज्येष्ठं

* अ उपसंहारोहीति ख।

वह्नात्ते इन्द्रादिजननः प्रागेव दिवं स्वर्गमाततान व्याप्त-वनित्यमेव विश्वव्यापकमित्यर्थः । देशतोऽपरिच्छेदमुक्त्वा कालतोऽपि तमाह । ब्रह्मेति । भूतानामाकाशादीनां पूर्व्वमेव ज्ञे आविर्वभूवेत्यर्थः । एतेन वीर्य्यसम्भृतिद्युव्याप्तिप्रभृतिमाहात्म्यमुक्तं भवति । तथाच सम्भृतिश्च द्युव्याप्तिश्च तयोः समाहारस्तथा । एतावपि स तत्र नोपसंहरति । तत्र हेतुर्नवाविशेषादिति सूत्रोक्त एवेत्यतिदिशन्नाह एवेति । एतद्वया तदा तच्चेवोक्तं । विषयवाक्योत्तराद्धोंक्तधर्मोद्देशेनैवं ज्ञायते भक्तैहिकपारलौकिकोपयोगिधर्म्मोपलक्षणार्थं दयोरेवोद्देशः कृत इति । चकारेण दर्शनमप्युक्तं समुचीयते । अन्यच । स्वोक्तसम्भावनायां हि तद्योग्यतानिषेधः सम्भवति सा चाविर्भूतएव भगवति सम्भवतीत्यखिलब्रह्माविर्भावपूर्व्वकमाविर्भूतत्व तस्यैतया श्रुत्या माहात्म्यमुच्यत इति मन्यते । एवं सति एतद्वाक्योक्तधर्म्मयोरेवानुपसंहार्य्यत्वेन यत् कथनं तत्तु भक्तह्याविर्भूतं ब्रह्माप्येवंभूतमेवेति ज्ञापनाय अतो युक्तएवानुपसंहारः ।

## पुरुषविद्यायामिव चेतरेषामनाम्नानात् ॥ २४ ॥

तैत्तिरीयके सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् स भूमिं विश्वतो वृत्वा अत्यतिष्ठद्दशाङ्गुलं पुरुषएवेदं सर्व्वं यद्भूतं यच्च भव्यमित्यादिना पुरुषविद्या निरूप्यते । तत्रैव ब्रह्मविदाप्नोति परमिति प्रश्ने स वा एष पुरुषोऽन्नरसमय इत्यारभ्य प्राणमयमनोमयविज्ञानमयानन्दमयात्मकं ब्रह्मस्वरूपं निरूप्यते । तत्र सर्व्वत्र स च पुरुषविधएवेति च पठ्यते । अन्नमयादिषु पुरुषसूक्ते च पुरुषपदश्रवणादन्नमयादिषु सहस्र

शीर्षवत्त्वाद्युपसंहारः कर्त्तव्यो न वेति भवति संशयः। किमत्र युक्तं। उपसंहर्त्तव्यमेवेति। कुतः। सर्व्वत्र ब्रह्मण एवोपास्यत्वाद्धाप्युपासनोक्तेरन्नमयादिपुरुषत्वयोरविशेषादिच्यैक्यादिति प्राप्त उच्यते। पुरुषविद्यायामिवेति। अन्नमयादिषु सहस्रशीर्षवत्त्वादिकं नोपसंहर्त्तव्यं। कुतः। पुरुषविद्यायां यथा पुरुषस्वरूपं निरूप्यते न तथैतदेषामन्नमयादीनां विज्ञानमयान्तानां स्वरूपं प्रकरणे* निरूप्यते। अत्र हि पुरुषत्वमुच्यते। सहस्रपदमनेकत्वोपलक्षकं अन्यथाऽक्ष्णां शिरोभ्योऽद्विगुणत्वं वदेत्तेन साकारव्यापकत्वमुक्तं भवति। तत्र पुरुषविधत्वं स आध्यात्मिकरूपस्तच्छरीराभिमान्यात्मा चाप्य आधिदैविक उच्यते न तथात्र।

किञ्च। पुरुष एवेदं सर्व्वमित्यादिना प्रपञ्चात्मकत्वं सृष्टिदायत्वञ्चोक्ता एतावानस्य माहात्म्यमितोऽपि महत्माहात्म्यमस्तीति वक्तुं प्रपञ्चरूपं तद्विभूतिरूपमित्युक्त्वैतावानस्य महिमेत्यनेनोक्ता तत आधिक्यमाह अतो ज्यायांश्च पूरुष इति। एवमतिवैलक्षण्यात् पुरुषपदमात्रसाधर्म्येण नैकविद्यत्वं वक्तुं शक्यं न वोपसंहार इति। चकारादृतस्य पारे भुवनस्य मध्ये नाकस्य पृष्ठे महतो महीयानित्यादि श्रुतयः सर्व्वतः पाणिपादन्तदित्यादि स्मृतयश्च संगृह्यन्ते। एतेन यत्किञ्चिद्धर्मसाम्येऽपि† न मूलभूतब्रह्मरूपमत एव न तथोपास्यता तथात्वेनेति ज्ञापितं। अत एव भृगूपाख्याने अन्नमयादिब्रह्मज्ञानेऽपि जिज्ञासैवोक्ता भृगोरानन्दरूपपरब्रह्मज्ञाने तु नोक्ता।

---

* तत्प्रकरणे इति खं।

† धर्म्मसाम्ये इति खं।

तेनाशेषगुणपूर्णं ब्रह्मैवोक्तं भवत्यत उत्तमाधिकारिभिस्तदेवो-
पासनीयं न विभूतिरूपमिति ज्ञापितं ।

अथ निर्दोषत्वं ज्ञात्वा भजनीयमिति ज्ञापयितुमधिकर-
णान्तरमारभते ।

Hening वेधाद्यर्थभेदात् ॥ २५ ॥ ✓

वाजसनेयिशाखायां द्वयाह प्राजापत्या * इत्युपक्रम्य तेषां
मिथःस्पर्धामुक्तोच्यते ते ह देवानूचुर्हन्तासुरान् यज्ञ उद्गीथेनात्य-
यामेति ते ह वाचमूचुस्त्वं न उद्गायेति तथेति तेभ्यो वागुद-
गायद्यो वाचि भोगस्तं देवेभ्य आगायत् † यत् कल्याणं वदति
तदात्मने ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य
पाप्मना विध्यन् स यः स पाप्मा यदेवेदमप्रतिरूपं वदति स एव
पाप्मेति ‡ । एवमेव प्राणचक्षुःश्रोत्रप्रभृतिषु पापवेधमुक्तोच्यते
अथेतमासन्यं प्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्य एष प्राण
उद्गायत्ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मना
विध्यत् स यथाश्मानमृत्वा लोष्टो विध्वंसेतैवं हैव विध्वंसमाना
विष्वञ्चो विनेशुरिति । छान्दोग्येऽपि प्राणादिष्वेवमेव पाप्मवेध-
मुक्त्वाऽऽसन्येन तथेत्युच्यते । एतावान् परं विशेषो वाजसनेयि-
नाद्गानकर्तृत्वं सामगानामुद्गीथत्वेनोपास्यत्वमुच्यते वाक्प्राणा-
दीनामिति । अत्र देहसम्बन्धित्वगानकर्तृत्वयोरुपास्यत्वस्य चा-
विशेषेऽपि वागादिषु पाप्मवेध आसन्यप्राणे कुतो नेति भवति

---

* प्रजापत्या इति ख ।

† अगात् इति ख ।

‡ स एव स पाप्मेति ख ।

जिज्ञासा। न चासन्योपासनाया विधेयत्वात् तत्स्तुत्यर्थमन्येषु पाप्मवेध उच्यतेऽस्मिन्नेवेति वाच्यं। न हि प्रयोजनायासत्त्वमप्यर्थं बोधयति श्रुतिरिति वक्तुं शक्यं प्रमाणत्वव्याहतिप्रसङ्गात्। एतच्च प्रतारकाले सर्वत्रापि तच्छङ्कया तदुक्ते कोऽपि न प्रवर्त्तेतापि। साक्षात्क्रियार्थत्वाभावेऽपि नासन्निरूपकत्वमर्थवादानां। वस्तुतस्तु यदेव विद्यया करोति श्रद्धयोपनिषदा वा तदेव वीर्य्यवत्तरं भवतीति श्रुतेः।

ज्ञात्वा ज्ञात्वा च कर्माणि जनोऽयमनुतिष्ठति।

विदुषः कर्मसिद्धिः स्यात् तथा नाविदुषो भवेत्॥

इत्यादिवाक्यैर्य एवं वेदेति वाक्यैरर्थवादोक्तस्वरूपं ज्ञात्वा कर्मकरणे पूर्णं फलमन्यथा न इत्यर्थवादानां फलोपकार्यङ्गनिरूपकत्वात्तानर्थकमतः उक्तोर्थे हेतुं न पश्याम इति प्राप्ते समेवाह वेधादीति। वाक्यशाखादिषु यः पाप्मवेध आदिपदात् दुष्टविषयसम्बन्धश्च तत्र हेतुरर्थभेदः। अर्थो भगवान् तस्माद्भेदादित्यर्थः। आसन्यस्तु य एवायं मुख्यः प्राणस्तमुद्गीथमुपासीतेति छान्दोग्ये उपाख्यत्वेनोक्तः। सर्ववेदान्तप्रत्ययमिति न्यायात् वेदान्तेषूपास्यं ब्रह्मातिरिक्तं नोच्यत इत्यासन्योऽपि ब्रह्माभिन्नोऽत एवापहतपाप्मा ह्येषइति सामगैः पठ्यते। अतस्तत्र न पाप्मवेध इति भाव। ब्रह्मणः स्वतन्त्रपुरुषार्थत्वज्ञापनायार्थपदेनोक्तिः। एतेन विभूतिरूपेऽपि यद्येवं तत्र मूलभूतब्रह्मणि निर्दोषत्वे * किं वाच्यमिति ज्ञापितं। अथवाऽर्थः प्रयोजनं विषय इति यावत्। तद्भेदादित्यर्थः।

---

* निर्दोषत्वमिति ख।

अत्रेदमाकूतं। देवा हि स्वस्यासुरजयाय गानार्थं वागा-
दीनूचुस्त्वं न उद्गायेति। गानानन्तरं यो वाचि भोगस्तं* देवेभ्य
आगायदित्युच्यते। एवमेव प्राणादिष्वपि स्वस्वभोगं देवेभ्य
आगायदिति। एवं सति देवार्थमेवैतद्गानं न तु भगवदर्थं।
यद्यप्यासन्येऽप्येवमुच्यते तेभ्य एष प्राण उदगायदिति तथापि
यथा वागादिषु स्वनिष्ठभोगं देवेभ्य आगायदित्युक्तं तथा नासन्ये।
तेनोच्यमानैर्ब्रह्मात्मकत्वेनासुरजयहेतुर्भगवत्सम्बन्ध एवेति ध्यात्वा
तथैवागायदासन्य इति ज्ञायते। अतएवान्यत्र वेष उक्तोऽत्र
तत्करणेच्छायामप्यसुराणां नाम उक्तः। अन्ते च भवत्यात्मना
पराऽस्य द्विषन्† भ्रातृव्यो भवति य एवं वेदेति पठ्यते। तेन पर-
ब्रह्म निर्दोषमिति किमु वाच्यं। अत्र तद्विभूतिरूपासन्यस्योक्त-
रूपतां यो वेत्ति सोऽपि गुणयुक्तो दोषरहितश्च भवतीति कैमुतिक-
न्यायः सूचितो भवति। एतेन लोके दोषत्वेन ये धर्माः प्रतीयन्ते
तएव धर्मा भगवति निरूप्यमाणा‡ न दोषत्वेन ज्ञेयाः किन्तु
गुणत्वेनैव वस्तुत एव तथात्वादिति भावो ज्ञाप्यते।

एवं भगवत्सम्बन्धाभावे दोषसम्बन्धमुक्त्वा तथा सति गुण-
हानिश्च वदंस्तत्र विशेषमाह।

हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्द-
स्तुत्युपगानवत्तदुक्तं ॥ २६ ॥

तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति

---

* भोगस्ते देवेभ्य इति ख।

† पराऽस्य द्विषन् इति ख।

‡ निरूप्यमाणा दोषत्वेन इति ख।

तदनन्तरं साम्यमुपैति इत्याथर्वणिकैः पठ्यते। परमपदेन ब्रह्मोच्यते। तथा च सकार्याविद्यारहितः परममुपैति तदनन्तरं साम्यमुपैतीति योजना। तत्रेदं विचार्यते। साम्यं हि समानजातीयधर्मवत्त्वं *। तच्च कतिपयधर्मैरशेषतत्त्विष्ठधर्मैर्वा भवति। तत्राद्यः पक्षो ब्रह्मणा समं न सम्भवति न तत्समश्चाभ्यधिकश्च दृश्यत इति श्रुतिविरोधादत आद्य एव पक्षोऽनुसर्त्तव्यः। तत्र कैर्धर्मैः साम्यमिष्यत इत्याकाङ्क्षायामाह। ज्ञानादिति। ब्रह्मणः सकाशाद्विभागो जीवस्य हानिशब्देनोच्यते। तथा च तस्यां सत्यां ये धर्मा जीवनिष्ठा आनन्दांशैश्वर्यादयो भगवदिच्छया तिरोहितास्ते ब्रह्मसम्बन्धे सति पुनराविर्भूता इति तैरेव तथेत्यर्थः। भगवदानन्दादीनां † पूर्णत्वाज्जीवानन्दादीनामल्पत्वात् नात्रैव समैर्धर्मैः ‡ कृत्वा ब्रह्मसाम्य जीव उपचर्य्यते साम्यमुपैतीति। वस्तुतस्तु नैतैरपि धर्मैः साम्यमिति भावः। अतएव न तत्सम इति श्रुतिरविरुद्धा। अतएव सूत्रकृता साम्यमुपैतीति साम्योपायनशब्दमात्रं न तु साम्यपदार्थः स्वारसिकोऽस्यास्तीति भावप्रकटनाय शब्दशब्द उक्तः। ननु तैरेव धर्मैः साम्यं नेतरैरित्यत्र को हेतुरित्याकाङ्क्षायामाह। उपायनशब्दशेषत्वादिति। परममुपैतीति य उपायनशब्दस्तच्छेषत्वात् साम्योपायनस्येत्यर्थः। ब्रह्मसम्बन्धहेतुकत्वादानन्दांशाद्याविर्भावस्य तदैव साम्योपायनकथनात्तैरेव धर्मैः साम्यमभिप्रेतमिति भावः। नन्वानन्दादीनां ब्रह्मधर्मत्वात् तैस्तत्साम्यकथनं तदभेदमेव

* धर्मवत्त्वमिति ख'।

† भगवदानन्दादीनामिति ख'।

‡ सम धर्मैः इति ख'।

गमयतीत्याशङ्का तद्धर्मवत्त्वमात्रस्य न तदभेदसाधकत्वमित्यत्र दृष्टान्तमाह। कुशेत्यादि। कुशा औदुम्बर्यः समिधस्ता अग्निष्टोमादियागेषु प्रस्तोत्रा स्थाप्यन्ते*। तदा तत्सम्बन्धि यच्छन्दः स्तुत्युपगानन्तद्वदित्यर्थः। तत्राभित्वा शूर†नोनुमो दुग्धा इव धेनव इत्यृचि ये वर्णास्तेषामप एवोपसंहृत्य भकारेणैव‡ गानं क्रियते। न हि तदापिकवर्णधर्माणामत्रामुपसंहारोऽस्तीति तद्गात्मकत्वं भकारस्य§ सम्भवति। एवं प्रकृतेऽपि ब्रह्मधर्मप्राकट्येन|| न तदात्मकत्वं जीवस्य सम्भवति। ननु तत्त्वमस्यादिवाक्यैरत्राभेदबोधनादस्तु तथेति चेत् तत्राह। तदुक्तमिति। जीवब्रह्माभेदबोधनतात्पर्यमुक्तमित्यर्थः। तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवदिति सूत्रेणेति शेषः।

अपि च। श्रुतौ ब्रह्मोपायनस्य¶ साध्योपायनहेतुत्वोक्त्या तदनुपायनस्य साध्यानुपायने हेतुत्वमिति ज्ञाप्यते। तथा च पराभिध्यानात् तु तिरोहितं ततो ह्यस्य बन्धविपर्ययाविति सूत्रे जीवस्य ब्रह्मांशत्वेनानन्दैश्वर्यादिब्रह्मधर्मवत्त्वात् ब्रह्मणः सकाशाद्विभागे सति तदिच्छया तद्धर्मतिरोधानस्य संसारित्वे** हेतुत्वमुक्तं यत्तदपि तदुक्तमित्यनेन ज्ञाप्यत इति न विरु-

* स्थाप्यते इति ख।
† पूर इति ख।
‡ भकारेणैवेति ख।
§ भकारस्येति ख।
|| ब्रह्मधर्मप्राकट्ये न इति ख।
¶ ब्रह्मोपायनस्येति ख
** संसारित्वहेतुत्वमिति ख।

संयं। यथान्यशाखोक्तधर्मा अन्यैकस्यां विद्यायामुपसंह्रियन्त एवं ब्रह्मनिष्ठा धर्मा जीवेऽप्येतया श्रुत्या बोध्यन्त इत्येतावत् साम्यमस्तीत्युपसंहारप्रकरण एतस्य निरूपणं कृतं।

साम्पराये तर्त्तव्याभावात् तथा ह्यन्ये ॥ २७ ॥

वाजसनेयिशाखायां स एष नेति नेतीत्यात्मेत्युपक्रम्य न व्यथत इत्यन्तेन ब्रह्मस्वरूपमुक्ता यत एतादृग्ब्रह्मातस्तद्विदपि विवक्षितस्य इत्यभिप्रायेणाग्रे पठ्यते* एतः पापमकरवमतः कल्याणमकरवमित्युभे उभे ह्येष एते तरत्यमृत इत्यादिना। एष नित्यो महिमा ब्राह्मणस्येत्यृचा च ब्रह्मविदो माहात्म्यमुक्ता पठ्यते तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः श्रद्धावित्तो भूत्वात्मन्येवात्मानं पश्येत् सर्वमेनं पश्यति सर्वोऽस्यात्मा भवति सर्वस्यात्मा भवति सर्वं पाप्मानं तरति नैनं पाप्मा तरतीत्याद्युक्ता अग्रे पठ्यते य एवं वेदेति। अत्र हि पापतरणादिरूपं ब्रह्मज्ञानमाहात्म्यमुच्यते ज्ञानस्य संसारमुक्तिहेतुत्वात्। अथर्वणोपनिषदादिषु तु भगवद्भक्तेर्मुक्तिहेतुत्वमुच्यते। परं यद्वैनयोधारणीतुरपक्रम्य भजति योऽग्रतो † भवतीति। यद्योऽपि मुक्तो भवति संसृतेरिति। एतद्विषयव्यवस्था तु पुरैवोक्तेति भावोऽध्यते। एतावान् परं सन्देहो य एवं वेद स पाप्मानं तरतीति वचनात् ज्ञानदशायामपि पापक्षयं ज्ञानमन्यथा तरणासम्भवात्। एवं सति भक्तिदशायामप्येवमेव न वेति भवति संशयः। तत्र ज्ञानविशेषेण पापनाशश्रवणात् मुक्तिपूर्वकाले पाप-

* बृहदा० ४ अ० ४ ब्रा० २३ म०।

† श्वे० ३ अ० १५ म०।

नाशावश्यम्भावादेकत्र निर्णीतः शास्त्रार्थोऽपरत्रापि तथेति न्यायेन भक्त्या पापनाशादत्रापि तथैवेति प्राप्त आह। सम्पराय इत्यादि। सम्परायः परलोकस्तस्मिन् प्राप्तव्ये सतीत्यर्थः। अथवा परः पुरुषोत्तमस्तस्यायो ज्ञानं। तथाच सम्यग्भूतं पुरुषोत्तमज्ञानं येन स सम्परायो भक्तिमार्ग इति यावत्। अथवा परे पुरुषोत्तमे अयनं अयोगमनं प्रवेश इति यावत्। तथाच सम्यक् परायो येन स तथा भक्तिमार्ग इत्यर्थः। ज्ञानमार्गेऽक्षरप्राप्ता भक्तिमार्गे पुरुषोत्तमप्राप्तय तस्मादिविशेषमच ज्ञापयितुमेवं कथनमतो भक्तेः पूर्व्वमेव पापनाशो युक्त इति भावः। ब्रह्मभूतस्य भक्तिलाभानन्तरं भक्त्या मामभिजानातीति भगवद्वाक्यात् पुरुषोत्तमस्वरूपज्ञानस्य भक्त्यैकसाध्यत्वात् तथा। एवं सति

मुक्तानामपि सिद्धानां नारायणपरायणः।
सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने॥

मुक्तोपसृप्यव्यपदेशात्।

जन्मान्तरसहस्रेषु तपोध्यानसमाधिभिः।
नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते॥
जन्मान्तरसहस्रेषु समाराध्य वृषध्वजं।
वैष्णवत्वं लभेत् कश्चित् सर्व्वपापक्षयादिह॥

इत्यादिवाक्यैः पापनाशानन्तरमेव भक्तिसम्भवाद्भक्तस्य तत्त्व्यपायादेरभावात्* ज्ञानमार्गीयतुल्यतेत्यर्थः। ननु य एवं वेदेति सामान्यवचनात् पुरुषोत्तमविदोऽप्येवमेवेति चेत् तत्राह।

* अभावत्वादिति ख।

तथाह्यन्ये। तथा ज्ञानानन्तरमपि पापवन्तोऽन्ये * भक्तिमार्गीयेभ्योऽन्य इत्यर्थः। उक्तवचनरूपोपपत्तिर्हिशब्देन ज्ञाप्यते। ननु भक्तिमार्गीयाणामपि गोपस्त्रीणां

दुःसहप्रेष्ठविरहतीव्रतापधुताशुभाः।
ध्यानप्राप्ताच्युताश्लेषनिर्वृत्या क्षीणमङ्गलाः॥

इति वचनेन दुष्कृतसुकृतयोरपि हानिश्रवणात् पूर्वोक्तवचनैर्विरोध इत्याशङ्कायामुत्तरं पठति।

छन्दत उभयाविरोधात्॥ २८॥

छन्द इच्छा। तथाच भक्तिमार्गीयाणामपि पूर्वं पापनाशो यः स भगवदिच्छाविशेषतोऽतो † भक्तेः पूर्वमेव पापनाशनिरूपकतन्नाशनिरूपकवचनयोरविरोधाद्धेतोर्भक्ते ‡ पूर्वमेव पापनाश आवश्यक इत्यर्थः। एवं सति भक्तेः पूर्वमेव तन्नाश औत्सर्गिकः स क्वचिद्विशेषेच्छयापनोद्यत इति भावो ज्ञापितो भवति। अथेच्छाविशेषे वक्तव्यवक्तत्वेऽपि § किञ्चिदुच्यते ||। चिक्रीडिषितलीलामध्यपातिभक्ता न सोपधिस्नेहवत्यो न सगुणविषयका न वा सुकृतादियुक्ता इति ज्ञापयितुं कतिपयगोपीस्तद्विपरीतधर्मयुक्ताः कृत्वा तस्यां दशायां स्वप्राप्तौ प्रतिबन्धं ¶ पाप-

---

* पापवतोऽन्ये इति खं।
† अत इति खपुस्तके नास्ति।
‡ भक्तः इति खं।
§ वक्तव्ये वहुत्वेऽपि इति ख।
|| किञ्चिदिति खपुस्तके नास्ति।
¶ प्रतिबन्धं इति खं।

यित्वा स्वयमेव तां दयां नाशयित्वा स्वलीलामध्यपातिनीः कृतवानिति । न ह्येतावता सार्वदिकएवायं भावो भवति । न हि मन्त्रप्रतिबद्धशक्तिरग्निरदाहक इति तत्स्वभावत्वमेव* तस्य सार्वदिकमिति वक्तुं शक्यं । एतच्च श्रीभागवतदशमस्कन्धविवृतौ प्रपञ्चितमस्माभिः ।

गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः ॥ २९ ॥

ननु सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायां परमे व्योमन्निति । तमेवं विद्वानमृत इह भवति नान्यः पन्था विद्यतेऽयनायेत्यादिश्रुतिभिरक्षररूपब्रह्मज्ञाने सत्येव मोक्ष इत्युच्यते । यमेवैष वृणुते तेन लभ्य इति श्रुत्या चात्मीयत्वेनाङ्गीकारात्मकवरणस्य भक्तिमार्गीयत्वात् तस्मिन् सति भक्तिमार्गे प्रवेशाद्भक्त्यैव स इत्युच्यते । किञ्च । भक्त्या मामभिजानातीत्युक्त्वा ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरमिति भगवतोक्तमिति भक्तिमार्गेऽपि पुरुषोत्तमज्ञानेनैव मोक्ष उच्यते । ज्ञानमार्गे त्वक्षरज्ञानेनेति विशेषः ।

तस्मात् मद्भक्तियुक्तस्य योगिनो वै मदात्मनः ।
न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह ।

इति वचनेन भक्तिमार्गीयस्य ज्ञाननैरपेक्ष्यमप्युच्यते† । तथा चैवं मिथः श्रुत्योः‡ विरोधान्नैकतरनिर्धारः सम्भवति । न च ज्ञानेनैव मोक्ष उभयत्रापि तयोक्तेः । ज्ञाननैरपेक्ष्योक्तिस्तु भक्तिस्तुत्य-

---

* तत्स्वभाव इति नं ।

† नैरपेक्ष्यं इति नं ।

‡ श्रुती. स्मृत्योरिति नं ।

भिप्रायेति वाच्यं। विषयभेदेन ज्ञानभेदान्मुक्तिसाधनं कतमज्ज्ञानमित्यनिश्चयात्। न च श्रौतत्वाविशेषात् समुच्चय इति वाच्यं। ज्ञानिनोऽक्षरे भक्तस्य पुरुषोत्तमे लयात् समुच्चयासम्भवात्। तर्ह्येवं विरोधाभावादुपपन्नं सर्व्वमिति चेत् न। पूर्व्वं ज्ञानमार्गीयज्ञानवतः पश्चाद्भक्तिमार्गीयज्ञानवतो लयस्थाननिर्द्धारासम्भवात्।

अपरञ्च। ततो मां तत्त्वतो ज्ञात्वेतिवचनाद्भक्तिमार्गे तत्त्वतो भगवत्ज्ञानमेव प्रवेशसाधनमिति मन्तव्यं। तथा च

मत्कामा रमणं जारं मत्स्वरूपाविदोऽबलाः।
ब्रह्म मां परमं प्रापुः सङ्गाच्छतसहस्रशः॥

इति वाक्यात् ज्ञानमार्गीयभक्तिमार्गीयज्ञानरहितानामपि भगवत्प्राप्तेस्तत्साधनत्वनिरूपकश्रुतिविरोधः। तथाच क्वचित् ज्ञानं मुक्तिसाधनत्वेनोच्यते क्वचिद्भक्तिः क्वचिद्नोभयमपीत्येकतरसाधनानिश्चयान्मुक्तिसाधने मुमुक्षोः प्रवृत्त्यसम्भव इति प्राप्त आह। गतेरर्थवत्त्वमित्यादि। गतेर्ज्ञानस्यार्थवत्त्वं फलजनकत्वमुभयथा मर्य्यादापुष्टिभेदेनेत्यर्थः।

अत्रायमाशयः। एष उ एव साधु कर्म्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषतीत्यादिश्रुतिभ्यो भगवान् सृष्टिपूर्व्वकाल एवैतस्मै जीवायैतत्कर्म्म कारयित्वैतत् फलं दास्य इति विचारितवानिति तथैव भवति। तन्नोक्तरीत्या मुक्तिसाधनाननुगमे हेतुरवश्यं वाच्य.। एवं सति कृतिसाध्यं साधनं ज्ञानभक्तिरूपं शास्त्रेण बोध्यते। ताभ्यां विहिताभ्यां मुक्तिर्मर्य्यादा* तद्रहितानामपि स्वस्वरूप-

* ताभ्यां मुक्तिर्मर्य्यादेति क्व।

बलेन स्वप्रापणं पुष्टिरित्युच्यते। तथाच यं जीवं यस्मिन्मार्गेऽङ्गीकृतवांस्तं जीवं तत्र प्रवर्त्तयित्वा तत्फलं ददातीति सर्व्वं सुस्थं। अतएव पुष्टिमार्गेऽङ्गीकृतस्य ज्ञानादिनैरपेक्ष्यं मर्य्यादायामङ्गीकृतस्य तदपेक्षित्वञ्च युक्तमेवेति भावः। अत्र साधकत्वेन विपक्षे बाधमाह *। अन्यथा हि विरोध इति। अन्यथा मर्य्यादापुष्टिभेदेन व्यवस्थाया अकरणे विरोधापत्तेस्तथेत्यर्थः। विरोधस्तु पूर्व्वपक्षग्रन्थ उपपादितः। एतेनैव ननु श्रवणादिरूपा प्रेमरूपा च भक्तिरविशेषेण पापक्षय एवेत्यत्र कश्चिद्विशेषोऽस्ति तथाधुनिकानामपि भक्तानां दुःखदर्शनाच्छ्रवणादेः पापनाशकत्वश्रवणाच्चाविशेषपक्षस्यैव सङ्गतः। अथ श्रवणादिरूपा पापे सत्यपि भवति प्रेमरूपा तु तन्नाश एवेति विशेषो वाच्यः। सोऽपि † प्रेमवतामप्यक्रूरादीनां मणिप्रसङ्गे भगवता समं व्यापद्यक्षतिश्रवणान्न साधीयानित्यपि शङ्का निरस्ता वेदितव्या। तथाहि मर्य्यादापुष्टिभेदेनाङ्गीकारे वैलक्षण्यान्मर्य्यादायामङ्गीकृतानां मुमुक्षयैव श्रवणादौ प्रवृत्तिः‡ साधनत्वेनैव भगवति प्रेमापि न तु निरुपधिः। कदाचिदनुस्वभावेन मुक्तीच्छानिवृत्तावपि तद्धर्मैः साधनमार्गीयत्वादनिच्छतो मे गतिमण्वीं § प्रयुङ्क्त इति वाक्यादन्ते मुक्तिरेव भवित्री। अस्मिन्मार्गे श्रवणादिभिः पापक्षये प्रेमोत्पत्तिस्ततो मुक्तिः। पुष्टिमार्गेऽङ्गीकृतेस्त्वनुग्रहसाध्य-

---

* बाधकमाहेति ख।

† साधेति ख।

‡ प्रवृत्तिरिति ख।

§ गतिमण्वीमिति ख।

त्वात् तत्र च पापादेरप्रतिबन्धकत्वात् श्रवणादिरूपा प्रेमरूपा च युगपत्पौर्वापर्य्येण वा वैपरीत्येन वा भवत्येव । अत्र श्रवणादिकमपि फलरूपमेव स्नेहेनैव क्रियमाणत्वात् न विधिविषयः । न ह्यविद्यादिसुतरामन्तरूपभजनानन्दात्यन्तरायरूपाभ्रङ्गयाविरलविविधमहातरपहनानां दहने लोलुपस्यानुपहानलस्य * तदास्मरालिकपापतूलं प्रतिबन्धकमिति वक्तुं शक्यं । तदुक्तं श्रीभागवते

स्वपादमूलं भजतः प्रियस्य
त्यक्तान्यभावस्य हरिः परेशः † ।
विकर्म्म यच्चोत्पतितं कथञ्चित्
धुनोति सर्व्वं हृदि सन्निविष्टः ॥ इति

विकर्म्म मातनं तद्दुःखदमिति स्वयञ्च हरित्वेन दुःखहर्त्तेति धुनोति । उक्तविशेषणविशिष्टस्य स्वतो विकर्म्मोत्पत्त्यसम्भवात् ‡ सांसर्गिकं सञ्जातमिति न तु मया कृतमितिवद्यत् कृतं विकर्म्म तत् कथञ्चिदुत्पतितमित्युच्यते । त्यक्तान्यभावत्वेन भगवत्त्रिशाप्यासङ्गेनेन्द्रप्रस्थपाण्डवराजयज्ञहदागमनाद्यभानं वा यत्तोमदपि भक्तिविकर्म्मोत्तावत्तविज्ञापनाय वा कथञ्चिदित्युक्तवान् । तेन तर्कितं विकर्म्मोपाप्यभिप्रेतमिति § ज्ञायते । एतादृशस्यापि यदि विकर्म्म भवेत् तदा तन्निवृत्त्यर्थं न तेनान्यत्कर्त्तव्यं ।

---

* चरणदानबन्धेति क ।
† भवेत इति ख ।
‡ स्नोऽनिकर्मोत्पत्त्यसम्भवादिति क ।
§ क्वाभिप्रेतमिति ग ।

भगवानेव हृदि निविश्य धुनोति यत इति । कदाचित् स्वभक्ति
बलस्फूर्त्या सदोषमपि जनं कृतार्थीकरिष्यामीत्यङ्गीकुर्य्यात् चेत्
भक्तस्तदैव* तत्हृदिस्थएव तत्संसर्गजं दोषमस्यैतदङ्गीकारेण
तद्दोषमपि धुनोतीति सर्व्वपदेनोच्यते । चिरकालभोग्यमपि
तत्क्षणेनैव नाशयति । तन्नाशने कालादेरप्रतिबन्धकत्वमित्यपि
ज्ञापयितुं यस्य कालादेरीशत्वमुक्तं । यत्र भजनादिष्वविशेषा-
न्तानां स्पष्टएव विकर्मणि सत्यपि सम्भव इति ।

उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥ ३० ॥

ननु मुक्तेरेव सर्व्वत्र फलत्वमुच्यते । मुक्तश्चैतत् संसृतिर्दुःखा-
त्मकत्वात् । तन्निवृत्तिः सर्व्वेषामिष्टत्वात् । पुष्टिमार्गीयभक्तानान्तु
तदनपेक्षितमुच्यते । तदुक्तमपवर्गोपमितत्वष्टादश्यार्थमन्नस्वरूप-
मुक्त्वा यद्यते परं ब्रह्मैतद्यो धारयतीत्यादिरन्ते सोऽमृतो भवती-
त्यादि । एतदग्रे किं तद्रूपं किं रसनं कथं चैतद्भजनमित्यादि
प्रश्नोत्तरं यद्यते । भक्तिरहस्यभजनं तदिहामुत्रोपाधिनैरास्येनैवा-
मुष्यात्मनः कल्पनमेतदेव नैष्कर्म्यमिति । एतदत्र विचार्य्यते । मन्त्रा-
र्हत्तितदधिष्ठातृरूपध्यानादेरमृतत्वं † फलमुच्यते । भजनस्वरू-
पञ्च यावत् फलनैरास्येन भगवत्यात्मनः कल्पनमित्युच्यते । न च
फलनैरास्येन भजनेऽप्यन्ते मुक्तिरेव भविष्यतीति वाच्यं । तं यथा-
यथोपासते तथैव भवति तद्धैतान् भूत्वावतीति श्रुतेर्मुक्ति-
साधनत्वेन ‡ ज्ञात्वा भजतः सैव फलं सारूप्यस्यैव स्वतन्त्रपुरुषा-

---

* तदैव तत्हृदिस्थस्तत्संसर्गजं इति ग ।

† अमृतत्वं फलमिति च ।

‡ मुक्तिसाधनमिति च ।

र्थत्वमनुभवन् यो भजते तस्य तदेव* फलमिति यतो निर्णयः सम्पद्यते। ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहमिति भगवद्वाक्याच्च। अतएव रहस्यभजनं लक्ष्यमुक्तं। तथा च† श्रौतत्वभगवत्सम्बन्धित्वयोरविशेषात् कतमो गरीयानिति संशये गूढाभिसन्धिः पठति। मुमुक्षोः सकाशाद्रहस्यभजनकर्त्तैवोपपन्नः उपपत्तियुक्तः। तमेवोद्घाटयति। तस्यचरणोपलब्धेरिति। तस्यचरणौ भगवत्स्वरूपात्मको योऽर्थः एतन्मयपदार्थरूपस्तदुपलब्धेः स्वाधीनत्वेन तत्प्राप्तेरित्यर्थः। यद्यपि पुरुषोत्तमे प्रविष्टे तदानन्दानुभवो भवति तथापि न प्रभोस्तदधीनत्वं भक्तितिरोभावात् प्रत्युत वैपरीत्यं भजनानन्दस्य तत्र व्याधित्वात्तु मुक्तिं ददाति कर्हिचित् स्म न भक्तियोगं। दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः। नारायणपरा इत्युपक्रम्य स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिन इत्यादिवाक्यैरध्यवसीयते। अतएव ‡ सामीप्यवाच्युपसर्ग उक्तः। तेन दासीत्वेन दासत्वेन स्नेहायां सुहृत्त्वेन प्रभुनिकटे स्थितिरुक्ता भवति। न च महत्पदार्थस्वरूपाज्ञानादल्पएवानन्दे यथा सर्वाधिश्वं मन्वानः§ पूर्व्वोक्तं न वाञ्छति तथाऽयमपीति वाच्यं। दीयमानानामर्थानां स्वरूपाज्ञानासम्भवात् अनुभवविषयीक्रियमाणत्वस्यैवात्र दीयमानपदार्थत्वात्। तदज्ञाने स्वर्गादिषु तुल्यदर्शित्वासम्भवश्च। मुक्तिं ददाति कर्हिचित् स्म न भक्ति-

---

* तदेवेति ख।

† तथात्वमिति ख।

‡ अतएवसामीप्येति ग।

§ मन्वान इति ग।

ब्रह्म संपद्यते ब्रह्म संपद्यत इति श्रुत्या कीर्त्तनमात्रस्य तथात्वमुच्यते। तथाच प्रत्येकपक्ष एव सर्व्वासां श्रुतीनामविरोधः स्यात्। एवं सति परब्रह्मैतयो धारयतीत्यादिषु सोऽमृतो भवतीति पदं प्रत्येकं सम्बध्यत इति ज्ञेयं। ननु यथा दण्डादीनां प्रत्येकं घटहेतुत्वोक्तावपि नैकस्यैव तज्जनकत्वमेवमत्राप्येकैकस्य चिन्तनादेस्तथात्वोक्तावपि फलसाधकत्वं समुदितानामेव तेषामिति चेत्। नैवं। योऽर्थो यत्प्रमाणैकसमधिगम्यः स तेन प्रमाणेन यथा सिद्ध्यति * तथा मन्तव्यः। दण्डादेस्तथात्वं प्रत्यक्षेण गृह्यत इति तत्र तथास्तु। प्रकृते तु तेषां तथात्वमलौकिकशब्दैकसमधिगम्यं श्रुतिष्वेव। न चोक्तन्यायः स्मृतिष्वपि तात्पर्य्यनिर्णायको भवतीति वाच्यं। अलौकिकेऽर्थे † लौकिकस्यासामर्थ्यात्। अन्यथा ब्रह्मणा मनसैव प्रजाजनने ‡ निषेकादिक्रमपि कल्प्येत। स्मृतिरपि

केवलेन हि भावेन गोप्यो गावः खगा मृगाः।
येऽन्ये मूढधियो नागाः सिद्धा मामीयुरञ्जसा॥

एतावान् सांख्ययोगाभ्यामित्युपक्रम्यान्ते नारायणस्तुतिरित्यादिरूपैवमेवाह। इममेवार्थं हृदि कृत्वाह सूत्रकारः शब्दानुमानाभ्यामिति श्रुतिस्मृतिभ्यामित्यर्थः। ते चोक्ते। एतेन सूत्रकारस्यान्योऽप्यनुभवोऽस्तीति भाति। यत्रोक्तसाधनस्तोम§-

---

* प्रमाणेन सिद्ध्यति इति ख।

† अलौकिकस्यासामर्थ्यादिति ख।

‡ प्रजनने इति ख।

§ स्तोम इति ख।

सम्पत्तिरेकस्मिन् भक्तेऽस्ति तत्रैकेनैव मुक्ताविततरसाधनत्व-बोधकश्रुतिविरोधात् श्रवणकीर्त्तनस्मरणानां मुक्त्यव्यवहित-पूर्व्वक्षणे युगपदपि सम्भवादन्यथासिद्धिसम्भवे विनिगमका-भावादेकेनैव मुक्तिरिति न नियमोऽतः प्रत्येकसाधकत्वबोधि-कानां सर्व्वासां श्रुतीनां मिथोविरोधः तर्ह्येकत्र तथात्वे सर्व्वे-चैव तथास्त्वित्याशङ्क्य तत्र साधकमाह। सम्बन्धानुमानाभ्यामिति पूर्व्ववत्। तत्र प्रत्येकमपि मुक्तिहेतुत्वमुच्यत इति न तथेत्यर्थः। यत्र प्रत्येकमपि तथात्वं तत्र किमुवक्तव्यं समुदितानां तथात्व इति भावः। तेन त्रिष्टः प्रयोगोऽयमिति ज्ञेयं।

यावदधिकारमवस्थितिराधिकारि-
काणां॥ ३२॥

पूर्व्वं मुमुक्षुभिः साधनत्वेन क्रियमाणानां भगवद्धर्म्माणां मुक्तिसाधनप्रकारो विचारितः। अधुना तु भगवान् स्वविचा-रितकार्य्यं लौकिकैरशक्यं ज्ञात्वा स्वैश्वर्य्यादिकं दत्वा येन जीवेन तत्कारयति स जीवस्तैर्द्धर्म्मैर्मुक्तो भवति न वेति विचा-र्य्यते। तत्र जीवकृतभगवद्विषयकधर्म्माणां यत्र तत्साधकत्वं तत्र भगवदीयानां धर्म्माणां तत्साधकत्वं सुतरामेव तेषां स्वरूप-साध्यत्वेनाविधेयत्वात् तत्साधनेष्वप्रवेशोऽपीति सन्देहे निर्णय माह। यावदित्यादि। यस्मिन् जीवे यत्कार्य्यसाधनार्थमधि-कारो भगवता दत्तस्तत्कार्य्यसाधनक्षमास्तस्मिन्ये स्वधर्म्मा भग-वता स्थापितास्त आधिकारिका इत्युच्यन्ते। तत्कार्य्यसम्पत्तिरेव तदधिकारप्रयोजनमिति तावदेव तेषां तस्मिंस्थितिरित्यर्थः। एवं सति तत्सम्पत्तौ सोऽपि निवर्त्तत इति तत्सम्बन्धिनो

धर्मा अपि निवर्त्तते-* इति मुक्तिपर्यन्तं न तेषां व्यापारसम्भवो भगवता तथैव विचारितत्वात्। मुक्तिस्तु भक्त्यैवेति भावः। यच्च

ब्रह्मणा सह ते सर्व्वे संप्राप्ते प्रतिसञ्चरे।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदं॥

इति वाक्यं तत्त्वाकल्पान्तं येषामधिकारः सप्तर्षिप्रभृतीनां तद्विषयकमिति ज्ञेयं। अन्यथा भगवद्दत्ताधिकारसामर्थ्यस्य भरतस्य स्वाधिकारसमाप्तौ मुक्तिं न वदेत्। कृतात्मान इति पदात् तेषामपि भगवति कृतान्तःकरणानामेव परस्य भगवतः परपदे नापि वैकुण्ठे प्रवेश उच्यते न त्वाधिकारिकगुणैः।

अक्षरधियान्त्ववरोधः सामान्यतद्भावाभ्या-
मौपसदवत्तदुक्तं॥ ३३॥

ननूक्तायर्थेऽौपनिषदाकोर्भगवद्धर्माणां मुक्तिसाधनत्वमुच्यते। श्रुत्यन्तरेषु तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय। ज्ञानादेव तु कैवल्य तरति शोकमात्मवित्। ब्रह्म वेद ब्रह्मैव भवतीत्यादिषु ज्ञानस्यैव मुक्तिसाधनत्वमुच्यते। श्रुतित्वाविशेषादुभयोस्तथात्वे कारणवैजात्ये कार्य्यवैजात्यस्यावश्यकत्वान्मुक्ती च तद्वचनाद्भक्त्या मामभिजानातीति वाक्याद्भक्तौ ज्ञानस्यापि सम्भवात् ज्ञानेनैव मुक्तिरिति पूर्व्वपक्षे ज्ञानसाधनत्वनिरूपकश्रुतितात्पर्य्यं निरूपयन् पुरुषोत्तमप्राप्तेरेव मुक्तिपदवाच्यत्वात् तद्भजनस्यैव तत्प्रापकत्वमिति हृदि कृत्वाह अक्षरधियामित्यादि। तु शब्दः पूर्व्वपक्षनिरासे। वाजसनेयके श्रूयते। एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमित्यादि। तथाथर्व्वणे

* निवर्त्तन्त इति पा।

च। अथ परा यया तदक्षरमधिगम्यत इति। तेन ज्ञानमार्गेऽक्षर-विषयकाण्येव ज्ञानानि निरूप्यन्ते पुरुषोत्तमविषयकाणि नेति निश्चीयते। ब्रह्मविदाप्नोति परमिति श्रुतावक्षरब्रह्मविदोऽक्षरात् परस्य प्राप्तिरुच्यते। अक्षरादपि चोत्तम इति भगवद्-वाक्याच्चाक्षरातीतः पुरुषोत्तमः। भक्त्या मामभिजानातीति वाक्ये मामितिपदात् पुरुषोत्तमविषयकं ज्ञानमुच्यते न त्वक्षर-विषयकं।

किञ्च। ब्रह्मभूतस्य भक्तिलाभोक्तेस्तस्य चानन्दांशाविर्भा-वात्मकत्वात् तस्य चाविद्यानाशजन्यत्वात् तस्य चाक्षरज्ञान-जन्यत्वात् पूर्व्वकक्षा*विद्यांशमेवाक्षरज्ञानं। एवं सत्यक्षरविष-यिणीनां धियां श्रुतौ मुक्तिसाधनेषु योऽवरोधः प्रवेशनं तपनेति यावत् स सामान्यतद्भावाभ्यां हेतुभ्यां। पुरुषोत्तमसम्बन्धि-सम्बन्धि† मुक्तिरिति सामान्यं। मर्य्यादामार्गेऽङ्गीकृतानां ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति समः सर्व्वेषु भूतेषु मद्भक्तिं लभते परामिति‡ वाक्यात् ब्रह्मभावानन्तरमेव भगवद्भावसम्भ-वात् तेन पुरुषोत्तमे प्रवेशात् तत्र परम्परोपयोगो ब्रह्मभाव-स्तेत्थभाभ्यां हेतुभ्यां तथेत्यर्थः। वस्तुतस्तु पुरुषोत्तमप्राप्तिरेव मुक्तिरिति भाव.।

नन्वक्षरस्याविशिष्टत्वेन तदुपासकानामपि तथात्वात् केषा-ञ्चित्तत्रैव लयः केषाञ्चिद्भक्तिलाभ इति कथमुपपद्यत इत्याशङ्क्य

---

* पूर्व्वकक्षविद्यांश इति ख।

† सम्बन्धीसम्बन्धे इति ख।

‡ पराविति ख।

तत्र हेतुं दृष्टान्तेनाह। औपसदवदिति। उपसदाख्ये कर्मणि। तानूनप्त्रसमाख्यमौपसदं कर्मास्ति। तत्रातिथ्याया ध्रौवा- स्रुचि चमसे वा यदाज्यं चतुरवत्तं पञ्चावत्तं वा समवद्यति तत्ता- नूनप्त्रमित्युच्यते। अनाधृष्टमसीति मन्त्रेण षोडशाप्यृत्विजो यजमानेन सह तानूनप्त्रसमवमृशन्त्यनु मे दीक्षामिति मन्त्रेण यजमानस्तत्समवमृशन्तमृत्विजं कामयेतार्थं यत्र*यज्ञसमृच्छे- दिति तं प्रथममवमर्शयेदिति श्रुतौ कल्पे च। अत्र सर्वेषा- मृत्विजां तानूनप्त्रिलाविशेषेऽपि यस्मिन् स्नेहातिशयेन तदिच्छा तत्रैव तथाकृतिर्नेतरेषु। नहि तत्राविशिष्टेषु कथ- मेवं कृतिरितिपर्य्यनुयोगः सम्भवत्येवमिहापीत्यर्थः।

ननु श्रवणादेर्यथा पुरुषोत्तमसम्बन्धित्वेन तत्प्राप्तिहेतुत्व- मेवमक्षरस्याप्यस्तित्याशङ्का तु निखिलासुरजीवतमःपुञ्जनिरास- केन यदुवंशोदयाचलचूडामणिनैव निरस्तेति न स्वतो वक्तु- मुचितेत्याशयेनाह। तदुक्तमिति। भगवद्गीतास्विति शेषः। तत्र यदक्षरं वेदविदो वदन्तीत्युपक्रम्य स याति परमां गति- मित्यन्तेनाक्षरप्राप्त्युपायमुक्त्वा अनन्यचेताः सततमित्यादिना स्वप्राप्त्यर्थं वैलक्षण्यं चोक्ता भक्त्येकलभ्यत्वं स्वस्य वक्तुं पूर्व्वं चराचरयोः स्वरूपमाह। सहस्रयुगपर्य्यन्तमित्युपक्रम्य प्रभव- न्त्यहरागमे इत्यन्तेन चरस्वरूपमुक्त्वा परस्तस्मात्तु भावोऽन्य इत्युपक्रम्य तद्धाम परमं ममेत्यन्तेनाचरस्वरूपमुक्तं। अत्र पूर्व्वं चरस्वरूपमुक्तमिति परस्तस्मादित्यत्र तदपेक्षयैव परत्वमुच्यते। तच्छब्दस्य पूर्व्वपरामर्शित्वात् तस्यैव पूर्व्वमुक्तत्वादतएवाचर-

---

* यज्ञमिति ख।

व्यावर्त्तकस्तुशब्द उक्तः। एतेन नित्यत्वेन क्षरत्वाभावादक्षरशब्देन जीवएवोच्यते न तु पुरुषोत्तमाधिष्ठानभूतो जीवातीत इति निरस्तं। यं प्राप्य न निवर्त्तन्त इति वाक्याज्जीवे तथात्वासम्भवात् नित्यमुक्तत्वापत्त्या शास्त्रवैफल्यापत्तेश्च। इतएव ज्ञानमार्गिणां तत्प्राप्तिरेव मुक्तिरिति ज्ञेयं। ततोऽनिवृत्तिः। पुरुषः स परः पार्थ इत्यनेनाक्षरात्परस्य स्वस्य भक्त्येकलभ्यत्वमुक्तं। तेन ज्ञानमार्गीयाणां न पुरुषोत्तमप्राप्तिरिति सिद्धं। यस्यान्तःस्थानीत्यनेन परस्य लक्षणमुक्तं। तच्च सूत्रादिप्रसङ्गे श्रीगोकुलेश्वरे स्पष्टमुच्यते। तेनाक्षरोपासकानां न पुरुषोत्तमोपासकत्वं तद्विषयकश्रवणादेरभावादिति भावः। अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिमिति वाक्यात्तु याति परमां गतिमित्यत्राक्षरमेव यातीत्यर्थो ज्ञेयः। किञ्च। तैत्तिरीयोपनिषत्सु पठ्यते।

यस्मिन्निदं सञ्च विचैति सर्वं
यस्मिन् देवा अधिविश्वे निषेदुः।
तदेव भूतं तदु भव्यमा इदं
तदक्षरे परमे व्योमन्॥
येनावृतं खञ्च दिवम्महीं च
येनादित्यस्तपति तेजसा भ्राजसा च।
यमन्तःसमुद्रे* कवयो वयन्ति
यदक्षरे परमे प्रजा इति॥

अत्राक्षरात्मकत्वेन अक्षरात्मकादाकाशात् परमे व्योम्नि भक्तानां हृदयाकाश इति यावत् तत्र प्रकाशमानमित्यर्थात्।

* समुद्रं कवय इति ख।

अतएव ब्रह्मविदाप्नोति परमित्युपक्रम्य सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायां परमे व्योमन्नित्येतदुपनिषत्स्वेव पठ्यते। यदक्षरे परमे प्रजा इति पदमवयन्तीत्यनेन सम्बध्यते। एतेनाक्षरस्य पुरुषोत्तमाधिष्ठानत्वं निश्चीयते। इतोऽप्यक्षरातीतः पुरुषोत्तम इत्यवगम्यते। अत्र प्रजापदात् व्यापि वैकुण्ठात्मकोलोकोऽक्षरपदेनोच्यत इत्यवगम्यते। अतएव न यत्र मायेत्यादिना श्रीभागवते तत्स्वरूपमुच्यते। एवं सति सामान्यं भगवद्विभूतिरूपत्वं तद्भाववत्त्वस्य पुरुषोत्तमस्य भाव सत्योक्तरीत्या तत्र स्थितिरिति यावत्। ताभ्यां हेतुभ्यां तथेत्यर्थो ज्ञेयः।

## इयदामननात् ॥ ३४ ॥

ननु संसारनिहत्यानन्दाविर्भावयोरविशेषादक्षरे ब्रह्मणि लये पुरुषोत्तमे प्रवेशात् न्यूनतोक्तौ को हेतुरित्याकाङ्क्षायामाह। इयदिति परिमाणवचनं तस्य श्रुतौ कथनादित्यर्थः। अयमिदं ज्ञेयं। तैत्तिरीयोपनिषत्सु सैषानन्दस्य मीमांसा भवतीत्युपक्रम्य मानुषमानन्दमेकं गणयित्वा तस्मादुत्तरोत्तरं शतगुणमानन्दं गन्धर्वानारभ्य प्रजापतिपर्यन्तस्योक्तोच्यते। ते * ये शतं प्रजापतेरानन्दाः † स एको ब्रह्मण आनन्द इति। एवं सतीयत् ‡ एतावदित्यक्षरानन्दस्य सावधित्वेन § श्रुतौ कथनादानन्दमयत्वेन निरवध्यानन्दात्मकत्वस्य पुरुषोत्तमे कथनात् तथोक्तिरिति।

---

* ते शतमिति ख।
† आनन्द इति ख।
‡ एवं सति यत् इति ख।
§ सावधिकत्वेन इति ख।

## अन्तरा भूतग्रामवत् स्वात्मनः ॥ ३५ ॥

अथ ज्ञानमार्गे यथा स्वात्मत्वेन ब्रह्मणो ज्ञानं तथा भक्ति-मार्गेऽपि भक्त्या पुरुषोत्तमज्ञाने स्वात्मत्वेन पुरुषोत्तमज्ञानं भवति न वेति विचार्य्यते। सर्व्वान्तरत्वेन श्रुतौ कथनात् तद्भवतीति पूर्व्वः पक्षः। तथात्वेऽपि सर्व्वस्य वशी सर्व्वस्येशान इत्यादि श्रुतिभिरेवमेव ज्ञानं नतु तथेति सिद्धान्तः। अत्र तथाज्ञानाभावस्यावश्यकत्वार्थं विपरीते बाधकमाह। पूर्व्वस्मिन् सूत्रे ब्रह्मानन्दाद्भजनानन्दस्याधिक्यं निरूपितं स तु भगवद्दत्तत्वाद-व्यवधायकोऽस्य प्रभुणा न सम्पाद्यते। स्वात्मत्वेन ज्ञानञ्च भजनानन्दान्तरायरूपं यद्येतत्सम्पादयेत् तं न दद्यादन्यथाभावादतः स्वात्मत्वेन ज्ञानं भक्तिमार्गीयस्य न सम्भवतीत्याशयेनाह। अन्तरा स्वात्मन इति। भगवता भक्तिमार्गे* स्वीयत्वेनाङ्गीकृते य आत्मा जीवस्तस्य यदात्मत्वेन ज्ञानं तद्भजनानन्दानुभवे अन्तरा व्यवधानरूपमिति भगवता स्वीकृते जीवे† तन्न सम्पाद्यत इत्यर्थः। तत्सम्पादनस्य सर्व्वथैवासम्भावित्वं‡ हीनत्वञ्च ज्ञापयितुं दृष्टान्तमाह। भूतग्रामवदिति। उत्तमभक्तस्य विग्रहोऽप्यलौकिक इति तत्र लौकिको भूतग्रामो न सम्भवति हीनत्वात् तथेत्यर्थः। अथवा लौकिको भूतग्रामः स्त्रीपुत्रपश्वादिः ब्रह्मानन्दानुभवे बाधकस्तथा भजनानन्दानुभवे स्वात्मत्वेन भगवज्ज्ञानमित्यर्थः।

---

* भक्तिरिति ख पुस्तके नास्ति।

† भगवता तादृशे इति ख।

‡ असम्भावितत्वमिति ख।

## अन्यथाभेदानुपपत्तिरिति चेन्नोप-
## देशान्तरवत् ॥ ३६ ॥

ननु भक्तेष्वप्युद्धवादिषु ज्ञानोपदेशः श्रूयते । स चात्म-
ब्रह्माभेदज्ञानफलक इत्यात्मत्वेन ज्ञानाभावे तदभेदोपदेशानुप-
पत्तिः स्यादिति तथात्वमेवैवं सति भक्तिमार्गात् ज्ञानमार्ग-
स्योत्कर्षश्च सिद्ध्यतीत्याशङ्क्य परिहरति । उपदेशान्तरवदिति ।
न ब्रह्माभेदज्ञानायोपदेशः किन्तु यथाग्निसस्वर्गापवर्गाख्य
पारलौकिकानन्दफलकालौकिके कर्मण्यधिकाररूपसंस्कारार्थं
गायत्र्युपदेशः क्रियते तत्संस्कारसंस्कृतं तच्छरीरादिकमपि
भूतादिभिरपि नोपहतं भवति । यथा वा योगोपदेशसंस्कृ-
तस्य वपुरग्न्यादिभिर्नोपहन्यते तथा प्रकृते भक्तिभावस्य रसा-
त्मकत्वेन संयोगविप्रयोगभावात्मकत्वात् द्वितीयस्य प्रलयानला-
दतिकरालत्वेन कदाचित् तद्भावोदये तेन भक्तवपुरादेस्तिरोधाने-
ऽपि भजनानन्दानुभवप्रतिबन्धः स्यादिति तन्निवृत्त्यर्थं ज्ञानोप-
देशसंस्कारसंस्कृतं तद्वपुरादिकं भगवता क्रियते न त्वात्माभेद-
ज्ञानं भगवतोऽभिप्रेतमित्यर्थः । अन्यथोपदेशानन्तरं बदरीं
गच्छन् विदुरं प्रतीहागतोऽहं विरहातुरात्मेति न वदेदेवमेवा-
न्येष्वपि भक्तेषु ज्ञेयं । अत्रोपदेशान्तरपदं प्रस्तुतोपदेशभिन्न-
मुपदेशमाहेति प्रस्तुतस्य तथात्वस्याभावादभेदपदेनाभेदोप-
देश एवोच्यते । एतेन भगवान् स्वीयानां भक्तिभावप्रतिबन्ध-
निरासायैव * सर्वं करोतीति ज्ञापितं भवति ।

---

* निरासादेवेति खं ।

अथवोपदेशान्तरवदित्यस्यायमर्थः । शरीराद्यध्यासवत-स्तद्भिन्नात्मतत्त्वं ननु शरीरादिरित्युपदेशो ज्ञानमार्गे यथा क्रियते तेन शरीरादावात्मबुद्ध्या यः स्नेहादिः सोपगच्छति तथाच सर्वेषामात्मनोऽप्यात्मा य आत्मनि तिष्ठन्नित्यादि श्रुति-सिद्धो जीवात्मनोऽप्यात्मा पुरुषोत्तम इति बोध्यते । तेन पुरु-षोत्तमे निरुपधिः स्नेहस्तत्सम्बन्धित्वेनात्मनि स सिध्यति । अयमेवं भावः पूर्व्वमप्यासीदेव तथापि सहजस्य आत्मार्थ-त्वेन ज्ञानेऽतिप्रमोदो दार्ढ्यञ्च भवतीति* तथा । नैतावता जीवा-भेद आयाति । अतो जीवनसम्पत्तिरेवोपदेशकार्य्यं । ननु तेन पूर्व्वभावोपमर्द्दः सम्भवतीति सारं । तेन ज्ञाने सर्व्वा-धिक्यं मन्वानाय भक्तिफलप्रदर्शनञ्च सिध्यति ।

## व्यतिहारो विशिंषन्ति हीतरवत् ॥ ३७ ॥

ननु तद्योऽहं सोऽसौ योऽसौ सोऽहमित्यैतरेयके तैत्तिरीयके चाहमस्मि ब्रह्माहमस्मीति पठ्यते । अत्र मध्यस्थं ब्रह्मपदमुभ-यत्र सम्बध्यते । तेनाहुभयथा व्यतिहारोऽतो ब्रह्माभेदः† सिध्यति । तथा लीलामध्यपातिभक्तानामपि कृष्णोऽहमहं कृष्ण इति भाव उभयथ‡ श्रूयतेऽतस्तदभेदज्ञानं भक्तिफलमिति पंफुल्ल-मानं प्रतिवादिनं तत्स्वरूपं बोधयति । रसात्मकत्वाद्भक्तेः संयोगविप्रयोगात्मकत्वात् द्वितीयभावोद्रेके यथेतरेऽनुपलापा-द्यो व्यभिचारिभावास्तथातिविगाढ़भावेन तदभेदस्फूर्त्तिरप्येकः ।

---

* अतिप्रमोदार्थं भवतीति ख' ।

† व्यतिहारतो ब्रह्माभेद इति ख' ।

‡ उभयत्र श्रूयते इति ख' ।

स नतु* सार्व्वदिकस्तदा स्वात्मानं तत्त्वेन विशिंषन्ति तञ्च स्वात्मत्वेन सोऽत्र व्यतिहारपदार्थ इत्यर्थः।

अपरञ्च उद्देश्यविधेयभावस्फुर्त्तौ न ह्यद्वैतज्ञानमस्ति किन्तु भावनामात्रं भक्तानान्तु विरहभावे तदात्मकत्वमेवाखण्डं स्फुरति ये तत्तल्लीलाः† स्वतः कुर्व्वन्त्येतद्यथातथा ‡ श्रीभागवतदशमस्कन्धविवृतौ प्रपञ्चितमस्माभिः। एवं सति मुख्यं यदद्वैतज्ञानं तत् भक्तिभावैकदेशमव्यभिचारिभावेष्वेकतर इति सर्षपसर्व्वाचलयोरिव ज्ञानभक्त्योस्तारतम्यं कथं वर्णनीयमिति भावः।

सैव हि सत्यादयः॥ ३८॥

अथेदं विचार्य्यते। ज्ञानभक्तैः पुरुषस्य सत्यशमदमादयो विधीयन्ते न वेति फलोपकार्य्यन्तरङ्गसाधनत्वाच्छुद्धौ सत्यामेव चित्ते भगवत्प्रादुर्भावसम्भवाद्विधीयन्त इति पूर्व्वः पक्षः। तादृशस्य ते न विधीयन्त इति सिद्धान्तः। तत्र हेतुमाह। हि यस्माद्धेतोः सैव भक्तिरेव सत्यादिसर्व्वसाधनरूपा। तस्यां सत्यां सत्यादयो ये ज्ञानमार्गे विहितत्वात् कष्टेन क्रियन्ते मुमुक्षुभिस्ते भक्तहृदि भगवत्प्रादुर्भावात् स्वतएव भवन्तीति न विधिमपेक्षन्त इत्यर्थः।

कामादीतरत्र तत्र चायतनादिभ्यः॥ ३९॥

पूर्व्वसूत्रे भक्तेरशेषाखिलसाधनरूपत्वं भक्तेरुक्तं। तद्दार्ढ्यार्थमधुना मुक्तिप्रतिबन्धकत्वेन हेयत्वेनोक्तानां कामादीनामपि भग-

* पत न इति ख।

† येन तल्लीलामिति ख।

‡ एतद् यथा श्रीभागवते इति ख

वत्वस्वस्यान्मुक्तिसाधकत्वमुच्यते । भक्तिस्तु विहिताऽविहिता चेति द्विविधा । माहात्म्यज्ञानयुतेश्वरत्वेन प्रभौ निरुपधिस्नेहा-त्मिका विहिताऽन्यतोऽप्राप्तत्वात् कामाद्युपाधिजा सात्वविहिता । एवमुभयविधाया अपि तस्या मुक्तिसाधकत्वमित्याह । इतरत्र विहितभक्तेरिति शेषः । कामाद्युपाधिस्नेहजरूपायां* कामाद्येव मुक्तिसाधनमित्यर्थः । भगवति चित्तप्रवेशहेतुत्वात् । आदिपदात् पुत्रत्वसम्बन्धित्वादयः । स्नेहत्वाभावेऽप्यविहितत्वभगवद्विषय-कत्वयोरविशेषात् द्वेषादिरपि संगृह्यते । तेन भगवत्सम्बन्धमात्रस्य मोक्षसाधकत्वमुक्तं भवति । तत्र विहितभक्तावित्यर्थः । शास्त्रे सर्वथा हेयत्वेनोक्ता हि द्वेषाः । सर्वनिवेदनपूर्वकं गृहेषु भग-वदीयं कुर्वतां तदुपयोगित्वेन तेभ्य एव मुक्तिर्भवतीत्यर्थः । एतादृशानां गृहा भगवद्गृहा एवेतिज्ञापनायायतनपदं । तेषु तथाप्रयोगप्राचुर्यात् । आदिपदेन स्त्रीपुत्रपश्वादयः संगृह्यन्ते । एतेन ज्ञानादिमार्गादुत्कर्ष उक्तो भवति बाधकानामपि साध-कत्वात् । माहात्म्यज्ञानपूर्वकस्नेहे† सत्येव भर्तृत्वेन ज्ञाने कामोऽपि सम्भवतीति ज्ञापनाय चकारः ।

आदरादलोपः ॥ ४० ॥

ननु नित्यानां वर्णाश्रमधर्माणां भगवद्धर्माणां चैककाले प्राप्तौ युगपदुभयोः करणासम्भवात् अन्यतरबाधे प्राप्ते कस्य-स्यात् न कस्येति स्यात् संशयः । तत्र कर्मणां स्वस्वकाले विहि-तानामकरणे प्रत्यवायश्रवणादितरथा तथाश्रवणादन्यदापि

---

* कामाद्युपाधिजस्नेहरूपायामिति ख° ।

† माहात्म्यज्ञानपूर्वकं स्नेहे इति ख° ।

त्पत्तिसम्भवात् साधकाधमत्वेन तेषामेव बाधोयुक्तो न तु निरव-काशानामिति पूर्व्वः पक्षस्तत्र सिद्धान्तमाह। आदरादिति। ब्रह्मयज्ञप्रकरणे तैत्तिरीयैः पठ्यते ओमिति प्रतिपद्यत एतद्वै यजुस्त्रयीं विद्यां प्रत्येषा वागेतत्परममक्षरन्तदेतदृचाभ्युक्तम्‌चो-अक्षरे परमे व्योमन्यस्मिन् देवा अधिविश्वे निषेदुर्यस्तन्न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासत इति। अत्र ऋक्-सम्बन्धित्वेन वर्णात्मके वस्तुतस्तु परमे व्योमात्मके*ऽक्षरे ब्रह्मणो-धारे वर्त्तमानं तल्लोकवेदप्रसिद्धं परं ब्रह्म यो न वेद स किमृचा करिष्यतीत्यनेन तदज्ञाने वेदाध्ययनस्य निष्फलत्वमुच्यते। एवं सति तदुक्तकर्म्मणोऽपि तथात्वमायाति। एतेन भक्त्या मामभिजानातीतिवाक्यात् परब्रह्मस्वरूपज्ञानं भक्त्यैवेति भक्ताः सन्तः पुरुषोत्तमविदो ये तेषामेव वेदाध्ययनादिकं फलप्रदं नान्येषामित्युक्तं भवति। अतएव श्रीभागवतेऽप्युक्तं

ऋषयोऽपि देव युष्मत्प्रसङ्गविमुखा इह संचरन्ति।

संसरन्तीति वा।

अन्वये‡ निदर्शनं य इत् ईश्वरत्वेन तत् पूर्व्वोक्तं परं ब्रह्म विदुस्त इमे भक्ताः सर्व्वामेच्छया सम्यक्प्रकारेण भगवन्निकटे श्रीगोकुल-वैकुण्ठादिष्वासते§ तेनान्येषां सम्यगसत्त्वमर्थाच्चित्रं भवति। पुरः¶स्थितार्थवाचीदम्शब्दप्रयोगेण चान्येषामसत्तुल्यत्वं श्रुतेरभि-

---

* परमव्योमात्मके इति ख।

† यो न वेद किमृचा करिष्यतीति ख।

‡ अन्वये इति ख।

§ आसत इतीति ख।

¶ पुरः स्थितार्थवाचीति ख।

मतमिति ज्ञायते। ऋक्शाखायामपि तमुस्तोतारः पूर्व्यं यथा विद ऋतस्य गर्भं जनुषा पिपर्त्तन आस्य जानन्तो नाम चिद्विवक्तन महस्ते विष्णो सुमतिं भजामह इत्यादृग्भिरन्येभ्यो धर्मेभ्यः सकाशाद्भगवद्धर्मेष्वादरः श्रूयत इति तेषामलोप एवेत्यर्थः। एतेनाकरणे प्रत्यवायश्रवणादित्यादि यदुक्तं तदपि प्रत्युक्तं वेदितव्यम्। करणेऽपि वैयर्थ्यात् तदपरीहारात्। एवं सति यदकरणे प्रत्यवायकथनं तेन तत्प्रादुर्भावकार्यं प्राप्य गौणकालेऽप्यकरणे तथेति तदाशय इति ज्ञायते। नन्वेवं तात्पर्यकत्वे श्रुतेरुपनयनादिवत् कर्मोपयोगित्वं* भक्तितज्ज्ञानयोः स्यादिति कर्मण एव प्राधान्यं न तु भक्तेः† सिद्धान्तीत्याशङ्क्य भक्तितज्ज्ञानावश्यकत्वबोधका‡श्रुतितात्पर्यमाह।

उपस्थितेऽतस्तद्वचनात् ॥ ४१ ॥

तयोर्युगपत्करणेऽनुपस्थितेऽपि यदि पूर्वं भगवद्धर्मकरणमुच्येत तदा त्वदुक्तं स्यान्नत्वेवं किन्तूभयो§र्युगपत्करण उपस्थिते बलाबलविचारे क्रियमाणेऽत आदरादेतोस्तद्वचनाद्भगवद्धर्माणां बलवत्त्वेनालोपवचनान्न कर्माङ्गत्वमेतेषां सिद्धान्तीत्यर्थः।

तन्निर्द्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलं ॥ ४२ ॥

अथेदं विचार्यते। पुरुषोत्तमविदः कर्म कर्त्तव्यं नवेति।

---

* उपनयनादिकर्मोपयोगित्वमिति ख।

† भक्त इति ख।

‡ प्रबोधक इति ख।

§ किन्तूभयोरिति ख।

तत्र मार्गद्वयकमात्मके तस्मिन् सम्पन्ने पुनस्तस्य ततोऽपुरुषार्थस्य करणमप्रयोजनमिति* न कर्त्तव्यमेवेति पूर्व्वः पक्ष†स्तत्र सिद्धान्तमाह। तन्निर्द्धारणेत्यादिना। अयेदमाकूतं। भक्तिमार्गे हि मर्य्यादापुष्टिभेदेनास्ति द्वैविध्यं। तत्र मर्य्यादायां पुष्टौ चैतादृशस्य न कर्म्मकरणं सम्भवति। अतएव तैत्तिरीयकोपनिषत्सु पठ्यते। आनन्दं ब्रह्मणो विद्वान्न विभेति कुतश्चनेति। एतं ह वाव न तपति किमहं साधु नाकरवं किमहं पापमकरवमितीति। श्रूयते चोभयविधानामपि कर्म्मकरणं अम्बरीषोद्धवपाण्डवादीनां। एवं सत्युभयविधानां मध्ये मम कर्म्मकरणे प्रभोरिच्छास्तीति यो निर्द्धारयति स करोति च एतद्विपरीतं‡ स न करोति यथा शुकजडादिः। एतन्निर्द्धारस्य भगवदधीनोऽतो भक्तेष्वपि तन्निर्द्धारणानियमोऽतः कर्म्म कर्त्तव्यमेवातन्निर्द्धारणेत्याधुनिकानां। एवं सतीच्छाज्ञानवत्ता तदसन्देहवत्ता च कर्म्म कर्त्तव्यमिति सिद्धं। तदोभयोः फलं वदन्नादावाद्यमाह। तद्दृष्टेः। तस्या भगवदिच्छाया दृष्टिर्ज्ञानं यस्य स तथा तस्य जीवकृतकर्म्मफलात् पृथग्भिन्नमीश्वरकृतकर्म्मणो यत् फलं वेदमर्य्यादारक्षा लोकसंग्रहश्च तत् फलमित्यर्थः। हि शब्देन

सक्ताः कर्म्मण्यविद्वांसो यथा कुर्व्वन्ति भारत।
कुर्य्याद्विद्वांस्तथासक्तश्चिकीर्षुर्लोकसंग्रहं ॥

इति भगवद्वाक्यरूपोपपत्तिः सूचिता। द्वितीयस्य मध्यमा-

---

* करणमप्रयोजनमिति ख।

† पूर्व्वपक्ष इति ख।

‡ एत इच्छा इति ख।

§ च तद्विपरीतं इति घं।

धिकारात् कालसङ्गादिजनितचित्तमालिन्येन भगवत्सान्निध्ये प्रतिबन्धः स्यात् तन्निवृत्तिस्तत्कृतकर्मण: फलमित्यर्थः । अथवा पूर्व्वसूत्राभ्यां भगवद्भक्तेरावश्यकत्वमुक्तं । सर्व्वात्मभाववतो न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिहेति भगवद्वचनाद्विधेयाभावादसम्भवाच्च कर्म्मज्ञानयोर्विहितभक्तेय करणं न सम्भवतीति तस्य किं फलमित्याकाङ्क्षापूरणाय तदनुवदति । तन्निर्धारणेत्यादिना । तस्मिन् धर्म्मिण्येव न तु धर्म्मेष्वपि दृष्टिर्यस्य स तथा । दृष्टिपदेन ज्ञानमात्रमुच्यते । तेनान्यविषयकदर्शनश्रवणादिज्ञानाभाव उक्तो भवति । एतादृशस्य प्रभुसङ्गमभावमपेक्षितं । तत्र भगवदुक्तस्वसङ्गमावधिकस्य भक्तस्य सङ्गमसमयनिर्धारो भवति । एतादृशस्य तस्य स नेति तन्निर्धारणानियमः* । एतेन फलप्राप्तेः प्राग्वस्थोक्ता भवति । फलस्वरूपमाह पृथक् फलमिति । अस्यानिर्वचनीयत्वादनुभवैकवेद्यत्वान्मोक्षान्तं यत् फलं शास्त्रे उक्तं तस्माद्भिन्नमित्युक्तं । अन्यत्र हि धर्म्मिणो साधनत्वं । अत्र फलमेव साधनं तत्फलस्याभिवोद्धता युक्तैवेति हि शब्देनाह । ज्ञानमोक्षादिना तत्रावाप्रतिबन्धश्च फलमित्यर्थः । प्रासङ्गिकमेतत् सूत्रं ।

## प्रदानवदेव तदुक्तं† ॥ ४२ ॥

अथेदं विचार्य्यते । सर्व्वात्मभावो विहितकर्म्मज्ञानभक्तिसाध्यो न वेति । तत्र पुराणे तस्मात् त्वमुद्धवोत्सृज्येत्युपक्रम्य ‡

* तन्निर्धारणानियम इति ख ।

† प्रदानेति ख ।

‡ तस्मात्त्वमुद्धवोत्सृज्येत्युपक्रम्येति ख ।

मामेकमेव शरणमात्मानं सर्व्वदेहिनां।
याहि सर्व्वात्मभावेन यास्यसे ह्यकुतोभयं॥

इति वाक्ये मुक्त्यात्मकाकुतोभयसाधनरूपशरणगमने प्रकारत्वेन सर्व्वात्मभावस्य कथनेन स्वप्रयत्नसाध्यत्वं गम्यतेऽतः साधनसाध्य इति पूर्व्वः पक्षः। तत्र सिद्धान्तं वक्तुं तदुपदेशस्वरूपमाह। प्रदानवदिति। यद्ययं साधनोपदेशः स्यात् स्यात्तदा साधनत्वेन* सर्व्वात्मभावेन शरणप्राप्तेः स्वकृतिसाध्यत्वं। नत्वेवं। किन्तु तदुक्तं भगवदुक्तं प्रदानवत्। प्रकृष्टं दानं प्रदानमिति यावत्†। तद्वदेवेत्यर्थः। वरेण हि स्वकृत्यसाध्यमपि सिद्ध्यतीति तथा असंसार‡भयादिनापि शरणाप्तिर्भवति। तत्र न तस्याः पुरुषार्थत्वं किन्तु तन्निवृत्तेरेव। प्रकृतेऽपि सर्व्वात्मभावे स्वरूपप्राप्तिविलम्बासहिष्णुत्वेनात्यार्त्तौ स्वरूपातिरिक्तास्फूर्त्यां तद्भावस्याभाव्येन गुणगानादिसाधनेषु कृतेष्वप्यप्राप्तौ स्वाशक्यत्वं ज्ञात्वा प्रभुमेव शरणं गच्छत्यै§तत्र न स्वकृतिसाध्यमिति सूक्तं प्रदानवदिति। भक्तस्येप्सितोऽर्थो हि वरो भवति। सर्व्वात्मभावस्यानुभवैकवेद्यत्वेन पूर्व्वमज्ञानेनेप्सितत्वासम्भवेऽपि स्वत एव कृपया दानमितिवदित्युक्तं। यथवा सर्व्वात्मभावेन मां याहीति सम्बन्धः। यद्वा प्रदानवदित्यस्य पूर्व्ववदेव व्याकृतिः। तत्र साधनासाध्यत्वे प्रमाणमाह। तदुक्तमिति। नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते तेन

---

* साध्यत्वेनेति खं।

† वरदानमिति यावदिति खं।

‡ असंसारेति ख।

§ गच्छत्यैतत्र इति खं।

लभ्य इति श्रुत्वा वरणातिरिक्तसाधनाप्राप्यत्वमुच्यत इति तत्तद्धैवेत्यर्थः। भगवदुक्ताकुतोभयपदस्य न मुक्तिरर्थः किन्तु यतो वाच इत्यादिनाऽऽनन्दस्य स्वरूपमुक्त्वाऽऽनन्दं ब्रह्मणो विद्वान् बिभेति कुतश्चनेति श्रुत्युक्तं यत् पूर्व्वोक्तरसात्मकपुरुषोत्तमभजनानन्दानुभवोत्तरकालीनमकुतोभयं तदर्थः।

लिङ्गभूयस्त्वात् तद्धि बलीयस्तदपि ॥ ४४ ॥

ननु प्रतिबन्धकवालाहत्यादिसद्भावेऽपि वरणकार्य्यं स्यादुत तन्निवृत्ताविति संशये प्रतिबन्धकाभावस्य सर्व्वत्र हेतुत्वात् तन्निवृत्तावेव तथेति पूर्व्वपक्षे सिद्धान्तमाह। लिङ्गेत्यादिना। सामोपनिषत्सु, नवमे प्रपाठके सनत्कुमारनारदसंवादे प्रथमतएव मुख्या ब्रह्मविद्योपदेशार्हो न भवतीति ज्ञात्वा सनत्कुमारो नारदाधिकारस्य ज्ञातुं यद्वेत्थ तेन मोपसीदेत्युक्तो नारदः स्वविदितान् ऋग्वेदादिसर्पदेवजनविद्यां तमुक्त्वा सोऽहं भगवो मन्त्रविदेवास्मीति स्वाधिकारमुक्त्वाह नात्मविच्छ्रुतं ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मविदिति सोऽहं भगवः शोचामि तं मा भगवान् शोकस्य पारन्तारयत्विति नारदेनोक्तः सनत्कुमारः पूर्व्वस्मात् पूर्व्वस्मात् भूयोवदेति प्रष्टः। भूयःपदमाधिक्यार्थकं। नामवाङ्मनःसंकल्पचित्तध्यानविज्ञानबलान्नापस्तेजआकाशस्मराशाप्राणानां ब्रह्मत्वेनोपासनाविषयत्वेनोक्ता

---

* भगवदुक्तात् कुत इति ख॰।

† भगवत इति ख॰।

‡ पापनखडस्य इति ख॰।

§ स्मराशाकाशस्मरामाणान इति ख॰।

प्राणोपासकस्यातिवादित्वं सत्यवादित्वेनोक्ता जिज्ञासितव्य-
त्वेन* सत्यविज्ञानमतिश्रद्धानिष्ठाकृतिसुखानि पूर्व्वपूर्व्वकारण-
त्वेनोत्तरोत्तराण्युक्ता सुखस्वरूपजिज्ञासायामाह यो वै
भूमा तत्सुखमिति। भूम्नः स्वरूपजिज्ञासायामाह यत्र नान्यत्
पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमेति। एतेन सर्व्वा-
त्मभावस्वरूपमेवोक्तं भवति। तच्च विरहभावेऽतिविगाढ़भावेन
सर्व्वत्र तदेव स्फुरतीति स एवाधस्तादित्यादिनोक्ता कदाचित्
स्वस्मिन्नेव भगवत्स्फूर्त्तिरपि भवतीत्यथातोऽहङ्कारादेश इत्यादिना
तामुक्ता एतेषां व्यभिचारिभावत्वेनानियतत्वं ज्ञापयितुं पुनः
सर्व्वत्र भगवत्स्फूर्त्तिमाह अथात आत्मादेश इत्यादिना। ततः
संयोगभावे सति पूर्व्वभावेन सर्व्वोपमर्द्दिना स्वप्राणादिसर्व्व-
तिरोधानेनापि मल्लीलानुपयोगित्वं न शङ्कनीयं यतो भगवत
एव सर्व्वसम्पत्तिरित्याशयेन तस्य ह वा एतस्यैवं पश्यत इत्युप-
क्रम्यात्मत एवेदं सर्व्वमित्युक्तवान्। ततः प्रोक्तस्वभावस्वरूप-
प्राप्तेरस्य मूलकारणमाहाहारः शुद्धावित्यादिना। भाव-
पोषको ह्याहारस्तस्य सदोषत्वे तु न किञ्चित्सिद्ध्यति। एवं सति
भगवदतिरिक्तस्पर्शो यतो निर्दोषत्वाभावाद्भगवानेव चेत् भाव-
पोषको भवेत् तदा सर्व्वं सम्पद्यते स च सर्व्वात्मभावे सत्येव
भवति स च तथा तेन प्रकारेणेत्यर्थः। तद्वरणं विना न भवति।

तच्चोक्तकार्य्यानुमेयमिति वरणलिङ्गं सर्व्वात्मभावस्यैव भूयस्त्वात् सर्व्वतोऽधिकत्वात् तत् वरणमेव सर्व्वतः कालादेर्बलीय इत्यर्थः। यल्लिङ्गमेव सर्व्वतोऽधिकं तस्य तथात्वे किं वाच्यमिति कैमुतिकन्यायोऽपि सूचितः। ज्ञानमार्गीयज्ञानेन प्रतिबन्धशङ्कायामाह तदपीति। उक्तमिति शेषः। अन्तरा भूतग्रामवत् स्वात्मन इति सूत्रेण तच्चोपपादितमस्माभिः।

पूर्व्वविकल्पः प्रकरणात् स्यात् क्रिया
मानसवत् ॥ ४५ ॥

प्रत्राह। नात्र वरणलिङ्गभूयस्त्वं निरूप्यते किन्त्वात्मज्ञानप्रकारविशेषएव। तथाहि। पूर्व्वप्रपाठके आत्मना सहाभेदः सर्व्वस्य निरूपितः श्वेतकेतूपाख्यानेन। अधिमे च सोऽहं भगवो मन्त्रविदेवास्मि नात्मविदित्यादिना नारदस्यात्मजिज्ञासैवोक्ता। एवं सति उत्तरमपि तद्विषयकमेव भवितुमर्हत्यत आत्मप्रकरणत्वादुभयोः प्रपाठकयोः पूर्व्वस्मिन् यदभेद उक्तस्तस्यैव स्वरूपमात्मन एवेदं सर्व्वमित्यन्तेनोक्तमिति पूर्व्वोक्तप्रकारादन्येन प्रकारेणात्माभेद*एव सर्व्वस्योक्त इति। तदेवाह। पूर्व्वस्य पूर्व्वप्रपाठकोक्तात्माभेदज्ञानस्य विकल्पः प्रकारभेद एवाग्रेऽपि निरूप्यते। तत्रोपपत्तिमाह प्रकरणादिति। एतदूपपादितं। अत्र सिद्धान्त†समतमेव दृष्टान्तमाह। तद्दृढ्यसंवादार्थं क्रिया मानसवदिति। यथा पूजनप्रकरणे बाह्यं तत्क्रियारूपमुच्यत

* पूर्व्वोक्तप्रकारेणात्माभेद इति ख।

† सिद्धान्तिसम्मतमेवेति ख।

आन्तरन्तु मनोव्यापाररूपमुच्यते। न ह्येतावताऽन्यतरस्य तद्भिन्नत्वं वक्तुं शक्यं प्रकरणाभेदात्* तथैवापीत्यर्थः।

अतिदेशाच्च ॥ ४६ ॥

नामरूपात्मकं हि जगत् तत्पूर्व्वं† सर्व्वशब्देनानूद्य तस्मिन् ब्रह्माभेदो निरूपितोऽप्येतद्भूमादिविद्या‡मनूद्य नामात्मकब्रह्मत्वं तथाऽतिदिश्यते§ नामैवैतन्नामोपास्स्वेति। इतोऽपि हेतोर्ध्यानप्रकारभेदएवात्र निरूप्यत इत्यर्थः।

विद्यैव तु निर्द्धारणात् ॥ ४७ ॥

तु शब्दः पूर्व्वपक्षं व्यावर्त्तयति। यदुक्तं सनत्कुमारनारदसंवादे आत्मध्यानप्रकारविशेषएव निरूप्यत इति तन्न किन्तु विद्यैव निरूप्यत इति। अत्रेदमाकूतं। नायमात्मेति श्रुतिरितरसाधननिषेधपूर्व्वकं वरणस्य साधनत्वमुक्त्वा तल्लभ्यत्वे हेतुत्वं यद्वरणविषयमप्याह तस्यैष आत्मा वृणुते तनुं स्वामिति। तस्य वृतस्यात्मन एव भगवानात्माऽतएव तदनुरूपः स जीवात्मा। तद्वरणस्यावश्यकत्वज्ञापनाय स्वामिति। सर्व्वो हि स्वकीयात्मनुमात्मीयत्वेनात्मत्वेन च वृणुते¶ तद्विशिष्टएव भोगान् भुंक्ते। अतएव तैत्तिरीयकोपनिषत्स्वपि ब्रह्मविदाप्नोति परमिति सामान्यतो ब्रह्मविदः परब्रह्मप्राप्तिमुक्त्वाऽयमर्थो विशेषतो वदन्

---

* प्रकरणभेदादिति ख।
† तत्पूर्व्वकमिति ख।
‡ अथै तत् भूमादिविद्या इति ख।
§ अतिदिश्यते इति ख।
¶ आत्मीयत्वेन च वृणुते इति ख।

सत्यं ज्ञानमनन्तं ब्रह्मेति परब्रह्मस्वरूपमुक्त्वा यो वेद निहितं गुहायां परमे व्योमन्। सोऽश्नुते सर्व्वान् कामान् सह ब्रह्मणा विपश्चितेत्युक्तं। एतद्यथा तथानन्दमयाधिकरणे प्रपञ्चित-मस्माभिः।

किञ्च। पुरुषोत्तमलाभहेतुभूतं तु भक्तिमार्गे यद्वरणं स्वीयत्वेनाङ्गीकाररूपं तदेव न त्वन्यादृशमपीति ज्ञापनायापि वदति नायमात्मा बलहीनेन लभ्य इति। बलकार्य्यं हि प्रभु-वशीकरणं तदाहं भक्तपराधीनः। वशे कुर्व्वन्ति मां भक्त्या इत्यादिवाक्यैर्भक्त्यैवेति बलशब्देन भक्तिरुच्यते। अन्यथा पूर्व्व-वाक्य एवेतरनिषेधस्य कृतत्वात् पुनर्बलाभावनिषेधं* न कुर्य्यात्। वरणमात्रस्य हेतुत्वमुक्त्वा बलस्य तथात्वं† न वदेत्। एतादृशस्य हृदि भगवत्प्राकट्यं भवतीत्याह। एतैरुपायैर्यतते यस्तु विद्वांस्-तस्यैष आत्मा विशते ब्रह्मधामेति। अस्यार्थस्तस्यैष आत्मात्मनोऽप्यात्मा पुरुषोत्तमो ब्रह्म अक्षरब्रह्मात्मकं धाम विशत इति। धामपदं पुरुषोत्तमस्याधारं‡ ब्रह्मस्वरूपं स्थानमिति ज्ञापनार्थमुक्तमन्यथा न वदेत्। तेन तद्धृदये स्वस्थानमाविर्भाव्य स्वयं तत्र प्रकटीभवतीति ज्ञाप्यते§। प्रकृते श्वेतकेतूपाख्याने परोक्षवादेन ब्रह्माभेदबोधनेन पुरुषोत्तमाधिष्ठानत्वयोग्यता ज्ञाप्यते। अपि तु न ह्येतावतैवाधिष्ठानात्मकाक्षराविर्भावो भवति पुरुषोत्तमस्य वा। तथा सति ज्ञानिनां सर्व्वेषां परप्राप्तिः स्यात्त्वेवं। भक्त्याद्य-

---

* निषेधनमिति ख' ।

† तथात्वं च इति ख' ।

‡ धामपदं पुरुषोत्तमस्याधारमिति ख पुस्तके नास्ति ।

§ ज्ञाप्यते इति ख' ।

मेकधा याह्य इत्यादिवाक्ये. किन्तु भगवदनुग्रहेण भक्तसङ्गेन च भक्तौ सत्यामिति ज्ञापनाय भक्तएव तद्बोधाधिकारीत्यपि ज्ञापयितुं भक्तस्य नारदस्य भगवदावेशयुक्तस्य सनत्कुमारस्य च सम्वाद उक्तः। तत्रात्मशब्देन पुरुषोत्तम उच्यते। भक्तिमार्गे* निरुपधिस्नेहविषयः स एव यतः। सतु सर्व्वात्मभावैकसमधिगम्य इति सर्व्वात्मभावएव विद्याशब्देनोच्यते। परमकाष्ठापन्नं यद्वस्तु तदेव हि वेदान्तेषु मुख्यत्वेन प्रतिपाद्यमक्षरब्रह्मादिकं तु तद्विभूतिरूपत्वेन तदुपयोगित्वेन मध्यमाधिकारिफलत्वेन च प्रतिपाद्यते। तेन तत्र विद्याशब्दप्रयोग औपचारिकः† सर्व्वात्मभावएव मुख्यः मुक्तश्चैतदक्षरविषयिण्याः‡ विद्यायाः सकाशात् तत उत्तमविषयिण्यास्तस्या उत्तमत्वं। एवं सति पूर्व्वप्रपाठकस्याक्षरप्रकरणत्वादुत्तरस्य पुरुषोत्तमप्रकरणत्वात् तद्वैत्यसिद्धि§-स्यात उक्तन्यायेन विद्यैवाग्रिमप्रपाठके निरूप्यते नतु¶ पूर्व्वोक्तात्मज्ञानप्रकारविशेषः। यत्र हेतुमाह निर्द्धारणादिति। सुखन्त्वेव|| विजिज्ञासितव्यमित्युक्त्वा सुखस्वरूपमाह यो वै भूमा तत्सुखं नाल्पे सुखमस्ति भूमैव सुखं भूमात्वेव विजिज्ञासितव्य इति। अक्षरपर्य्यन्तं गणितानन्दत्वात् पुरुषोत्तमस्यैवानन्दमयत्वेन **

---

* भक्तिमार्गे तु इति ख।

† प्रयोग औपचारिक इति ख।

‡ क्षरविषयिण्या इति ख।

§ तद्वैत्यसिद्धि इति ख।

¶ नतपूर्व्वोक्त इति ख।

|| सुखत्वेव इति क्वचित् दृश्यते।

** आनन्दमयत्व न इति ख।

निरवधिसुखात्मकत्वात् स एव भूमा तस्यैव विजिज्ञासितव्यत्वेन निर्द्धारणादित्यर्थः। भूम्नो लक्षणमथ उच्यते यत्र नान्यत्पश्यतीत्यादिना। यस्मिन् ज्ञाते सति नान्यत् पश्यतीत्यर्थः। तथा सति सर्व्वात्मभाववतः प्रभुदर्शने सत्यपि लीलोपयोगिवस्तुदर्शनादिकमनुपपन्नमिति शङ्का तु तस्य हवा एतस्यैवं पश्यत एवं मन्वानस्यैवं विजानत आत्मनः प्राणा इत्यादिना निरस्ता वेदितव्या। तैः सह लीलां चिकीर्षतः प्रभुत एव सर्व्वं सम्पद्यते न तु भक्तसामर्थ्येनेति भावेन तदुक्तेः।

दर्शनाच्च ॥ ४८ ॥

दृश्यते च सर्व्वात्मभाववतां भक्तानां व्रजसीमन्तिनीप्रभृतीनां पूर्व्वमिसरविस्मृतिर्भगवत्स्पर्शादिनाप्ये सर्व्वसामर्थ्यमिति व्यासः स्वानुभवं प्रमाणत्वेनाह। उक्तञ्च श्रीभागवते ताभिरेव।

चित्तं सुखेन भवतापहृतं गृहेषु
यन्निर्विशत्युत करावपि गृह्य कृत्ये।
पादौ पदं न चलतस्तवेत्यादिना।

तेन ज्ञानशक्तिक्रियाशक्तितिरोधानमुक्तं भवति। अग्रे तदाविर्भावादिकं स्फुटमेव।

ननु सनत्कुमारनारदसंवादात्मकं भूमा तमेकं* वाक्यं। तत्रोपक्रमे मन्त्रविदेवास्मि नात्मवित् श्रुतण्ह्येव मे† भगवद्दृशेभ्यस्तरति शोकमात्मविदिति सोऽहं भगवः शोचामीत्यादिना स्वात्मज्ञानस्यैवोपक्रमादुपसंहारोऽपि तमादायैवोचितः अग्रे

* भूमादात्मकमेवं वाक्यं इति ख।

† श्रुतः ह्येवं मे इति ख।

चेदात्मपदानामीश्वरपरत्वं स्यात्तदाक्यभेद उपक्रमविरोधश्च स्यात् तस्माद्वाक्यानुरोधात् पूर्वज्ञानप्रकारविशेषणत्वायमिति मन्तव्यमित्यत उत्तरं पठति।

श्रुत्यादिबलीयस्त्वाच्च न बाधः* ॥ ४९ ॥

नैवं वाक्यानुरोधादरण्जात्सर्वात्मभावलिङ्गभूयस्त्वं बाधितव्यं वाक्यापेक्षया श्रुतिलिङ्गयोर्बलीयस्त्वात्। एतद्बलीयस्त्वन्तु श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमिति जैमिनीयसूत्रे सिद्धं। अत्र इतरसाधननिषेधपूर्वकं यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनुं स्वामिति श्रुतिर्वरणमात्रलभ्यत्वमाह। एतदपि च नायमात्मा बलहीनेन लभ्य इत्युपक्रम्यैतैरुपायैर्यतते यस्तु विद्वांस्तस्यैष आत्मा विशते ब्रह्मधामेति श्रुतिः सघते। एतच्च विशेषेण तु निर्द्धारणादित्यत्र निरूपितं।

अपरञ्च। नाशविस्तरति शोकमात्मविदिति नारदवाक्यानुवादयोरात्मपदमुत्तमपर्यात्मकत्वेन लिङ्गेन पुरुषोत्तमपरमिति ज्ञायते स हि सर्वस्य उत्तमोऽतो ब्रह्मेत्युपास्यत्वेन सनत्कुमारोक्तं प्रतिरूपं ततस्ततो भूयोऽस्तीत्यपृच्छत्। अन्ते सर्वाधिकत्वेन सुखात्मकत्वेन भूमानं श्रुत्वा तथा नापृच्छत् किन्तु तत्राप्यर्थमत्यार्त्तौ कस्मिन् प्रतिष्ठित इत्यपृच्छत्। तदा सर्वा-

अभाववत्स्वेव प्रतिष्ठित इत्याशयेन सर्व्वात्मभावलिङ्गात्मकं भावं स एवाधस्तादित्यादिनोक्तवान् । नत्वेतया श्रुत्या न सर्व्वात्मभावलिङ्गात्मको भाव उच्यते किन्तु व्यापकत्वेन सर्व्वरूपत्वेन स्वभिन्नाधिकरणाभावादन्यत्राप्रतिष्ठितत्वमेवोच्यत इत्यत उत्तरं पठति ।

अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववत्
दृष्टश्च तदुक्तं ॥ ५० ॥

भूमस्वरूपं श्रुत्वा स भगवः कस्मिन् प्रतिष्ठित इति प्रश्ने स्वे महिम्नीत्युत्तरं । तदर्थस्तु कौशल्येन हरौ भक्ते यो महिमरूपः सर्व्वात्मभावस्तस्मिन्निति । स्वरूपात्मके महिम्नीति वा । भगवदात्मकत्वात् सर्व्वात्मभावस्य । तदितरस्य साक्षात् पुरुषोत्तमाप्रापकत्वात् अस्यैव तत्प्रापकत्वात् परमकाष्ठापन्नमहित्वरूपोऽयमेव भाव इति महिमशब्देनोच्यते । स तु विप्रयोगभावोदये सत्येव सम्यक्प्रातो भवति व्यभिचारिभावैः ते त्वनियतस्वभावा इति ज्ञापयितुं त्रिविधाः स एवाधस्तादित्यादिनात्मैवेदं सर्व्वमित्यन्तेन निरूप्य भूमप्रतिष्ठाधिकरणप्रश्ने यदुत्तरितं* स्वे महिम्नीति तमेवानुबध्नाति स वा एष इत्यनेन । तच्छब्दस्य पूर्व्वपरामर्शित्वात् । एवं सति त्वदुक्तमन्यत्राप्रतिष्ठितत्वमेवेह प्रतिपाद्यं स्यात्तदोक्तरीत्यानुबन्धं न कुर्य्यादहङ्कारादेशादिकञ्च न कुर्य्यादुक्तप्रश्नोत्तरं स्वान्यवस्त्वभावात् क्वापीत्येव वदेत्तस्मादस्मदुक्त एव मार्गोऽनुसर्त्तव्यः । आदिपदात् त्रिविधा ये भावा उक्तास्तेषामपि स्वरूपमेवं पश्यन्नेवं मन्वान एव विजान-

* यदुक्तमिति ख ।

चेदात्मपदानामीश्वरपरत्वं स्याद्वाक्यभेद उपक्रमविरोधश्च स्यात् तस्माद्वाक्यानुरोधात् पूर्वज्ञानप्रकारविशेषएवायमिति मन्तव्य-मित्यत उत्तरं पठति ।

श्रुत्यादिबलीयस्त्वाच्च न बाधः* ॥ ४९ ॥

नैवं वाक्यानुरोधाद्धरणज्ञासर्वात्मभावलिङ्गभूयस्त्वं बाधितव्यं वाक्यापेक्षया श्रुतिलिङ्गयोर्बलीयस्त्वात् । एतद्बलीयस्त्वन्तु श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्य-मिति जैमिनीयसूत्रे सिद्धं । प्रकृते इतरसाधननिषेधपूर्वकं यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनुं स्वामिति श्रुतिर्वरणमात्रलभ्यत्वमाह । एतदर्थे च नायमात्मा बलहीनेन लभ्य इत्युपक्रम्यैतैरुपायैर्यतते यस्तु विद्वांस्तस्यैष आत्मा विशते ब्रह्मधामेति श्रुतिः पठ्यते । एतच्च विद्येव तु निर्धारणादित्यत्र निरूपितं ।

अपरञ्च । नात्मवित्तरति शोकमात्मविदिति नारदवाक्यानुवादयोरात्मपदमुत्तमप्रश्नात्मकत्वेन लिङ्गेन पुरुषोत्तमपरमिति ज्ञायते स हि सर्वेभ्य उत्तमोऽतो ब्रह्मेत्युपास्यत्वेन सनत्कुमारोक्तं प्रतिरूपं ततस्ततो भूयोऽस्तीत्यपृच्छत् । अन्ते सर्वाधिकत्वेन सुखात्मकत्वेन भूमानं श्रुत्वा तथा नापृच्छत् किन्तु तस्याश्चर्यमत्वार्त्तौ कस्मिन् प्रतिष्ठित इत्यपृच्छत् । तदा सर्वा-

स्वभाववत्त्वेव प्रतिष्ठित इत्याशयेन सर्व्वात्मभावलिङ्गात्मकं भावं स एवाधस्तादित्यादिनोक्तवान्। नत्वेतया श्रुत्या न सर्व्वात्मभावलिङ्गात्मको भाव उच्यते किन्तु व्यापकत्वेन सर्व्वरूपत्वेन स्वभिन्नाधिकरणाभावादन्यथाप्रतिष्ठितत्वमेवोच्यत इत्यत उत्तरं पठति।

अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववत्
दृष्टश्च तदुक्तं॥ ५०॥

भूमस्वरूपं श्रुत्वा स भगवः कस्मिन् प्रतिष्ठित इति प्रश्ने स्वे महिम्नीत्युत्तरं। तदर्थस्तु स्वीयत्वेन हरौ भक्ते यो महिमरूपः सर्व्वात्मभावस्तस्मिन्निति। स्वरूपात्मके महिम्नीति वा। भगवदात्मकत्वात् सर्व्वात्मभावस्य। तद्धितरस्य साक्षात् पुरुषोत्तमाप्रापकत्वात् अस्यैव तत्प्रापकत्वात् परमकाष्ठापन्नमहिमरूपोऽयमेव भाव इति महिमशब्देनोच्यते। स तु विप्रयोगभावोदये सत्येव सम्यक् ख्यातो भवति व्यभिचारिभावैः ते त्वनियतस्वभावा इति ज्ञापयितुं विविधाः स एवाधस्तादित्यादिनात्मैवेदं सर्व्वमित्यन्तेन निरूप्य भूमप्रतिष्ठाधिकरणप्रश्ने यदुत्तरितं* स्वे महिम्नीति तमेवानुबध्नाति स वा एष इत्यनेन। तच्छब्दस्य पूर्व्वपरामर्शित्वात्। एवं सति त्वदुक्तमन्यथाप्रतिष्ठितत्वञ्चेदिह प्रतिपाद्यं स्यात्तदोक्तरीत्यानुबन्धं न कुर्य्याद्दहदारादेयादि-कञ्च न कुर्य्यादुक्तप्रश्नोत्तरं स्वान्यत्वस्वभावाश्च ज्ञापयेत्वेव यदे-तस्मादस्मदुक्त एव मार्गोऽनुसर्त्तव्यः। आदिपदात् विविधा ये भावा उक्तास्तेषामपि स्वरूपमेवं पश्यन्नेवं मन्वान एवं विजान-

* यदुत्तरमिति खं।

स्थिति क्रमेण यथिरूपितं तदुच्यते। पूर्वं ह्यातिविगाढ़भावेन तदितरास्फूर्त्या तमेव सर्वत्र पश्यति। एतदेवोक्तमेवं पश्यन्नित्यनेन। ततः किञ्चिद्बाह्यानुसन्धानेऽहङ्कारादेर्भो भवति ततस्तमेव सर्वतः स्वशक्तिसामर्थ्येन तं प्रकटीकरिष्य इति मनुते करोति च तथा। अतएवान्वेषणमुपगाने कृते ताभिः एतदेवोक्तमेवं सन्धान इत्यनेन। ततो निरुपधिस्नेहविषयः पुरुषोत्तम आत्मशब्देनोच्यत इति तदादेशो भवति। तदा पूर्वकृतसाधनवैफल्यज्ञानेनातिदैन्ययुक्तस्नेहजविविधभाववान् भवति तदेतदुक्तमेवं विज्ञानमित्यनेन अतएवोपसर्गं स्वतः। ततोऽतिदैन्येनाविर्भावे * सति या अवस्थास्ता निरूपिता आत्मरतिरित्यादिना। अत्रात्मशब्दाः पुरुषोत्तमवाचका ज्ञेयाः। अन्यथौपचारिकत्वं स्यात्। मुख्ये सम्भवति तस्यायुक्तत्वात्।

नतु सर्वात्मभावस्यापि मुक्तौ पर्यवसानमुत नेति संशयनिरासाय दृष्टान्तमाह। प्रमान्तरपृथक्त्ववदिति। मुमुक्षुभक्तस्य स्नेहदार्ढ्येन भगवद्विषयिणी या प्रज्ञा सा सर्वात्मभावप्रज्ञाप्रज्ञातः प्रज्ञान्तरमित्युच्यते तत्र कर्मज्ञानादितरभक्तप्रज्ञाभ्यः पार्थक्येन तदिष्टमेव साधयति यथा ‡ तथा सर्वात्मभाववतो भक्तस्य यत्कारिका भगवद्विषयिणी प्रज्ञा तमेव प्रकारं स भावः साधयति नान्यमिति न मुक्तौ पर्यवसानमित्यर्थः। अत्र व्यासः स्वानुभवं प्रमाणत्वेनाह। दृष्टश्चेति। तत्तद्भाववतो भक्तस्य प्रभुस्वरूपदर्शनातिरिक्तफलाभावोऽस्माभिरेव दृष्ट इत्यर्थः।

एतादृशा अनेके दृष्टा इति नैकस्य नाम गृहीतं। अत्र मन्द-मपि प्रमाणमाह। तदुक्तमिति। भगवतेति शेषः। श्रीभागवते दुर्वाससं प्रत्य भक्तपराधीन इत्युपक्रम्य वशे कुर्वन्ति मां भक्त्या सत्स्त्रियः सत्पतिं यथेति। यो हि यद्वशीकृतः स तदिच्छानुरूपमेव करोत्यतो न सायुज्यादिदानं किन्तु भजनानन्ददानमेव। तेषां मुख्यमिच्छा तु

> मत्सेवया प्रतीतञ्च सालोक्यादिचतुष्टयं
> नेच्छन्ति सेवया पूर्णाः कुतोऽन्यत्कालविप्लुतं।
> स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिनः
> सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत
> दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः।

इत्यादि वाक्यसहस्रैर्निर्णीयते।

## न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः ॥ ५१ ॥

ननु नाप्यत् पश्यतीत्यारभ्य सर्वस्य प्रपाठकस्य सर्वात्मभावनिरूपकत्वोक्तिरनुपपन्ना अत एवात्मपदानां पुरुषोत्तमपरत्वोक्तिश्च। यतस्तस्य मुक्तावपि कामाभावः प्रतिपाद्यतेऽत्र तु तस्य सर्वेषु कामचारो भवतीति श्रुतिः पठते। एवं सति न तन्निरूपणमेवेति* वा वाच्यं तद्भाववतोऽप्यन्यकारवत्त्वमिति वा। द्वितीयस्योक्तप्रमाणपराहतत्वेनाद्यपक्ष एवाश्रयणीय इति पूर्वपक्षं निरस्यति। नेति। तत्र हेतुमाह सामान्यादप्युपलब्धेरिति। तत्समानधर्मयोगादपि तत्प्रयोगः श्रुतावुपलभ्यतेऽनेकशोऽयतः प्रक-

* वक्तेति पाठं इति ख।

तेऽपि विविधानां लोकानां विविधसुखप्रधानत्वाद्भगवत्सम्बन्धिषु सर्व्वेषु सुखेषु कामचारो भवतीति श्रुतेरर्थोऽभ्रेयः। ननु यथा-श्रुतएवार्थोऽस्तु तथाच नहि लोकापत्तिरिति। सर्व्वाभवत इति* प्रकरणात् भाव्यत्वगतीत्यादिधर्म्मविशिष्टस्यात्मनः प्राणादि-सर्व्ववतो लोकसम्बन्धो युक्तिसहोऽपि नेति ज्ञापनाय हि शब्दः। किञ्च। एतद्वै न पश्यो मृत्युं पश्यतीति श्रुत्या यथा मृत्यु-निषेधः क्रियते तथात्मन एवेदए सर्व्वमिति श्रुत्यैवकारेणात्माति-रिक्तव्यवच्छेदः क्रियत इति मृत्युवल्लोकोऽपि न सम्भवति इत्याह। मृत्युवदिति। तत्र रोगादीनामपि दर्शननिषेधे सत्यपि मृत्यो-रेव यन्निदर्शनमुक्तं तेन भक्तानां लोकान्तरसम्बन्धस्तत्तुल्य इति ज्ञाप्यतेऽतएव नोतदुःखमिति दुःखसामान्यनिषेधोऽग्रे क्षतः।

परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्
त्वनुबन्धः ॥ ५२ ॥

अत्र हेत्वन्तरमाहाप्नोत्येव श्रीके सर्व्वमाप्नोति सर्व्वंम इति परेण पदेन शब्दस्य श्रुतिवाक्यस्य आत्मन एवेदए सर्व्वमिति यत् पूर्व्वं श्रुतिवाक्यं तद्विधत्वेव प्रतीयत इति न लोकसम्बन्धो वक्तुं शक्य इत्यर्थः। नन्वात्मन एवेदए सर्व्वमिति वाक्येनैवैतदर्थ-लाभे पुनस्तदुक्तिर्नोचितेति शङ्कायां तत्र हेतुमाह। तु शब्दः शङ्कानिरासे। भूयस्त्वाद्धेतोः उक्तेऽर्थे हेतूनां बाहुल्ये तत्तदार्थं भवतीत्याशयेनोक्तार्थस्यैव श्रीकेनानुबन्धः क्षत इत्यर्थः। यद्वा भूयः पदमाधिक्यार्थकं। तथाच सकलसाधनसाधितफला-

पेक्षया स्वयमुद्यम्य भगवता साधितफले निरवधिरुत्कर्ष इति ज्ञापनाय पुनः श्लोकेन तथेत्यर्थः।

एक आत्मनः शरीरे भावात्॥ ५३॥

उक्तेऽर्थे श्रुत्यन्तरसम्मतिमप्याह। एके शाखिनस्तैत्तिरीयाः शरीरे भक्तशरीरहृदयाकाश* इति यावत्। तत्रात्मनो भगवतो भावादाविर्भावात् तेन सह सर्व्वकामोपभोगं वदन्तीं श्रुतिं पठन्ति।

सत्यं ज्ञानमनन्तं ब्रह्म यो वेद
निहितं गुहायां परमे व्योमन्।
सोऽश्नुते सर्व्वान् कामान्
सह ब्रह्मणा विपश्चितेति।

अत्रोपक्रमे ब्रह्मविदाप्नोति परमिति श्रुतिरक्षरब्रह्मविदः परब्रह्मप्राप्तिं सामान्यत उक्ता विशेषतः कथनार्थं तदेषाभ्युक्तेति वाक्यं तद्ब्रह्मप्रतिपाद्यत्वेनाभिमुखीकृत्यैषा वक्ष्यमाणा ऋक् अक्षरब्रह्मविद्भिरुक्तेत्युक्ता तामुक्तवती सत्यं ज्ञानमिति। परब्रह्मस्वरूपमनुभवैकवेद्यं न शब्दादिभिर्वेद्यमिति ज्ञापनाय स्वयं तत्स्वरूपप्रतिपादिकायन्यमुखेनोक्तवती। अत्र ब्रह्मणा सह सर्व्वकामोपभोग उक्त इत्येतदेकवाक्यतायै सर्व्वेषु लोकेषु कामचारो भवतीति श्रुतेरप्युक्तएवार्थो मन्तव्यः।

व्यतिरेकस्तद्भावाभावित्वान्न तूपलब्धिवत्॥ ५४॥

ननु ब्रह्मविदाप्नोति परमिति श्रुत्याऽक्षरब्रह्मविदः परब्रह्मप्राप्तिरुच्यते। तथेतरसाधनसापेक्षं ब्रह्मज्ञानं परं प्रापयत्युत

* भक्तशरीरे हृदयाकाशे इति पाठान्तरं।

† ब्रह्म यो वेद निहितं परमिति श्रुतेरिति वा।

तन्निरपेक्षमिति भवति संशयः। अत्र श्रुतौ तन्मात्रोक्तेरितर-
निरपेक्षमेव तत् तथेति पूर्व्वः पक्षः। सिद्धान्तस्त्वेवं सति ज्ञान-
मार्गीयाणामपि परप्राप्तिः स्यात्। सा त्वनेकप्रमाणबाधितेति
पूर्व्वमवोचाम।

किञ्च। ज्ञानोपभूतब्रह्मापेक्षया फलात्मकस्य परस्य मुख्य-
त्वात् तदेवाभ्युक्तेति श्रुतिस्तदेव प्रतिपाद्यत्वेनाभिसन्धीकृत्य
प्रवृत्तेत्याह। तेन तत्र ब्रह्मपदे पुरुषोत्तमपरे ज्ञायेते।
तथा च गुहायां यदाविर्भूतं* परमं व्योम पुरुषोत्तमस्थानात्मक-
मक्षरात्मकं व्यापि वैकुण्ठं भवति तदा तत्र भगवानाविर्भव-
तीति तत्प्राप्तिर्भवतीत्युच्यते यो वेद निहितं गुहायां परमे
व्योमन्नित्यनेन†। तथात्र ज्ञानिनां गुहासु परमव्योमाव्यक्ति-
रेवाप्य। तत्र हेतुस्तद्भावाभावित्वादिति। यमेवैष वृणुत इति
श्रुतेर्वरणाभावे भगवद्भावस्यासम्भवात् ज्ञानिनां तथावरणा-
भावात् भगवद्विषयको भावो न भावीति तथेत्यर्थः। ननु
ज्ञानविषयत्ववदाविर्भावोऽप्यस्तु। किञ्च। तदतिरिक्तमाविर्भाव-
मपि न पश्याम इत्याशङ्कायामाह न तूपलब्धिवदिति। उप-
लब्धियथा तद्वद् गुहायामाविर्भावो न भवतीत्यर्थः। यस्मै
भक्ताय यल्लीलाविशिष्ट स्वस्वरूपमनुभावयिता प्रभुर्भवति तद्-
गुहायां तल्लीलाश्रयभूतमक्षरस्वरूप वैकुण्ठलोकवदाविर्भावय-
तीति नोक्तशङ्कालेशोऽपि। अत्र पुरुषोत्तमस्य वाच्यत्वं तत्र
ततोध.क्षकस्य तस्य तथात्वे का शङ्का नाम। एतच्चोपपादितं
पूर्वं विद्वन्मण्डने च।

ननु ज्ञानिज्ञानविषयभक्तगुहाविर्भूताक्षरयोर्भेदोऽस्ति न वा। नाद्यो मानाभावादेकत्वेनैव सर्वत्रोक्तेः। न द्वितीयः। निरवयवस्य क्वचिल्लोकरूपत्वात्तद्रूपत्वाभ्यासैकत्वानुपपत्तेरिति चेन्। नैवं। लोकरूपत्वस्य यथाज्ञातत्वे ह्ययमनुपपत्तिर्नत्वेवं किन्त्वक्षरस्वरूपमेव तथेति श्रुतिराह। अम्भस्यपारे भुवनस्य मध्य इत्युपक्रम्य तदेव ऋतं तदु भव्यमा इदन्तदक्षरे परमे व्योमन्। एतद्वै च यमन्तःसमुद्रे कवयोऽवयन्ति यदक्षरे परमे प्रजा इत्यादिरूपा। स्मृतिरपि

परस्तस्मात्तु भावोऽन्यो व्यक्तोऽव्यक्तात् सनातनः।
यः स सर्वेषु भूतेषु नश्यत्सु न विनश्यति॥
अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिं।
यं प्राप्य न निवर्त्तन्ते तद्धाम परमं मम॥

इत्यादि तु गीतासु। श्रीभागवतेऽपि

दर्शयामास तं लोकं गोपानां तमसः परं।
सत्यं ज्ञानमनन्तं यद्ब्रह्मज्योतिः सनातनं॥
यद्धि पश्यन्ति मुनयो गुणापाये समाहिताः।

इति दशमे। द्वितीये च। तस्मै स्वलोकं भगवान् सभाजितः सन्दर्शयामासेत्युपक्रम्य कालत्रिगुणमायादिसम्बन्धराहित्यमुक्त्वा भगवत्पार्षदानुक्त्वा विमानप्रमदा उक्त्वा श्रीरुक्ता। तथाच श्रुतिस्मृत्यैकवाक्यतायां तादृक्स्वरूपमेवाक्षरमिति निर्णयो भवति। एवं सति सच्चिदानन्दत्वदेशकालापरिच्छेदस्वयंप्रका-

---

* मायासम्बन्ध [illegible]।

सत्त्वगुणातीतत्वादिधर्म्मवत्त्वेनैव ज्ञानिनामक्षरविज्ञानं भक्तानामेव पुरुषोत्तमाधिष्ठानत्वेन तथेति ज्ञेयं। भक्तानाममुनिरिति श्लोकोक्तरीत्या पुरुषोत्तमस्यैव। प्रभुणा ये यथा विचारिताः सन्ति ते तथा* भवन्तीति तद्विचारएव सर्व्वेषामधिकाररूप इति ज्ञातप्रयत्नापेक्षत्वमिति निर्णीतं†। अस्मिन्नर्थे श्रौतलिङ्गन्यायकथनार्थं निदर्शनेनोत्तरं पठति।

अङ्गावबद्धास्तु न शाखासु हि
प्रतिवेदं ॥ ५५ ॥

यागे तत्तदृत्विक्कर्त्तव्यान्यग्न्याधानादीन्यङ्गानि। तत्रावबद्धाः सर्व्वएवर्त्विजो यजमानेन। अवबन्धनं नामाध्वर्युं त्वा‡ वृणे होतारं त्वा वृणे§ उद्गातारं त्वा वृणे¶ इत्यादि रूपं वरणमेवान्यथा सर्व्वकर्म्मविदुषां तत्तत्क्रियापटूनामेकस्याधिकारो नान्यस्येति नियमो न स्यात्। तस्य तस्य तथा वरणे तु यजमानेच्छैव हेतुः। ते च तदा न सर्व्वासु शाखासु विहितान्यङ्गानि कर्त्तुं सर्व्वे|| शक्ताः किन्तु यजमानवरणनियमिता एव तथा। तत्र हेतुमाह। हि यतः कारणात् प्रतिवेदं नियमितान्यङ्गानि हौत्रमृचाध्वर्य्यवादि यजुषौद्गात्रं साम्नेति। तथाच-

---

* ते तथा इति ख।

† निर्णीतिः इति ख।

‡ त्वां वृणे इति वा पाठः।

§ होतारं त्वां वृणे इति वा पाठः।

¶ उद्गातारं त्वां वृणे इति वा पाठः।

|| सर्व्वेऽपीति ख।

लौकिके वैदिके कर्म्मणि जीवेच्छा नियामिका भवति अत्र तत्र किमु वाच्यं प्रतिलोमरूपं* सावकाशममितब्रह्माण्डस्थितिमतस्तदीयमितुरिच्छैव नियामिका तत्तत्साधनफलसम्पत्ताविति ।

मन्त्रादिवद्वाऽविरोधः ॥ ५६ ॥

ननु पूर्व्वं कर्म्मज्ञाननिष्ठानामपि पुंसामग्रे भक्तिमार्गीयत्वं यत्र भवति तत्र तथैव भगवद्वरणमिति हि सिद्धान्तः† । ऋत्विजस्त्वेकस्मिन् याग एकत्र वृतत्व नापरत्रापि तथेति विरुद्धो दृष्टान्त इत्याशङ्क्या निरर्थनान्तरमाह । यथैकएव कश्चिन् मन्त्रो बहुषु कर्म्मसु सम्बध्यते कश्चित् द्वयोः कश्चिदेकस्मिन्नेव तथैव विधानात् तथा अत्रापीत्यर्थः । आदिपदात् कर्म्मोच्यते । यत्र साम्येनैव नित्यकर्म्मनिर्वाहस्तत्र कामितार्थसाधकत्व‡प्रत्यवाय-परीहारेऽप्येकमेव तदुपयुज्यते । तथाच सर्व्वतोमुखेऽनेक-होतृप्रवरेऽध्वर्य्युप्रवरे च ब्रह्मणि देवाः पितर इत्यादिना यजमानकर्तृकानुमन्त्रण§मिव सर्व्वत्र सम्बध्यते तथैव विधेस्तथा-त्रापि तावद्विधं यदेकमेव वरणं तेन तत्तन्निष्ठानन्तरं भक्ति-निष्ठेति न दृष्टान्तविरोध इत्यर्थः । प्रणवोमित्युदाहृत्यैव मन्त्राणामुच्चारणान्मन्त्रादिरोङ्कारः स यथा ब्रह्मात्मकत्वेनैक एव सर्व्वमन्त्रेषु सम्बध्यते तथा वरणमपीति तथेत्यर्थः¶ । यद्वा-पीतरनिष्ठानन्तरभूतभक्तिनिष्ठायतो वरणं तथाभूतमेकमेवेति

---

* प्रतिलोमरूपं इति खं ।

† इति सिद्धान्तः इति खं ।

‡ साधकत्वं इति खं ।

§ अनुमन्त्रणमेकमेव इति खं ।

¶ वरणमपीत्यर्थः इति खं ।

नोक्तदोषस्तथाप्युत्कृष्टमार्गे ततश्च नीचकक्षापादानमनुचित-
मिति मत्वा पक्षान्तरमुक्तं। वस्तुतस्तु साधनमर्य्यादया यत्र
भक्तिर्दित्सिता तत्र तथेति नानुपपत्तिः काचित्।

भूम्नः क्रतुवज्ज्यायस्त्वं तथाहि दर्शयति॥ ५७॥

ननु सुखस्वरूपजिज्ञासायां यो वै भूमा तत् सुखमित्युक्तं।
भूमस्वरूपजिज्ञासायां यत्र नान्यत् पश्यतीत्यादिना तन्निरू-
पित सर्वात्मभावस्वरूपमिति यदुक्तं तन्नोपपद्यते। भूमा
हि सुखरूपतोच्यते। सर्वात्मभावे तु विरहभावे दुःसह-
दुःखानुभवः श्रूयते तेन मोक्षसुखमेव यो वै भूमेत्यादिनोच्यते।
यो वै भूमा तदमृतमिति वाक्याच। अग्रे च स वा एष एवं
पश्यन्नित्याद्युक्ता तस्य सर्व्वेषु लोकेषु कामचारो भवतीति फल-
मुच्यते। तच्च मोक्षानन्तरमसम्भाव्यतः स भावो मोक्षोऽत्रोच्यत
इति संशयः। तत्र कामचारोक्तेर्मुक्तिपूर्व्वदशायां तन्माहात्म्य-
निरूपणार्थत्वादमृतशब्दाच्च मुक्तिरेव भूमपदेनोच्यत इति पूर्व्वः
पक्षः। तत्र भूमशब्देन स भावएवोच्यत इति सिद्धान्तस्तत्र
दुःखदर्शनानुपपत्त्या सर्व्वाधिकत्वलक्षणं भूमत्वमनुपपन्नमिति
शङ्कां परिहरति। भूम्नः सर्व्वात्मभावस्य ज्यायस्त्वं सर्व्वस्मान्
मन्तव्यं। तत्रोक्तानुपपत्तिपरिहारार्थं दृष्टान्तमाह। क्रतुवदिति।
दर्शपूर्णमासप्रकरणे तैत्तिरीयके पठ्यते परमेष्ठिनो वा एष
यज्ञोऽग्र आसीत्तेन स परमां काष्ठामगच्छदित्युपक्रम्य य एवं
विद्वान् दर्शपूर्णमासौ यजते परमामेव काष्ठां गच्छतीति। यथा
व्रतादिदुःखात्मकत्वेऽपि परमकाष्ठाप्रापणफलसमकत्वेन दर्शपूर्ण-
मासयोः सर्व्वक्रतुभ्योऽधिकत्वं वक्तुमग्र आसीदिति स्तूयते तथा

दुःखहेतुत्वेऽप्यनन्यलभ्यसाक्षात्पुरुषोत्तमानन्दप्राप्तिहेतुत्वेन सुख-रूपत्वमुच्यत इत्यन्येभ्यः सर्व्वेभ्यो ज्यायस्त्वं मन्तव्यमित्यर्थः । अत्रोपपत्तिमाह । तथाहि दर्शयति । श्रुतिस्तु स एवाधस्तादित्या-द्युक्ताथाहङ्कारादेश इत्याद्युक्त्वात्मादेश इत्यादुक्तवत्यथ एतस्यैवात्मनएव प्राणाद्याशरादिसर्व्वमिति च दर्शयति । एतत् सर्व्वात्मभाववत्त्वेव सर्व्वमुपपद्यते न तु मुक्तस्य । वृत्तिभेदा-भावात् प्राणाद्यभावाच्च । जीवन्मुक्तिदशायां प्राचीनानामेव सत्त्वादात्मनः प्राणा इत्यादि न वदेत् ।

यद्वा । नतु लोकेऽपि शृङ्गाररसभाववति पुंसि नार्य्याञ्च त्वदुक्तभावसम्बन्धिव्यभिचारिभावाः श्रूयन्ते सैव सर्व्वत्र सएव सर्व्वत्रेति एवं सति लौकिकसधर्म्मवत्त्वात्* त्वदुक्तभावस्यालौ-किकज्ञानादिभ्य आधिक्यं वक्तुं शक्यमलौकिकविषयत्वाल्लौकि-कत्वमपि न तथेति भवति संशयः । तत्र मनुजत्वरिपुत्वादि-ज्ञानानामिव कामादिभावेन स्नेहभावस्यापि सम्भवादस्या-लौकिकत्वमिति पूर्व्वः पक्षः । सिद्धान्तस्तस्य भावस्य लौकि-केभ्यो ज्यायस्त्वं मन्तव्यं । ननूक्तं लोकसाधारण्यं बाधकमिति शङ्कानिरासाय निदर्शनमाह । क्रतुवदिति । यथा दर्शा-दिषु दोहनाधिश्रयणान्तव्रीह्यवघातादिपुरोडाशभक्षणादीनां लौकिकक्रियातुल्यत्वेन दर्शनेऽपि न लौकिकत्वं लौकिकप्रमाणा-प्राप्तत्वादलौकिकतत्प्राप्तत्वात् तथोक्तप्रमाणरूपवरणलभ्यत्वेन श्रुत्युक्तत्वाच्च लौकिकत्वमस्य भावस्येति दिक् । वस्तुतस्तु प्राम-

* सधर्म्मकत्वात् इति खं ।

सिंहस्य सिंहस्वरूपत्वेऽपि* न तादृग्रूपं वक्तुं शक्यं तथा लौकिक-पुंसि नार्यां वा तदाभासो रसशास्त्रे निरूप्यते तद्दृष्टान्तेन भगवद्रायवद्भक्तरीतिभावनार्थं नत्वृषीणां लौकिके तात्पर्यं भवितुमर्हति। अत्रोपपत्तिमाह तथाहीत्यादि। पूर्वोक्तभाववत आत्मनः प्राणादिकं सर्व्वं दर्शयति श्रुतिस्तस्य ह्वा एतस्यैवं पश्यत इत्यादिना। इतः पूर्व्वमपि स वा एष एवं पश्यन्नित्युप-क्रम्यात्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराड्भवति सर्व्वेषु लोकेषु कामचारो भवतीति श्रुतिश्च। न हि लौकएवं सम्भवत्यात्मपदानां भगवद्वाचकत्वादिति सर्व्वात्मविषयकभाव-स्यैव तथात्वं युक्तमिति चोपपत्तिर्हिशब्देन सूच्यते।

## नाना शब्दादिभेदात् ॥ ५८ ॥

पूर्वाधिकरणे सर्व्वात्मभावस्वरूपादिनिर्णयं कृतवान्। अथ मत्स्यादिरूपाणां भगवदवतारत्व† मविशिष्टमिति सर्व्वेषां समस्यैवोपासना कार्य्या उत पार्थक्येनेति विचारयति। तत्रो-पास्याभेदेऽपि रूपभेदादेकत्रोपासकस्यान्यत्रानुपासनलक्षणाव-ज्ञाभयादुक्ता प्रत्यक्षिविशिष्टत्वादपि समस्यैव सा कार्य्येति प्राप्ते सिद्धान्तमाह। सर्व्वेष्ववतारेषु नानैवोपासना कार्य्या। तत्र हेतुः शब्दादिभेदादिति। तत्तत्स्वरूपवाचकशब्दानां मन्त्राणां चादिपदादाकारकर्म्मणाञ्च भेदादित्यर्थः। एतेनैव मिथोविरुद्धा-नामाकारकर्म्मणामेकत्र भावनस्याशक्यत्वमयुक्तत्वं चेति भावः सूचितः।

* सिंहरूपत्वे ऽपि इति ख ।

† भवतारत्वं इति वा पाठ ।

## विकल्पोऽविशिष्टफलत्वात् ॥ ५९ ॥

पार्थक्येनोपासनानि कर्त्तव्यानीति स्थिते विचार्य्यते। किं अग्निहोत्रदर्शपूर्णमासादिवदेषां समुच्चय उत विकल्प इति। तत्र विधिफलयोः समानत्वात् समुच्चय इतिप्राप्ते निर्णयमाह। उपासनानां विकल्पएव। तत्र हेतुरविशिष्टफलत्वात्। मुक्तिफलकत्वं हि सर्व्वेषामुपासनानामविशिष्टं। एवं सत्येकेनैव तत्सिद्धावपरस्याप्रयोजकत्वादग्निहोत्रादिवन्नियततावोधकश्रुत्यभावात् तदर्थिनो विकल्पएव।

## काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्व्वहेत्वभावात् ॥ ६० ॥

येषु तूपासनेषु भिन्नानि * फलान्युच्यन्ते तत्र त्वनेकफलार्थिनस्तत्तत्फलकोपासनानि समुच्चीयेरन्नविशिष्टफलत्वाभावात्। यत्र त्वेकस्यैवोपासनस्य स्वकामितानेकत्वं † श्रूयते तत्र तथैव चेदुपासनं करोति तदा न समुच्चीयेरन्नपि स्वकामितैच्छेदान्तरस्य तदन्यफलवैशिष्टेनाविशिष्टफलत्वा ‡ भावादिति पूर्व्वहेत्वभावादिति क्लिष्ट§प्रयोगाभिप्रायेणोक्तमिति ज्ञेयं। अथवा कामैक्ये नियतफलकानि तानि न समुच्चीयेरन्। अत्र हेतुः स्पष्टः।

---

* भिन्नानि भिन्नानि फलानीति ख ।

† अनेकफलकत्वमिति ख ।

‡ फलफलाभावादिति ख ।

§ अतिक्लिष्ट इति ख ।

## अङ्गेषु यथाश्रयभावात् ॥ ६१ ॥

प्रधानेषु निर्णयमुक्त्वा अङ्गेषु तमाह। एकार्थसाधकाना-मुपासनानां भेदेनाङ्गभेदेऽप्येकतरोपासने फलैक्यादङ्गानि तत्र समुच्चेयेरन्नवेति संशये निर्णयमाह। उपासनाङ्गानान्तदेवा-श्रयस्तथा च यदङ्गं यदुपासनाश्रितं तत्रैव तस्य भाव इत्यर्थः। अत्र हेतुमाह।

## शिष्टेश्च ॥ ६२ ॥

तदुपासनं तत्तदङ्गविशिष्टमेव वेदे शिष्यत इति तथेत्यर्थः। चकारादतिरिक्तकरणे प्रायश्चित्तोक्तिरपि बाधिकेति * सूच्यते।

## समाहारात् ॥ ६३ ॥

कर्ममार्गीयोपासने निर्णयमुक्त्वा ज्ञानमार्गीयोपासने तमाह। अथर्वोपनिषत्सु नृसिंहोपासनादिषु मत्स्यकूर्मादि-रूपत्वेनापि स्तुतिः श्रूयते। श्रीभागवते च नमस्ते रघुवर्य्या-येत्यादिरूपा स्तुतिर्व्रजनाथे। एवं सति रूपभेदेऽपि भगवद-वतारत्वाविशिष्टत्वादेकस्मिन् रूपे रूपान्तरसमाहारो दृश्यत इति सर्व्वरूपत्वेनैकत्रोपासनमपि साध्वित्यर्थः।

## गुणसाधारण्यश्रुतेश्च ॥ ६४ ॥

ऐश्वर्य्यवीर्य्यादिगुणानां सर्व्वेष्ववतारेषु साधारण्यं श्रूयते †। तेन धर्म्मिधर्म्माणामैक्यात् पूर्व्वोक्तं साध्वित्यर्थः ‡।

---

* अतिशयिका इति ख।

† साधारण्ये श्रूयते इति ख।

‡ पूर्व्वोक्तमाधुरिति ख।

न वा, तत्सहभावाश्रुतेः ॥ ६५ ॥

नन्वेवमुपासनं नित्यमुतविकल्पिकमिति * संशयः। उक्तरीत्या नित्यत्वे प्राप्ते तन्निषेधमाह। नेति। किन्तु वा विकल्प एवैवमुपासनं ऐच्छिकत्वम् हेतुमाह सहभावाश्रुतेरिति। नियमतस्तेषां रूपाणां सहभावश्रवणं चेत् स्यात् तदा स्यात् तथोपासनस्य नित्यता, तत्त्वेवमतो विकल्पएवेत्यर्थः।

दर्शनाच्च ॥ ६६ ॥

योऽपि रूपान्तरसमाहारपूर्व्वकमुपास्ते सोऽप्येकं रूपमुपास्यत्वेन मत्वा तत्तथोपास्त इति फलं तस्यैकस्यैव रूपस्य दर्शनं भवति न तु सर्व्वेषामितोऽपि हेतोर्विकल्पएवेत्यर्थः। एतद्दृष्टान्तेन यस्मिन् रूपे यादृग्धर्म्मवत्त्वं श्रूयते तादृग्धर्म्मविशिष्टमेवैकं ‡ रूपमुपास्यमिति व्यासहृदयमिति ज्ञायते। उपासनानिर्णयान्ते दर्शनात्मकहेतूक्त्या सर्व्वोपासनानां भगवत्साक्षात्कारः फलमिति ज्ञाप्यते §। माहात्म्यज्ञापनार्थं परं सर्व्वावतारूपत्वं यथार्थमेव केचिद्‌ज्ञाप्यते। यथार्थत्वात् तदृश्यविरोधादिति ¶ ध्येयम् ॥

इति श्रीवेदव्यासमतवर्त्ति ॥ श्रीवल्लभाचार्य्यविरचिते व्याससूत्राणुभाष्ये तृतीयाध्यायस्य तृतीयः पादः समाप्तः।

---

* वैकल्पिकमिति वा पाठः।

† पुस्तकान्तरे समाहार समाहार इति द्विरुक्तिरस्ति।

‡ एवैकं इति ख°।

§ चन्द्रते इत्यधिकं।

¶ अविरोधीति ख°।

‖ पुस्तकान्तरे विद्वन्मानिमतवर्त्तिनि इत्यस्ति।

## चतुर्थः पादः।

### पुरुषार्थोऽतः शब्दादिति बादरायणः॥ १॥

उपासनाभेदेऽप्युपास्याभेदात् छान्दोग्यान्तरोक्तधर्म्माणामप्युपसंहारः कर्त्तुमुचित इति पूर्व्वपादे निरूपितमिति तत्प्रायेणोत्तरकाण्डप्रतिपाद्यब्रह्मफलकसर्व्वात्मभावेऽपि पूर्व्वकाण्डप्रतिपादितकर्म्मणामुपसंहारः प्राप्नोति न वेत्यधुना विचार्य्यते। विधिपक्षे तत्सहकृतस्यास्य फलसाधकत्वमिति सिध्यति। निषेधपक्षे तु केवलस्यैतस्यैव पक्षं सिद्धान्तत्वेनाह। पुरुषार्थ इत्यादिना। सिद्धान्ते ज्ञाते तत्र पूर्व्वपक्षसम्भव इत्यादौ तमेवाह। अतः सर्व्वात्मभावादेव केवलात् पुरुषार्थः सिध्यति। कुतः। शब्दात् श्रुतेरित्यर्थः। श्रुतिस्तु नायमात्मा प्रवचनेनेत्युपक्रम्य यमेवैष वृणुते इत्यादिका ब्रह्मविदाप्नोति परमित्यादिका। तमेवं विद्वानमृत इह भवति। सनत्कुमारनारदसंवादे यत्र नान्यत् पश्यतीत्याद्यात्मिका छान्दोग्यश्रुतिश्च। एतदादिश्रुतिषु पूर्व्वोक्तरीत्या केवलस्यैव भगवद्भावस्य फलसाधकत्वं श्रूयत इति तथा। अत्र फलमत उपपत्तेरित्यत्रैवोपपत्तिहेतुत्वेनानुक्त्वा श्रुतिपदस्यानुक्त्वा शब्दपदं यदुक्तवांस्तेन श्रुतिस्मृत्यात्मकः सर्व्वोऽपि प्रमाणशब्दो हेतुत्वेन व्यासाभिमत इति ज्ञायते। तेन

केवलेन हि भावेन गोप्यो गावः खगा मृगाः।
येऽन्ये मूढधियो नागाः सिद्धा मामीयुरञ्जसा॥
यन्न योगेन सांख्येन दानव्रततपोऽध्वरैः।
व्याख्यास्वाध्यायसंन्यासैः प्राप्नुयाद्यत्नवानपि॥

इत्यादिरूपा स्मृतिरपि संगच्छते। एतेन तुल्यादिप्रमाणवादिनामिदमेवाभिमतं तदितरवादिनामितोऽन्यदिति तेषामप्रामाणिकत्वं ज्ञाप्यते। अतएव स्वनाम गृहीतं। स्वस्य वेदव्यासकर्तृत्वेन तथैव यतो भवः।

अपरञ्च। वैदिकसिद्धान्ते भगवत्स्वरूपस्यैव स्वतन्त्रपुरुषार्थत्वात् मायातत्स्वरूपायां मुक्तनिच्छाकथनाभुक्तीमसत्यव्यपदेशाच मुक्तेरपरमपुरुषार्थत्वात् * मा भवतु नामान्यैः साधनैः। वस्तुतः परमपुरुषार्थो य उक्तरूपः सतु सर्व्वात्मभावेनैवेति ज्ञापनाय फलपदमनुक्त्वा पुरुषार्थपदमुक्तं। एवं सत्यस्य सूत्रस्यार्थान्तरमपि व्यासाभिमतमिति ज्ञायते। तथा सत्ययं श्लिष्टः प्रयोगः। तथाहि। पुरुषार्थो भगवानेव। कुतः। अतःशब्दात्। अतःपदविशिष्टश्रुतिवाक्यादित्यर्थः। तैत्तिरीयोपनिषत्सु पठ्यते

> अतःपरं नान्यदणीयसं हि
> परात्परं यन्महतो महान्तं।
> यदेकमव्यक्तमनन्तरूपं
> विश्वं पुराणन्तमसः परस्तादिति ॥

अथात्र प्रत्यवतिष्ठते †।

**शेषत्वात् पुरुषार्थवादो यथान्येष्विति जैमिनिः ॥ २ ॥**

विष्णोरिज्यत्वेन कर्म्मशेषत्वात् तत्स्वरूपध्यानपूर्व्वको यागः

---

* पुरुषार्थं तुल्यं इति पा।

† इत्थमिदमं इति पा।

फलातिशयहेतुरिति तन्माहात्म्यमुच्यत इत्यर्थवादरूपं तत्। अत्र दृष्टान्तमाह। यथान्येष्विति। अन्येषु द्रव्यसंस्कारकर्मसु यस्य पर्णमयी जुहूर्भवति न पापं श्लोकं शृणोति। यदाङ्क्ते* चक्षुरेव भ्रातृव्यस्य वृङ्क्ते यत्प्रयाजानूयाजा† इज्यन्ते वर्म वा‡ एतद्यज्ञस्य क्रियते कर्म§ यजमानस्य भ्रातृव्याभिभूत्यै इत्येवं जातीयिका फलश्रुतिरर्थवादस्तद्वदित्यर्थः।

ननु तमेव विदित्वा मुनिर्भवत्येतमेव प्रव्राजिनो लोकमीप्सन्तः प्रव्रजन्ति। एतद्ध स्म वै तत् पूर्व्वे विद्वांसः... एतद्ध स्म वै ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थाय भिक्षाचर्य्यं¶ चरन्तीति श्रुतिर्भगवत्‌ज्ञानवतः सर्व्वत्यागं वदतीति न त्वदुक्तं साधीय इत्यत उत्तरं पठति।

## आचारदर्शनात्॥ ३॥

ब्रह्मविदामपि वसिष्ठादीनामग्निहोत्रादिकरणं जैमिनिः पश्यति तदाचारं प्रामाणिकमिति च मनुत इति तन्मतमनुवदन्निममप्यनुक्तवान् व्यासः। ब्रह्मविदां त्यागावश्यकत्वे गार्हस्थ्यमितेषां न स्यादिति भावः। उक्तश्रुतिस्तु कर्मण्यशक्तानां तेषां त्यागमनुवदति। लोकैषणायाश्च व्युत्थायेति श्रुतेर्लोकसंग्रहार्थं तत्करणमिति न वक्तुं शक्यं।

* पुस्तकान्तरे यदिति पदं नास्ति।
† पुस्तकान्तरे कर्म इति पदं नास्ति।
‡ यत्प्रयाजानुयाजा इति वा पाठः।
§ वर्म ह वा इति च पाठान्तर।
¶ चर भिक्षाचर्य्यं इति वा।

तच्छ्रुतेः ॥ ४ ॥

ब्रह्मविदः कर्माचारनिरूपकश्रुतेरित्यर्थः । सा च जनकोह वैदेहो बहुदक्षिणेन यज्ञेनेजे इत्यादिरूपा । तथाच ज्ञानेनैवार्थसिद्धिश्चेत् स्यात् तदा तद्वत आयाससाध्ये कर्मणि प्रवृत्तिर्न स्यादिति भावः ।

समन्वारम्भणात् ॥ ५ ॥

तं विद्याकर्मणी समन्वारभेते इति श्रुतिः फलारम्भे विद्याकर्मणोः साहित्यं दर्शयतीति न स्वातन्त्र्यं विद्यायाः ।

तद्वतो विधानात् ॥ ६ ॥

ब्रह्मिष्ठो ब्रह्मा दर्शपूर्णमासयोस्तं वृणीत इति कल्पश्रुत्या ब्रह्मविदो ब्रह्मत्वेन वरणं विधीयत इति ब्रह्मज्ञानस्यार्त्विज्याधिकारसम्पादकत्वात् कर्मशेषत्वमेवेत्यर्थः ।

ननु यदहरेव विरजेत् तदहरेव प्रव्रजेत् । गृहाद्वा प्रव्रजेद्वनाद्वेत्यादिश्रुतिभ्यो विहितत्वाविशेषात् कर्मतत्त्यागयोरैच्छिको विकल्पोऽङ्गीकार्योऽतो न शेषशेषिभाव इत्यत उत्तरं पठति ।

नियमाच्च ॥ ७ ॥

आश्विनं धूम्रललाममालभेत यो दुर्ब्राह्मणः सोमं पिपासेत् । ऐन्द्राग्नं पुनरुत्सृष्टमालभेत य आ * तृतीयात् पुरुषात् सोमं न पिबेद्विच्छिन्नो वा एतस्य सोमपीथो यो ब्राह्मणः सन् आतृतीयात् पुरुषात् सोमं न पिबति । यावज्जीवमग्निहोत्रं जुहुयादित्यादिश्रुतिभ्यो यथा कर्मकरणे नियमः श्रूयते न तथा तत्त्याग इति नोक्तपक्षः साधुरित्यर्थः । चकारात्

---

* यथातृतीयादिति ख ।

नियतस्य तु सन्न्यासः कर्मणो नोपपद्यते।
मोहात्तस्य परित्यागस्तामसः परिकीर्त्तितः॥

इत्यादिरूपा स्मृतिः समुच्चीयते। त्यागविधिरपक्वविषय इत्युक्तमिति प्राप्ते प्रतिवदति।

अधिकोपदेशात् तु बादरायणस्यैवं
तद्दर्शनात्॥ ८॥

तु शब्दः पूर्व्वपक्षं व्यवच्छिनत्ति। यदुक्तं शेषत्वात् पुरुषार्थवाद इति तन्नोपपद्यते। कुतः। अधिकोपदेशात्। कर्मसाम्यमपि न वक्तुं शक्यं यत्र तत्र तच्छेषत्वं दूरापास्तं। यत ईश्वरः कर्मणः सकाशादधिक उदिश्यते*। तथाहि।

स वा अयमात्मा सर्व्वस्य वशी सर्व्वस्येशानः सर्व्वस्याधिपतिः सर्व्वमिदं प्रशास्ति यदिदं किञ्च।

† स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयान् इत्युपक्रम्यापि पठ्यते।

तमेतं वेदानुवचनेन विविदिषन्ति ब्रह्मचर्य्येण तपसा श्रद्धया यज्ञेनानाशकेन चैतमेव विदित्वा मुनिर्भवति‡ तमेव प्रव्राजिनो लोकमभीप्सन्तः प्रव्रजन्तीत्यादि।

एवं सति यत् ज्ञानसाधनत्वं यज्ञे तस्य यज्ञशेषत्वं कथं स्यात् किन्तु यज्ञस्य तद्वेदनशेषत्वं। एतेनेज्यत्वेन तच्छेषत्वं प्रत्युक्तं वेदितव्यं। तज्ज्ञानस्य यागपूर्व्वाङ्गत्वात् तद्विशिष्टस्य

* उपदिश्यते इति खं।
† न स साधुना इति ख।
‡ मुनिर्भवन्ति इति खं।

तस्य ब्रह्मज्ञानसाधनत्वात्। न च पूर्वं सामान्यत इत्यज्ञानमासीत् यज्ञेन विशेषतो ज्ञाने सति पुनर्यज्ञकरणे पूर्णं कर्मफलं भावीति* न तच्छेषत्वमिति वाच्यं। तमेव विदित्वा मुनिर्भवत्येतमेव प्रव्राजिनो लोकमभीप्सन्तः† प्रव्रजन्तीति श्रुतेस्तद्वेदनस्य गार्हस्थ्यविरोधित्वेन तदङ्गभावात्। यच्च साध्यसाधनकर्मफलसम्बन्धरहितस्तस्य कर्तृत्वेन तथात्वमनुपपन्नमतो जीवात्मन एव तथात्वं मतु परस्य। न चैतयोर्वास्तवाभेदान्नैवमिति वाच्यं। वास्तवाभेदाज्जीवेऽप्युक्तश्रुतिभ्यस्तथात्वस्य सुवचत्वात्। वास्तवाभेदस्य पूर्वमेव निरस्तत्वात् तमादाय ये पूर्वपक्षास्ते पूर्वपक्षा एवेत्यलमुक्त्या।

न कर्मणा न प्रजया धनेन
त्यागेनैके अमृतत्वमानशुः।
परेण नाकं निहितं गुहायां
विभ्राजते यद्यतयो§ विशन्ति॥

इति श्रुत्या कर्मप्रजाधनैर्मोक्षाप्राप्तिमुक्त्वा त्यागेन तत्प्राप्तिरुच्यते। त्यागविषयस्यान्यस्यानुक्त्या¶ सान्निध्यात् कर्मादीनामेव त्यागोऽभिप्रेतः। तथाच मुक्तोपसृप्यत्वाद्भगवत उक्तसाधनेन मुक्ताः सन्तो नाकं परेण विद्यमानमपि भक्त्या गुहायां विभ्राजते तत् यस्मात् परन्नापरमस्तीत्यादिनोपक्रान्तत्वात्

---

* भवतीति इति ख।
† अभीप्सन्त इति ख।
‡ [illegible] इति पुस्तकान्तरेषु दृश्यते।
§ यतय इति ख।
¶ त्यागविषयस्यानुक्त्या इति ख।

पुरुषोत्तमस्वरूपं यतयः विरहभावेन तद्विना स्वासुमशक्तास्तत्-माधुर्यं यतमाना विशन्तीति भक्तिमार्गीयाणां फलमुक्तं। अग्रे वेदान्तविज्ञानेत्यृचा ज्ञानमार्गीयाणां फलमुक्तं। अन्यथा पौनरुक्त्यं स्यात्। एवं कर्मज्ञानाभ्यामधिको भक्तिमार्गस्तत्प्राप्यः पुरुषोत्तमश्च श्रुतावुपदिश्यत इति तदेकप्रमाणवादिनो * बादरायणस्य मतमप्येवं जैमिनिमताद्धिकमित्यर्थः।

एवं श्रुत्या परमतं निरस्य शिष्यविश्वासार्थं स्वानुभवमपि प्रमाणयति। तद्दर्शनादिति। उक्ताधिक्यवत्त्वेनैव † भगवतो भक्तिमार्गस्य चानुभवादित्यर्थः। श्रुतयोऽधिकमात्मानं दर्शयन्तीति न व्याख्यानमुपदेशपदेन पौनरुक्त्यापत्तेः। तन्मतमनिरस्य तस्मात् स्वमतस्याधिक्यमावेदयता निष्कामकर्मणश्चित्तशुद्धिहेतुत्वेन परम्पराज्ञानमार्गोपयोगाङ्गीकारः‡ सूच्यते। पुष्टिभक्तिमार्गे तु सोऽपि न यस्य योगेनेति वाक्यात्। एवं सति स कर्मशेषत्वगन्धोऽपि ब्रह्मणीति भावः।

तुल्यं दर्शनं ॥ ९ ॥

यदुक्तमाचारदर्शनात् कर्मशेषत्वं ब्रह्मण इति तदपि न साधीयस्तुल्यं यतो दर्शनं। ब्रह्मविदां शुकदत्तात्रेयजड़भरतादीनां त्यागदर्शनात्। एतेन यद्विदां कर्मत्यागस्तस्य कर्मशेषत्वं कथं भवितुमपि शक्यमिति भावः सूच्यते। एतेन कर्मण्यशक्तान् प्रति त्यागविधिरिति निरस्तं। शुकादीनामतथात्वात्।

---

* तदेकप्रमाणवादिन इति ख।

† उक्ताधिकवत्त्वेन इति ख।

‡ चन सूच्यते इति ख।

ननु जनकोह वैदेह इति श्रुतिसाहाय्यादाचारदर्शनं त्याग-दर्शनादधिकबलमित्यत उत्तरं पठति ।

असार्व्वत्रिकी ॥ १० ॥

ब्रह्मविदां सर्व्वेषामेतदाचारस्तेविकल्पयेच्छ्रुतिस्तदा स्युक्तं स्यात्तैवं* यत एतादृशी श्रुतिर्ब्रह्मवित्सु सर्व्वेषु न श्रूयते । तथाहि ।

एतद्ध स्म वै तद्विद्वांस आह ऋषयः कावषेयाः किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे एतद्ध स्म वै तत् पूर्व्वे विद्वांसोऽग्निहोत्रं न जुहवाञ्चक्रिरे । एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्य्यं चरन्ति । एतावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्यः प्रवव्राजेत्यादि श्रुतयो ब्रह्मविदां कर्म्मत्यागमेवानुवदन्ति । अतस्त्यागपक्ष एव बलवान् ‡ ।

ननु ब्रह्मविद्याविशेषेऽप्येकेषां कर्म्मकतिरेकेषां तत्त्याग इति विभागः कुत इत्याशङ्क्य तत्र हेतुमाह ।

विभागः शतवत् ॥ ११ ॥

एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति श्रुतेर्मानुषानन्दमारभ्य ब्रह्मानन्दपर्य्यन्तं येऽगणिता आनन्दास्ते

---

* स्यात्तैवमिति ख' ।

† भिक्षैषणाया इति ख पुस्तके नास्ति ।

‡ एवं बलवान इति ख' ।

§ ब्रह्मविद्याविशेषेऽपीति ख' ।

सर्व्वे पुरुषोत्तमानन्दात्मका* एव। एवं सति येषु यावानानन्दो दत्तोऽस्ति तावन्तं तन्निरूपयन्त्यधिकारतारतम्येन तद्दानमिति ज्ञापनाय शतोत्तरं शतोत्तरमानन्दं श्रुतिर्न्निरूपयत् अतएव पुरुषायुःसंख्यासमानसंख्ययैवोत्कर्षं। उक्तत्वेन पुरुषधर्म्मस्याधिकारस्यैवोत्कर्षः सूच्यते। एवं भक्तेऽप्यन्यभावराहित्यतारतम्येन भगवद्भावतारतम्यं, अत्र त्वनुग्रह एवाधिकाररूप इति तदुत्कर्षे त्यागस्यादत्युत्कर्षे नेत्यर्थः। यथोक्तं तद्वतो विधानादिति तत्राह।

अध्ययनमात्रवतः ॥ १२ ॥

यदुक्तं ब्रह्मविदो ब्रह्मेत्यादि तत्र ब्रह्मशब्देन वेदएवोच्यते नतु परब्रह्म तं† ब्रह्मत्वेनाविज्ञातशब्दरूपत्वं ज्ञात्वा सततं तदध्ययनमात्रं यः करोति नतु तेन किञ्चित् कामयते तस्याधिकारो ब्रह्मत्वाल्लिङ्ग्य इत्युच्यत इति न ब्रह्मज्ञानस्य कर्म्मशेषत्वं। प्रत्ययस्यातिशायनार्थकत्वादतिशयेन ब्रह्मरूपस्तदैव भवतीति युक्तं तस्य तदाल्लिङ्ग्यमेवं सति ब्रह्मपदं ब्राह्मणपरमपि सङ्गच्छते। अथवा वेदाध्ययनमात्रवतः कर्म्मण्यधिकारो नतु ब्रह्मविदोऽपीत्यर्थः। न च तदन्तःपातित्वेन वेदान्तानामप्यध्ययनस्यावश्यकत्वे तत्प्रतिपाद्यब्रह्मज्ञानस्याप्यवर्ज्जनीयत्वात् तद्वतएव तत्राधिकार इति वाच्यं। शाब्दपरोक्षज्ञानस्य ब्रह्मज्ञानत्वाभावात्। नहि सितामधुरेति शाब्दज्ञानमात्रवांस्तन्माधुर्य्यज्ञो भवति। तथा सति पित्तोपशमादिकं§ तत्कार्य्यमपि स्यात्

---

* सर्व्वपुरुषोत्तमानन्दात्मका इति खं।

† तत्कार्यं इति खं।

‡ तथा तस्य ब्रह्मत्वेनेति खं।

§ पित्तोपशमादिकमिति खं।

न्त्येवं । अतएव छान्दोग्ये सनत्कुमारेण यद्वेत्थ तेन मोपसीदे-त्युक्तो नारद ऋग्वेदमारभ्य सर्पदेवजन*विद्यापर्य्यन्तं स्वाधीतमुक्त्वाह सोऽहं मन्त्रविदेवास्मि नात्मविदित्यतोऽपरोक्षब्रह्मज्ञानमेव ब्रह्मज्ञानमुच्यते । अतएव तैत्तिरीयोपनिषत्सु वेदान्तविज्ञानसुनिश्चितार्था इति पठ्यते । विज्ञानमनुभवएव न तु ज्ञानमात्रमतो दूरापास्तं कर्म्मशेषत्वं ब्रह्मणः । तं विद्याकर्म्मणीत्यादिषु संसार्य्यात्मनः पूर्व्वदेहत्यागसामयिकं वृत्तान्तं निरूपयति न तु ब्रह्मविद इति समन्वारम्भणादिति सूत्रमुपेक्षितमाचार्य्येण । यच्चोक्तं नियमाच्चेति तत्राह ।

नाविशेषात् ॥ १३ ॥

कुर्व्वन्नेवेह कर्म्माणीत्यादिश्रुतिभ्यः कर्म्मकृतो† यथा नियमः श्रूयते न तथा त्याग इति यदुक्तं तन्न । कुतः । अविशेषात् । न कर्म्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुरिति श्रुतिः कर्म्मादिनाऽमृतत्वाप्राप्तिमुक्त्वा तत्त्यागेन तां वदन्ती कर्म्मत्यागस्यावश्यकत्वं वदतीति तस्मात्र विशेषो यत इत्यर्थः । तथाचामृतत्वमानशुरितिपदात् मुमुक्षोः कर्म्मत्यागनियमोऽमुमुक्षो स्तत्कृतिनियम इति व्यवस्थेति भावः ।

अथवा ननु क्रमप्राप्ते तुरीयाश्रमे हि कर्म्मत्यागो द्वितीये तस्मिन् कर्म्मकरणनियमस्तत्र च कर्त्रङ्गत्वेन तत्स्वरूपज्ञानमावश्यकं तच्च वेदान्तैरेवेति कथं न कर्म्मशेषत्वमित्युक्तसूत्रमाशङ्क्य निषेधति । नेति । यदहरेव विरजेदिति श्रुतेस्तावत्

---

* देवजनविद्या इति पं ।

† कर्व्वतो यथा इति पं ।

कर्म्माणि कुर्व्वीत न निर्व्विद्येत यावतेति भगवद्वाक्याच्च त्यागे वैराग्यस्य च प्रयोजकत्वादाश्रमविशेषे विशेषाभावा*दप्रयोजकत्वादित्यर्थः। यत्रापि क्वचित् क्रममाप्तिस्तत्रापि न तज्ज्ञानं ब्रह्मज्ञानमिति पूर्व्वसूत्र एवोक्तमिति भावः। एतेन वेदाध्ययनादिकमप्यप्रयोजकमिति ज्ञापितमतएव शुकस्य वैराग्यातिशयादुपनयनादेरप्यनपेक्षोच्यते।

एवं सूत्रद्वयेन कर्म्माधिकारसम्पादकत्वेन ब्रह्मज्ञानस्य तच्छेषत्वं निरस्तं। अथ यच्चित्तथा ब्रह्मिष्ठ इत्यत्र ब्रह्मपदेन परएवोच्यत इति वदसि तत्रापि वदामः।

स्तुतयेऽनुमतिर्व्वा ॥ १४ ॥

दर्शपूर्णमासावेताद्यौ यत्र ब्रह्मविदार्त्विज्याधिकारीति तत्तुल्यार्थं ब्रह्मिष्ठो ब्रह्मेत्यनेन ब्रह्मविदोप्यार्त्विज्येऽनुमतिः क्रियते न तु तस्याधिकारित्वमभिप्रेतमुक्तानुपपत्तिभिरित्यर्थः।

कामकारेण चैके ॥ १५ ॥

नन्वेष नित्यो महिमा ब्राह्मणस्य न कर्म्मणा। वर्द्धते नो कनीयानिति श्रुत्या ब्रह्मविदः कर्म्मकृतगुणदोषौ निषिध्येते। स च प्राप्तिपूर्व्वक इति ब्रह्मविदः§ कर्म्मकरणमावश्यकमिति प्राप्त उच्यते। कामकारेणेति। करणं कारः। कामेनेच्छया करणं कामकारस्तथाच परानुग्रहार्थमिच्छामात्रेण नतु विधिवशाद्यत्

---

* चाश्रमविशेषाभावादिति ख ं।

† वर्द्धतेति ख ं।

‡ कर्म्मणीति ख ं।

§ ब्रह्मवित् ब्रह्मद इति ख ।

करणं तत् कामकार इत्युच्यते। तथाचैवं कृते कर्मणि तत्कृतगुण-दोषप्रसक्तौ तत्प्रतिषेधमेके शाखिनः एष नित्य इत्यादि पठन्ति। न ह्येतावता कर्मकृत्यधिकारप्राप्तिरिति भावः। अथवा कामेन कारो यस्य स तथा तादृशेन कर्मणा प्राप्तवृद्धिह्रासयोः सम्बन्धाभावं ब्रह्मविद्येके पठन्तीत्यर्थः। चकारेणेश्वराज्ञया लोकसंग्रहार्थं कृतं कर्म* समुच्चीयते सर्वस्य वशी सर्वस्येशान इति श्रुतेस्तथा।

उपमर्दं च ॥ १६ ॥

अनेन कर्माधिकाराभावे हेत्वन्तरमुच्यते। द्वैतभाने हि यथाकथञ्चित् कर्मकृतिसम्भावनापि यस्य स्वरूपब्रह्माद्वैतभानं ब्रह्मेत्येव न त्विदं ब्रह्मेति† सखण्डं। अतोऽहंमत्वेन प्रपञ्चस्यापि भानात् सखण्डत्वं‡। तथा चाखण्डतज्ज्ञाने कर्मतदधिकारादेरुप-मर्दं चैके शाखिनः पठन्तीति न ब्रह्मज्ञानस्य कर्मशेषत्वसम्भा-वनापीत्यर्थः। श्रुतिस्तु यत्र त्वस्य सर्वमात्मैवाभूत्तत् केन कम्प-श्येदित्यादिरूपा।

ऊर्ध्वरेतःसु च शब्दे हि ॥ १७ ॥

अथेदं विचार्यते। ब्रह्मचर्यानन्तरं गार्हस्थ्यमपि श्रुत्या बोध्यते। ब्रह्मचर्यादेव प्रव्रजेदित्यादिश्रुतिभिर्ब्रह्मचारिण एव प्रव्रजनमपि बोध्यते। एवं सत्यविरोधाय यदहरेवेति श्रुतेव

---

* कृतकर्म इति पा॰।

† ब्रह्मेति सखण्डमिति पा॰।

‡ सखण्डमिति पा॰।

रागितद्रहितभेदेन विषयभेदो वाच्यः। तत्र * ब्रह्मचर्य्याविशेषे-ऽपि भगवदनुग्रहविशेषजचित्तशुद्धिविशेषजवेदान्तार्थपरिज्ञान-मेव हेतुर्वाच्यः। वेदान्तविज्ञानसुनिश्चितार्थाः सन्न्यासयोगाद्यतयः शुद्धसत्त्वा इति श्रुतिरिममेवार्थमाह। तथा चैतादृशा ऊर्ध्व-रेतस इत्युच्यन्ते। एवं सत्यूर्द्ध्वरेतःसु कर्म्माभाव उक्तरीत्या तथा-प्युरीकार्य्य इति ज्ञानरहितानां कर्म्मण्यधिकारस्तद्रहितां सन्न्यास इति त्वदुक्ताद्विपरीतोऽर्थः सिद्धतीति क्व कर्म्मशेषत्वसम्भावना ज्ञाने। ननु सन्न्यासेऽपि तदाश्रमीयं कर्म्मास्तीति वैराग्यसहकृतं ज्ञानमेतच्छेषभूतं तदसहकृतं तदग्निहोत्रादिशेषभूतमिति न वैपरीत्यमिति मात्र चाह। शब्दे हीति। ज्ञानस्वरूपं तत्-फलञ्च न युक्तिसिद्धं किन्तु वेदमात्रसिद्धं। तत्र तु तमेवं विद्वानमृत इह भवति ब्रह्मविदाप्नोति परं † य एतं विदुर-मृतास्ते भवन्तीत्यादिवाक्यैर्ज्ञानस्य मोक्ष एव फलं श्रूयते सर्व्वसाधनानां साक्षात्परम्पराभेदेन तत्रैव पर्य्यवसानादतो धर्म्मिग्राहकमानविरोधात् सन्न्यासाश्रमीयकर्म्मशेषत्वमपि न वक्तुं शक्यमित्यर्थः। नन्वेवं सन्न्यासवैयर्थ्यमिति चेत्। न। ब्रह्म-विदतिरिक्तसङ्गस्य भगवद्विस्मारकत्वेनावश्यत्याज्यत्वेन श्रुत्या कथनादत एव वेदान्तविज्ञानसुनिश्चितार्था इत्युक्त्वा सन्न्यास-योगाद्यतयः शुद्धसत्त्वा इत्युक्तं। अत्र पञ्चम्या अन्तःकरणे संस्कारविशेषाधायकत्वञ्च प्रतीयते सन्न्यासस्य। स च संस्कारः फलोपकार्य्यङ्गमित्याशयकः सन्न्यासो मर्य्यादामार्गे। पुष्टि-

---

* यत्रेति खं।

† परामिति खं।

मार्गे तत्रैव व्यवस्था। न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिहेति वाक्यात्।

## परामर्शं जैमिनिरचोदना चापवदति हि ॥ १८ ॥

ऊर्द्ध्वरेतःसु च ज्ञानोक्तेस्तस्य मुक्तिफलकत्वोक्तेः किं प्रजया करिष्यामो येषां नोऽयमात्मा नायं लोक* इत्यादिश्रुतेश्च सन्न्यासादेव सर्व्वस्याः श्रुतेस्तात्पर्य्यमिति सिद्ध्यति। तस्या एव सर्व्वक्लेशापायपूर्व्वकपरमानन्दरूपत्वाच्च तु कर्म्मणि। दुःखात्मकसंसारहेतुत्वात् तस्य। जीवस्य योनिनिमित्तमेव श्रुतिप्राकट्यात्। अन्यथा निषेधविधिर्न स्यात्। तथा च कर्म्मविधिनापि परम्परामोक्ष एव फलत्वेन परामृश्यत इति सिद्धान्तं † परामर्शं कर्म्मस्तातत्पर-मादौ जैमिनिरपवदति बाधत इत्यर्थः। गौहकमात्रप्रवर्त्तकः स इतीश्वरमेव न मनुते यतोऽतस्तस्यासिद्धस्य मते दूरापास्ता। कर्म्मानधिकारिणामन्धादीनां सन्न्यासविधिविषयत्वमन्यथा वीरहा वा एष देवानां योऽग्निमुद्वासयत इति निषेधविधिर्न ‡ स्यादतो ब्रह्मचर्य्यं समाप्य गृही भवेत् गृहाद्वनी भूत्वा प्रव्रजेद्यदि वेतरथा ब्रह्मचर्य्यादेव प्रव्रजेत् गृहाद्वनाद्वेति श्रुतेरप्यग्रहीन एव स विषयो यत आयुर्भागविभागेनाश्रमाणां विधानं। तुरीये तस्मिन् देहेन्द्रियादिविकलस्य नियतमतः कर्म्मण्येव श्रुतेस्तात्पर्य्यं। अपि च। ज्ञानकर्म्मणोरलौकिकफलसाधकत्वेन विहितत्वमेव प्रयोजकं। अपरोक्षब्रह्मज्ञानस्य न विधेयं साक्षात् स्वतन्त्य-

---

* नोऽयमात्मा अयं लोक इति पा।

† इति सिद्धं। मं। इति यं।

‡ इति श्रुतिर्न स्यादिति पा।

साध्यत्वाचोदनाबोधकलिङ्गाद्यभावाच * ज्ञानस्य न मुक्तिसाधकत्वं वक्तुं शक्यं। य एवं विदुरित्यादिषु यागेष्विज्यविष्णुस्तुतिपरत्वाशयेनाह। अचोदना चेति। जैमिनिपक्षस्सहायभूतैयमचोदना च परामर्शमपवदतीति सम्बन्धः। तथाच विधिसम्बन्धात् कर्म्मैवानुष्ठेयं न तु मुक्तिसाधनमप्यतथात्वादिति स्थितं।

अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥ १९ ॥

बादरायण आचार्य्यो जैमिनेरपि गुरुस्तदेव कर्त्तव्यमिति शिष्यसम्मतमनुष्ठेयं कर्म्मापवदतीति पूर्व्वेण सम्बन्धः। तत्र हेतुः साम्यश्रुतेः। यथा वीरहा वा एष देवानामिति श्रुत्या कर्म्मत्यागकर्त्तुर्निन्दा श्रूयत एवमेव भगवत्ज्ञानरहितस्यापि सा श्रूयते यतः। तथाहि

असूर्य्या † नाम ते लोका अन्धेन तमसावृताः।
तांस्ते प्रेत्यापि‡ गच्छन्त्यविद्वांसोऽबुधा जनाः ॥

एतदग्रे च ये तद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवोपयन्तीत्यादिरूपा। एतच्च निन्दामात्रेण साम्यमुक्तमापाततो वस्तुतस्तु

तमेत वेदानुवचनेन विविदिषन्ति ब्रह्मचर्य्येण तपसा श्रद्धया यज्ञेनानाशकेन चैतमेव विदित्वा मुनिर्भवत्येतमेव§ प्रव्राजिनो

---

* लिङ्गाद्यभावाचेति ख।
† असुर्य्या इति च क्वचित् दृश्यते।
‡ प्रेत्याभिगच्छन्तीति वा पाठः।
§ भवत्येतमेवेति वा पाठः।

लोकमीप्सन्तः* प्रव्रजन्ति इति श्रुत्या ज्ञानसाधनत्वेनैवाश्रम-
कर्मकरणेऽपि न स्वातन्त्र्यं कर्मणो वक्तुं शक्यं। अतएव शुकस्य
न ब्रह्मचर्यादिकमपि फलस्य जातत्वेन तत्साधनानपेक्षणात्।
न च स्वर्गकामपदश्रवणान्नैवमिति वाच्यं। त्वदभिमतलोका-
त्मकस्वर्गे यन्न दुःखेन संभिन्नमिति वाक्यशेषोक्तस्वर्गपदप्रवृत्ति-
निमित्तधर्माभावादात्मसुखस्यैव तादृशत्वात् तस्यैव तत्त्वोक्तेः।
एवं सति तमेतं वेदानुवचनेनेति † श्रुत्यैकवाक्यतापि सम्प-
द्यतेऽन्यथा तु विरोध एव। ननु दृष्टफलका अपि कारीरीचि-
त्रादियागाः श्रूयन्त इति नैवं निर्णय इति चेत्। उच्यते।
नित्यकर्मणो हि ज्ञानसाधनत्वमुच्यते व्रीहियवादीनां तन्नि-
र्वाहकत्वात् तच्छेषत्वेन तेषां विधानं एवं सति वीरहेति श्रुतिः
साग्निकस्य गृहे आलस्यादिदोषेण तदुद्वासने दोषमाह
नत्वाश्रमान्तरपरिग्रह इति मन्तव्यं। अन्यथा तदुच्छेदकविधि-
वैयर्थ्यं स्यात्। न चानधिकृतमादाय तत्समाहितिरिति
वाच्यं। अत्र एच्छामोऽन्यपक्षादिभिः प्रव्रजनं कार्यमिति
विधिस्त्यागोऽखिलार्थकोऽयमग्निहोत्रविधायकप्रव्रजनविधायक‡-
वाक्ययोर्विरोधाभावाय विषयो भिन्नः कल्प्यते। नाद्योऽश्रुतेः।
न द्वितीयः यदहरेव विरजेदिति श्रुत्या वैराग्यवतः प्रव्रजन-
विधानात् तेनैव विषयभेदसिद्धौ तत्कल्पनानवकाशात्। तेन
नापुत्रस्य लोकोऽस्तीति स्मृतिरप्यविरक्तविषयिणीति न विरोधः।

---

* लोकमीप्सन्त इति वा पाठः।
† वचनेति पा°।
‡ वाक्यप्रव्रजनविधायक इति पा°।

वडिशं यनकैर्विमुक्तं इत्यादिवाक्येभ्यस्तथा । तथा भक्तिसाधनत्वे-नैवानुष्ठेयमिति तात्पर्य्येण कर्मविधिरुच्यते । न तु स्वतन्त्रतया फलसाधकत्वेन*। ननु तत्र समाधिमधिकृत्य यमादीन्युक्तानीति तन्मध्यपातित्वेन धारणस्य तथात्वं युज्यते† प्रकृते ज्ञानं भक्तिं वाधिकृत्य न कर्म विहितमिति दृष्टान्तवैषम्यमिति चेत् । न । उक्तानुपपत्त्या ज्ञानिन्यमेव कर्म श्रुतिर्विदधातीत्यवश्यं वाच्यं । निन्दायां चेतरपदात् ज्ञानमध्यपातित्व एव तद्-विषयस्य प्राप्तेरावश्यकत्वात् । तथाच भगवद्ज्ञानस्येतरनिरपेक्षत्वेन स्वरूपोपकारित्वमस्य कर्मणो वाच्यं । तथाचोक्तं ।

दानव्रततपोहोमजपस्वाध्यायसंयमैः ।
श्रेयोभिर्विविधैश्चान्यैः कृष्णे भक्तिर्हि साध्यते ॥ इति

एष नित्यो महिमेति श्रुतिरपि । यज्ज्ञाने सति विहित-निषिद्धकर्मकृताधर्म्मधर्मादित्याद्यनुक्त्वा तस्यैव पदवित् स्या-दिति यदुक्तवती तेन पदयोर्भक्तिमार्गरूपत्वेन मुख्यत्वात्‡ तज्ज्ञानानुकूलप्रयत्नमेव पूर्व्वं विदधे§ । तेन

शृण्वन्ति गायन्ति गृणन्त्यभीक्ष्णशः
स्मरन्ति नन्दन्ति तवेहितं जनाः ।
तएव पश्यन्त्यचिरेण तावकं
भवप्रवाहोपरमं पदाम्बुजं ॥

इति वाक्याच्च वर्णाश्रमधर्मा भागधर्माश्च पदज्ञानसाधनत्वेन

---

* फलं साधकत्वेनेति ख ।

† युज्यते इति क पाठ ।

‡ तेन पदयोर्भक्तिमार्गेत्यक

§ विदधे इति ख ।

कर्त्तव्या इति सिद्धं। तस्यैतच्छब्दस्य * प्रसिद्धार्थकत्वाल्लोकवेद-
प्रसिद्धस्य पुरुषोत्तमस्यैव। तत्रापि यद्विदेव दीनभावेन भक्ति-
मार्गीयज्ञानवानेव स्यादित्येवकारः सर्व्वत्रानुषज्यते। तथा सति
भक्तौ जातायां स्वतएव भगवज्ज्ञानं भवतीति ज्ञापयितुं तं
विदित्वेति पश्चादुक्तवतीति तदाशयो ज्ञायते। अतएव पूर्व्वं
कर्म निरूपितं साधनत्वात्। स्यादेतत्। भक्तिसाधनमेव † चेत्
कर्म्मणः श्रुतेरभिप्रेतं तदा भगवद्विदि तत्फलासम्बन्ध इत्यनुप-
पन्नमिति चेत्। नैवं। कर्म्मणां हि भक्त्युत्पत्तौ ‡ स्वरूपयोग्यता-
सम्पादकत्वमेव नायमात्मेति श्रुतेः कर्म्मज्ञानाभ्यामलभ्यत्वाद्भग-
वतः स्वरूपयोग्यतापेक्षापि मार्य्यादिकस्य न तु पौष्टिकस्यातएव
वा शब्द उक्तोऽनियमवाची। तथा सति भगवदनुग्रहश्चेत् तदा
भक्तिस्तया पुरुषोत्तमज्ञानं तदा कर्म्म तत्फल§ सम्बन्धगन्धोऽपि
नेति किमनुपपन्नं। एतेन तमेव विदित्वा मुनिर्भवति यथाश्वो
न हि गच्छत इत्यादिश्रुतीनां मिथो विरोधः परिहृतः।
भक्त्या ग्राह्यत्वात् तदितरसाधनाग्राह्यत्वादत एव विविदिषन्ति
न तु विदन्त्यपीत्याशयवती तमेतं वेदानुवचनेनेति श्रुतिः
प्रवृत्ते। न चानुपदमेव तमेव विदित्वा मुनिर्भवतीत्युक्तेः सान्नि-
ध्यादुक्तसाधनैरेव वेदनमभिप्रेतमिति वाच्यं। वेदानुवचना-
दीनां सर्व्वेषां वेदनसाधनत्वे सर्व्वेषां तत्कर्त्तॄणां वेदनप्रस-

---

* तस्यैव तच्छब्दस्य इति ख।

† भक्तिसाधनत्वमेव इति वा पाठः।

‡ भक्त्युत्पत्त्यै इति ख।

§ तत्फलमिति ग।

वेन मुनिर्भवतीत्येकत्वं तद्विदि न वदेद्‌तो ज्ञानं कस्यचिदेकस्य भवतीति ज्ञानस्य दुर्लभत्वं ज्ञाप्यते।

मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये।
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः॥

इति भगवद्वाक्याच्च। तर्हि वेदानुवचनादिषु निःश्रद्धा प्रवृत्तिः कथं इत्यं। स वा अयमात्मेत्यादिकया पूर्व्वश्रुत्या भगवन्माहात्म्यं श्रुत्वा यथाकथञ्चित् तद्वेदनोत्सुक्ये सति तत्त्वज्ञाभावेन भक्तिमार्गापरिचयात् कर्म्ममार्गमात्रमायमधर्मत्वेनालौकिकार्थ-साधकत्वेनापि पूर्व्वं ज्ञातमस्तीति, तदेव भगवद्वेदनेऽपि साधनमिति मन्यमानास्तदेव कुर्व्वन्ति। ननु वैदिकसाधनानां वैयर्थ्यं कथमिति चेत्। न। भगवत्त्वेऽपि जन्मान्तरीयाचरणानोपयोगिसंस्काराधायकत्वेनावैयर्थ्यात्।

स्तुतिमात्रमुपादानादिति चेन्नापूर्व्व-
त्वात्॥ २१॥

ननु साम्यस्तुतेर्हेतोः कर्म्मशेषत्वं ज्ञानस्य यदपास्तं तन्नोपपद्यते। साम्योक्तेर्ज्ञानस्तुतिरूपत्वात्। अपिच। तथा ज्ञानिनोऽपि कर्म्मोपादानात् कर्म्मकृतिस्वीकारादिति यावत्। अन्यथा ज्ञानिनां कर्म्मकृत्यभावेन तत्कृतगुणदोषाप्रसक्त्या तन्निषेधानुपपत्तिः स्यात्। तेषामपि तत्कृतगुणदोषसम्बन्धोऽस्त्येवेति ज्ञापनाय मात्रपदं निषेधेनेतरसाधारण्यं परिह्रियते। तथाच ज्ञानिनोऽपि कर्म्मकरणात् कर्म्मशेषत्वं ज्ञानस्य निःप्रत्यूहमिति त्वेवं वक्तुं युक्तं। यद्‌ज्ञानस्य कर्म्मफलासम्बन्धफलकत्वस्यापूर्व्वत्वाद्विधेयत्वमेव। न हि यस्य कर्म्मणो ज्ञानस्य वा यत्फलं तदुक्तिरपि

स्तुतिरेवेति युक्तं। तथोच्छेदापत्तेः। विधिर्हि प्रवर्त्तकः। तस्य पुरुषप्रवृत्त्युपयोग्यर्थकथनेनैव चरितार्थत्वादन्यार्थकथनस्य स्तुतित्वमस्तु नाम। नह्येवं प्रकृते। मुमुक्षोः कर्मबन्धाभावप्रेप्सो-स्तत्साधनत्वज्ञानएव प्रवृत्तिसम्भवात्। यच्च कर्मफलसम्बन्ध-निषेधानुपपत्त्या कर्मसम्बन्ध इत्युक्तं तच्च साधीयः। न हि तरणौ तमःकार्य्याभाव इत्युक्ते तत्प्राप्तिरपि सम्भवति।

अथवा। पुरुषोत्तमज्ञान*मुख्यफलस्यातिमहत्त्वेन साक्षात् [illegible] ज्ञापयन्ती कैमुतिकन्यायेन परम्परया तदाहान-यन्ती †। तं विदित्वा ब्राह्मणो भवतीति श्रुतेर्ब्राह्मणपदेन ब्रह्म-विदुच्यते। तथा चाप्यपदेन कुक्षिस्थब्राह्मणमाहात्म्योद्देशे कृते स क ‡ इत्याकाङ्क्षायामाह तं ब्राह्मणं विदित्वा विहितनिषिद्ध-फलासम्बन्धी भवतीति लक्षण इत्यर्थः साक्षाद्भगवद्विदः किमु वाच्यमिति भावः। अत एव तच्छब्दस्य पूर्वपरामर्शित्वाद् ब्राह्मणस्यैव भगवद्विदो भक्तस्यैव पदविस्थात् तज्ज्ञानानुकूल-प्रयत्नवान् स्यात् तद्वजेदिति यावत्। तथाच § यत्र भगवद्विष-यकज्ञानस्याप्युक्तरीत्या न कर्मलेपत्वं वक्तुं शक्यं तत्र भगवज्-ज्ञानस्य तथात्वं दूरतर¶मिति सर्वं सुस्थं ॥‖

---

* ज्ञानवत्त्वमिति पा०।

† ज्ञापयन्तीति पा०।

‡ स च इति पा०।

§ तथापीति पा०।

¶ दूरदूरतरमिति पा०।

‖ स्तुतितात्पर्यादारभ्य इत्यस्य एतत्पर्यन्तस्य ग्रन्थस्य आग्रहादेव भाष्य-सन्दर्भ इति नूनं प्रतीमः वल्लभाचार्य्येण तु तत् वर्णितम्।

पारिप्लवार्था इति चेन्न, विशेषितत्वात् ॥ २२ ॥

अथ प्रकारान्तरेण शङ्कते। भृगुर्वै वारुणिः वरुणं पितरमुपससार। अधीहि भगव* इति होपससाद† सनत्कुमारं नारदः। प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगामेत्याद्युपाख्यानैर्हि ब्रह्मविद्या निरूप्यते। सर्वाण्याख्यानानि पारिप्लवे शंसतीति श्रुत्वा शंसनशेषत्वं तेषामवगम्यते। शंसने शब्दमात्रस्य प्राधान्येनार्थज्ञानस्य तथात्वादुपदेशमात्राख्यानप्रतिपाद्यं ज्ञानं मन्त्रार्थवदप्रयोजकमिति कर्मशेषत्वमपि न वक्तुं शक्यं। प्राधान्यन्तु दूरापास्तं। धर्मिण एवासिद्धेरित्याह‡ पारिप्लवार्था इति। उक्तरीत्या सर्वा उपाख्यानश्रुतयः कर्मशेषभूता इत्यर्थः। पभाषाय्ये एवमपि कर्मशेषत्वं ज्ञानस्य न सम्भवतीत्याह। नेति। कुतः। विशेषितत्वात्। कर्मणः सकाशात् ज्ञानं विशेषितमधिकधर्मविशिष्टत्वेनोक्तमिति न ज्ञानस्य कर्मशेषत्वमित्यर्थः। ननु विशेषितत्वमाख्यानेष्वेवेत्यप्रयोजको हेतुरिति चेत्। नैवं। भाषाथ्यायमयानवगमात्। तथाहि। पूर्व्वन्तुष्यतु दुर्जन इति न्यायेनाख्यानानां शंसनशेषत्व-§ मुपेत्योच्यते। नह्याख्यानेष्वेव ज्ञानं निरूप्यते किन्त्वन्यत्रापि। तथाहि। तैत्तिरीयके पठ्यते ब्रह्मविदाप्नोति परन्तदेषाभ्युक्ता सत्यं ज्ञानमनन्तं ब्रह्मेत्युपक्रम्य माहात्म्यविशेषज्ञानार्थ-

---

* भगवत इति ख।

† होपाससादेति ख।

‡ धर्मिहि इति ख।

§ शंसनशेषत्वमुपचिता इति ख।

भाकाशादिकर्तृत्वमुक्त्वानन्दमयत्वं रसरूपत्वमणुक्त्वा*भीषास्मादि-
त्यादिना सर्व्वनियामकत्वञ्चोक्ता भगवानेव पूर्णानन्द इति
ज्ञापनायानन्दगणनां कृत्वानन्दमयं पुरुषोत्तमं प्राप्तेनानुभूय-
मानानन्दस्वरूपं यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सहे-
त्यादिनोक्ता तद्विदो माहात्म्यमुच्यते। एतए ह वाव न
तपति किमहं साधु नाकरवं किमहं पापमकरवमिति । अत्र
ज्ञानवान् सच्चिद्रूपं देशकालापरिच्छिन्नं सर्व्वकर्त्तारं निरवधा-
नन्दात्मकं सर्व्वनियामकं मनोवागगोचरं पुरुषोत्तमं प्राप्नोति।
कर्म्म तु स्वयं क्षयात्मकं तदांसाम्येनानन्दस्यान्यानि भूतानि
मात्रासुपजीवन्तीति श्रुतेः क्षुद्रतरानन्दजनकस्वर्गपशादिफल-
माप्नोति विहितनिषिद्धकर्म्मणीरामयोगकत्वं तन्निरुच्यत इति
कर्मणः सकाशात् ज्ञानस्य निरवधिरेव विशेष उच्यत इति न
धर्म्मसिद्धिर्नवा कर्म्मशेषत्वं ज्ञानस्य सिद्धाति। तथाप्याख्यान-
प्रतिपादितविद्यानामविरिवेति चेत् तत्राह।

तथाचैकवाक्यतोपबन्धात् ॥ २३ ॥

यथा केवलश्रुतेर्विद्याप्राधान्यं तथैवोपाख्यानश्रुतीनामि-
त्यर्थः। चकारेण प्रश्नोत्तरैर्निर्णितार्थप्रतिपादनं । महतामेवात्र
प्रवृत्तिः सापि दक्षायासपूर्व्विकेति विद्यामाहात्म्यज्ञापनं
प्ररोचनयाधिकमुपाख्यानानामुपाख्यानं विनैव विद्यानिरूपि-
काया: श्रुतेः सकाशादित्युच्यते। तत्र हेतुरेकवाक्यतोपबन्धा-
दिति। आचार्य्यवान् पुरुषोवेदेति श्रुत्यैकवाक्यताज्ञानमाख्याने

---

* रसरूपत्वमणुक्त्वा इति पा॰। ·

विना न भवतीति तदर्थमुपबन्धात् गुरुशिष्यकथोपबन्धा-
दित्यर्थः। अथवोपाख्यानरहितायां श्रुतौ यथा ज्ञानं निरूप्यते
तथैवाधीहि भगव इति होपससाद सनत्कुमारं नारद इत्या-
ख्यानेष्वपि निरूप्यते इत्यनाख्यानश्रुत्यैकवाक्यतयैवाख्यानि
ज्ञानस्वरूपोपबन्धात् प्रतिपादनादित्यर्थः। नैकथ्यगाथिनोप-
देन * ननु प्रतीयात् तत्तद्गुरुस्तत्तच्छिष्यकथासत्सामीप्य-
मनोध्यतेऽन्यथा सामीप्यासम्भवादतः कल्पितत्वशङ्कानिरासः †
नन्वेवमपि पारिप्लवार्थत्वेन बाधकं ‡ पश्याम इति चेत्।
उच्यते। अश्वमेधप्रकरणे मनुर्वैवस्वतो राजेत्यादीन्याख्यानानि
यत्र पठितानि तत्र सामान्यतस्तेषां विनियोगः सर्वाण्याख्या-
नानि पारिप्लवे शंसतीत्यनेनोक्त इति सर्वशब्दस्तदाख्यानपर
एव नत्वाख्यानान्तरपरोऽपि प्रकरणस्य नियामकत्वात्। एवं
सति यदा पारिप्लवाख्यकर्मप्रस्तावस्तदा विशेषविनियोग उक्तः
पारिप्लवमाचक्षीतेति। तत्र प्रथमेऽहनि मनुर्वैवस्वतो राजेति
द्वितीयेऽहनीन्द्रो वैवस्वत इति तृतीयेऽहनि यमो वैवस्वतो राजे-
त्याख्यानविशेषा § वाक्यशेषे विनियुज्यन्ते। आख्यानसामान्य-
परत्वे स्वशेषविशेषरूपाख्यानविशेषविधानं न स्यात्। अतएव
पारिप्लवमित्येकवचनमतोनाख्यानान्तरगन्धसम्बन्धोऽपि। ज्ञापका-
भावात्।

---

* उपदेशेनेति ख।

† कल्पितत्वशङ्कानिरास इति ख।

‡ बाधकमिति पुस्तकान्तरे दृश्यते।

§ इत्याद्याख्यानविशेषा इति ख।

अतएवाग्नीन्धनाद्यनपेक्षा * ॥ २४ ॥

एवं पुरुषार्थोऽतःशब्दादित्युपक्रम्य ज्ञानस्य फलसाधने कर्मानपेक्षत्वमुपपाद्य तत्रैवोपपत्त्यन्तरमाह। यतो ज्ञानी ज्ञानेन स्वयमेव यज्ञात्मको जातोऽतएव जरामर्य्याग्निहोत्रेऽग्निस्तदिन्धनं समिदादि। तदादय आज्यादयस्तेषामनपेक्षोक्ता श्रुतौ। तैत्तिरीयके पठ्यते। तस्यैवं विदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी शरीरमिध्ममुरोवेदिर्लोमानि बर्हिर्वेदः शिखा हृदयं यूपः काम आज्यं मन्युः पशुस्तपोऽग्निरित्यादि। एतेन यदन्यस्य यज्ञतासम्पादकं तस्य स्वकार्यसाधने कथं यज्ञापेक्षा भवेदिति भावः सूच्यते।

सर्व्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ २५ ॥

एतन्यायेन ज्ञानं प्रति कर्मणः फलोपकारित्वाभावेऽपि स्वरूपोपकारित्वमस्ति न वेति चिन्त्यते। तत्र नेति पूर्व्वः पक्षः। गुरूपसत्तितदुपदेशैरेव तत्सम्भवादाचार्य्यवान् पुरुषो वेदेति श्रुतेः। अत्र सिद्धान्तमाह। सर्व्वापेक्षेति। सर्व्वेषां कर्मज्ञानभक्तीनां पुरुषोत्तमज्ञानोत्पत्तावस्त्यपेक्षा। अत्र प्रमाणमाह। यज्ञादिश्रुतेरिति। यज्ञादिनिरूपिका श्रुतिरेव प्रमाणं अत्र इत्यर्थः। इदमत्राकूतं। पुरुषोत्तमएव स्वतन्त्रपुरुषार्थरूपस्तत्प्राप्तिरेव फलं। तत्र प्रेमभक्तिजं तज्ज्ञानमेव साधनमिति

* अतएव चाग्नीन्धनाद्यनपेक्षा इति पुस्तकान्तरस्थपाठः।

† तत्प्राप्तिरेव फलं इति पा°

ब्रह्मविदाप्नोति परमित्यादि श्रुतिसहस्रैव* प्रतिपाद्यते। यथे-
तरे दुःखमेवोपयन्तीति श्रुत्या ज्ञानरहितानां दुःखमात्रप्राप्ति-
रुच्यते। एवं सति स्वतोऽपुरुषार्थरूपं यज्ञादिकं सर्व्वार्थतत्त्व-
प्रतिपादिका श्रुतिर्निरूपयति तत् सर्व्वथा पुरुषार्थसाधन-
त्वेनैवेति मन्तव्यं। तच्च निःकामतयैव कृतं तथा। अतएव
वाजसनेयिशाखायां यथाकारी यथाचारी तथा भवति
साधुकारी साधुर्भवति पापकारी पापो भवतीत्युपक्रम्य पठ्यते
तस्माल्लोकात् पुनरेत्यस्मै लोकाय कर्म्मण इति कामयमानोऽथा-
कामयमानोयो कामो निःकाम आप्तकाम आत्मकामो भवति
तस्मात्† प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते ब्रह्मैव सन् ब्रह्मा-
प्येतीत्यादि। यथाकामयमानः§ कर्त्ता निरूप्यत इति शेषः।
यः पुमान्¶ कर्म्मकृतावकामस्ततो निःकामः सन्नात्मकामो निरु-
पधिस्नेहवान् प्रभौ|| ततो भगवत्प्राप्त्याप्तकामो भवतीत्यर्थः। अत्र
यथाकारीत्यादिना कर्म्मकर्त्तुरेवोपक्रमाद्याकामयमान इत्यने-
नापि तथाभूतः स एवोच्यते। एवं सति सत्कर्म्मप्रवृत्त्यर्थं
विविधफलानि** स्वयमेवोक्ता जनान् भ्रामितवानिति स्तोक-

---

* य एतद्विदुरमृतास्ते भवन्तीत्यादि श्रुतिसहस्रैरिति ग पाठः।
† न तस्मादिति ख।
‡ उत्क्रामतीति ख।
§ अथ यथा कामयमान इति ख।
¶ क पुमान इति ख।
|| प्रभौ इति ख।
** विफलानीति ख।

करणाधिरेण दयया निःकामं करोति । सकामतयापि क्रियमाणे-नैव वैदिककर्मणानेकजन्मभिः संस्कारविशेषप्रचयेनापि तथा । कापाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्त्तत इत्यादि स्मृतिभ्यश्च ज्ञानोत्पत्तौ कर्मापेक्षास्तीति चकारेण मुद्रावदीकृतस्य सर्व्वा-नपेक्षेति वा समुच्चीयते । अतएव नायमात्मेत्यादि श्रुतिर्न विरु-ध्यते । नतु ज्ञानद्वारा कर्मादीनामेव फलसाधकत्वमस्त्विति शङ्का निरासाय दृष्टान्तमाहाश्ववदिति । यथा स्वेष्टफलसाधकदेश-व्यवधानात्मकदेशातिक्रमेऽश्वस्य साधनत्वं न तु तत्र फलसिद्धा-वपि तथा आधिभौतिकाध्यात्मिकाधिदैविकप्रतिबन्धनिवृत्तावेव तेषां साधनत्वं न तु भगवत्प्राप्तावपीत्यर्थः । इदञ्च मुमुक्षुभक्त-विषयकमिति ज्ञेयं । आत्यन्तिकभक्तिमतां भक्तीतरानपेक्षणात् ।

## शमदमाद्युपेतः स्यात् तथापि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात् ॥ २६ ॥

नतु तस्मादेवंविच्छान्तोदान्त इत्यादिना शमादेरेव ज्ञान-साधनत्वमुच्यते न यज्ञादेरिति चेत् तत्राह । शमदमाद्युपेतो भक्तिमार्गेऽपि स्यादेव यद्यपि तथापि तदङ्गतया आत्मन्येवा-त्मानं पश्येदिति ज्ञानमार्गीयज्ञानाङ्गतयैव शमादिविधेर्हेतो-र्ज्ञानमार्गे तेषामवश्यानुष्ठेयत्वात् तथाविधिरित्यर्थः । भक्तिमार्गे स्वतएव शमादीनां सम्भवेऽप्यावश्यकत्वं न तेषामिति भावः ।

## सर्व्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ २७ ॥

नतु सत्त्वशोधकत्वेन यज्ञशमदमादेर्विधानमिति सत्त्वोप-पद्यते । आहारशुद्धौ सत्त्वशुद्धिरिति श्रुतेस्तद्विरुद्धा सर्व्वान्न-भक्षणानुमतिरपि यतः श्रूयते छन्दोगानां । न ह्वा एवंविदि-

किञ्चनान्नं भवति। तथा वाजसनेयिनां न ह वा अस्यानन्नं जग्धं भवतीत्यादि। तस्मात् सत्त्वशुद्ध्यर्थं यत्नादेनं विधानमिति प्राप्ते विषयव्यवस्थामाह। आहारदौर्बल्येन * प्राणात्यय उपस्थिते प्राणधारणस्य ज्ञानान्तरङ्गतमसाधनत्वेनाहारस्य देहपोषकत्वेन ततो बहिरङ्गत्वात् † तदनुमतिः क्रियत इत्यर्थः। अत्र प्रमाणमाह तद्दर्शनादिति। चाक्रायणः ‡ किलर्षिरापद्गत इभ्येन सामिखादितान् कुल्माषांश्चखादेत्यादि श्रुतेर्दर्शनाऽ§ दित्यर्थः। यद्यपि ज्ञानसाधनत्वेन सत्त्वशुद्धेरपेक्षितत्वाज्ज्ञाने ज्ञाने तत्साधनानपेक्षणादेवंविदीति वचनात् तादृशे सार्व्वदिक्यपि तदनुमति नोचिता। अपि चर्य्यत इत्यनेनाविदुषोऽप्यनुमतेर्वक्ष्यमाणत्वाच। तथाप्याचार्य्येणावस्थाविशेषविषयकत्वमुक्तं यत्तेन ज्ञानिनोऽप्यनापदि विहितत्यागोऽविहितकरणञ्च चित्तमालिन्यजननेन ज्ञानतिरोधायकमिति श्रुत्यभिमतमिति ज्ञायते। अतएव श्रीभागवते द्वितीयस्कन्धे

> विशुद्धं केवलं ज्ञानं प्रत्यक्सम्यगवस्थितं
> सत्यं पूर्णमनाद्यन्तं निर्गुणं नित्यमद्वयं।
> ऋषे विदन्ति ¶ मुनयः प्रशान्तात्मेन्द्रियाशयाः
> यदा तदेवासत्तर्कैस्तिरोभूयेत विप्लुतं॥

इति ब्रह्मणोक्तं।

---

* दौर्बल्येनेति वा पाठः।
† बहिरङ्गादिति वा पाठ।
‡ चाक्रायण इत्यपि दृश्यते।
§ श्रुतिदर्शनादिति खं।
¶ ऋषेर्विदन्तीति खं।

ज्ञानिनामपि चेतांसि देवी भगवती हि सा।
बलादाकृष्य मोहाय महामाया प्रयच्छति॥

इति मार्कण्डेयेनाप्युक्तं। एवा ज्ञानमार्गीयज्ञानवतो व्यवस्थेति ज्ञेयं। भक्तिमार्गीयस्त्वेवमापदसम्भवात्।

अनन्याश्चिन्तयन्तो मां ये जनाः पर्य्युपासते।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहं॥

इति भगवद्वाक्यात्। मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते इत्यत्रैवकारेण पुरुषोत्तमज्ञानवतएव मायातरणोक्तेरक्षरभाव*ज्ञानवतां तथात्वसूचितं।

अबाधाच्च॥ २८॥

आपदि तथाऽन्नभक्षणेन ज्ञाने चित्तप्रसादासम्भवेन तज्जनितप्रतिबन्धाभावाच्च न दोष इत्यर्थः।

अपि च स्मर्य्यते॥ २९॥

आपद्यविदुषोऽपि दुष्टान्नभक्षणे पापाभावो यत्र स्मर्य्यते तत्र विदुषि न्वनुमते का शङ्केत्यर्थः। स्मृतिश्च

जीवितात्ययमापन्नोयोऽन्नमत्ति यतस्ततः।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा॥ इति

अथवा विदुषो दुष्टकर्म्मासम्बन्धो ज्ञानाग्निः सर्व्वकर्म्माणि भस्मसात् कुरुते तथेति स्मर्य्यतेऽपीत्यर्थः।

शब्दश्चातोऽकामकारे॥ ३०॥

यतो ज्ञानाग्निरेव सर्व्वकर्म्मदहनसमर्थ इति फलदशायां

---

* अक्षरभावे ज्ञानवतां इति पाठः।

कर्मकारेऽपि* न दोषोऽतएव साधनदशायां तदभावेन तस्मादेवं विच्छान्तोदान्त उपरतस्तितिक्षुरित्यादिरूपः शब्दः कामकारनिवर्त्तकः श्रूयत इत्यर्थः। एवं ज्ञानस्य कर्मनाशकत्वे सिद्धे जातज्ञानस्याश्रमकर्म कर्त्तव्यं नवेति चिन्त्यते। तत्र फलस्य जातत्वात्तस्यापि नाशकत्वेनाप्रयोजकत्वान्न कर्त्तव्यमिति पूर्व्वः†-पक्षस्तत्र सिद्धान्तमाह।

विहितत्वाच्चाश्रमकर्म्मापि ॥ ३१ ॥

यथा ज्ञानिनाप्यनापदि शिष्टानामेवान्नं भक्षणीयं विहितत्वात् तथाऽश्रमकर्म्मापि कर्त्तव्यमेव नित्यं विहितत्वादित्यर्थः। यथाऽनापद्यशिष्टान्नभक्षणं दोषाय निषिद्धत्वादेतच्चोपपादितं सर्व्वान्नानुमतिरित्यत्र तथा नित्यत्यागोऽपि‡ प्रत्यवायजनक इति तत् कर्त्तव्यमेवेति भावः। यच्चोक्तं फलस्यापि नाशकत्वेनाप्रयोजकत्वान्न कर्त्तव्यमिति तत्राह।

सहकारित्वेन च ॥ ३२ ॥

शमदमादीनामन्तरङ्गसाधनानां सहकारीण्याश्रमकर्म्माणीत्येतद्रहितैः शमादिभिरपि ज्ञानं न स्थिरीकर्त्तुं शक्यमिति तानि कर्त्तव्यान्येवेत्यर्थः। संसारवासनाजनकत्वस्वभावीयः धर्म्मस्य स ज्ञानेन नाश्यत इति न सहकारित्वेऽनुपपत्तिः काचिदिति भावः। एवं ज्ञानमार्गीयज्ञानस्थैर्य्यसाधनमुक्त्वा भक्तिमार्गीयसाधनानां भगवच्छ्रवणादीनामिव आधिक्यमावश्यकताञ्चाह।

---

* कामकारेऽपीति पा°।
† पूर्व्वपक्ष इति पा°।
‡ तथा सन्न्यासोऽपि इति पा°।

सर्व्वथापि तएवोभयलिङ्गात् ॥ ३३ ॥

भगवच्छ्रवणकीर्त्तनादयः साधनान्तरवद्विहितत्वेन कर्त्तव्या एव यद्यपि तथापि सर्व्वथापि अन्येषां युगपदुपस्थितौ तदनुरोध-प्रसक्तावपि तएव भगवद्धर्माएव कर्त्तव्या इत्यर्थः। कुतः श्रुति-लिङ्गात् स्मृतिलिङ्गाच्च। श्रुतिलिङ्गन्तु

तमेव धीरो विज्ञाय प्रज्ञां कुर्व्वीत ब्राह्मणः*।

नानुध्यायात्† बहूञ्छब्दान् वाचोविग्लापनं हि तत्। इति

तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथाऽमृतस्यैष सेतुरित्यपि। एवकारेण भगवदतिरिक्त प्रतिषिध्य तद्विष-यकज्ञानानुकूलं प्रथमं श्रवणात्मकं विज्ञायेति विधाय स्मरण-मपि तन्मात्रविषयकमेव प्रज्ञां कुर्व्वीतेति वचनेन विधाय तदेकनिष्ठताहेतुभूतानामेव शब्दानामावर्त्तनमर्थानुसन्धानमपि कर्त्तव्यं नान्येषामिति नानुध्यायाद्बहूनित्यनेनोच्यते। अत्रा-न्वित्युपसर्गेण ध्यानस्य पराङ्गत्वमुच्यते। तेन योग्यतया श्रवण-कीर्त्तने एव तत्पूर्व्वभाविनी प्राप्येते। स्मृतिस्तु

शृण्वन्ति गायन्ति गृणन्त्यभीक्ष्णशः
स्मरन्ति नन्दन्ति तवेहितं जनाः।
तएव पश्यन्त्यचिरेण तावकं
भवप्रवाहोपरमं पदाम्बुजं ॥ इति

---

* ब्राह्मण इति ख°।
† नान्ध्यायात् इति ख°।
‡ मुञ्चथ इति वा पाठः।

महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः।
भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययं॥
सततं कीर्त्तयन्तो मां यतन्तश्च दृढव्रताः।
नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते॥ इति

एतेन भगवद्धर्माणामात्मधर्मत्वेनान्तरङ्गत्वादाश्रमकर्मणो देह-धर्मत्वेन वहिरङ्गत्वात् तदविरोधेनैव तत्कर्त्तव्यमिति स्थितं। अतएव भगवद्धर्मान्यधर्मं प्रतिषिध्य तेषां सर्व्वेभ्य आधिक्यं ज्ञाप-यितुं स वा एष महात्मा सर्व्वस्य वशीत्यादिना भगवन्माहात्म्य-मुक्तं।

अनभिभवञ्च* दर्शयति॥ ३४॥

प्राधान्येन भगवद्धर्मा एव कर्त्तव्या इत्यत्रोपोद्बलकान्तरमने-नोच्यते सर्व्वं पाप्मानन्तरति नैनं पाप्मा तरति सर्व्वं† पाप्मानं तपति नैनं पाप्मा तपतीत्यादिना भगवद्धर्मानुरोधेनाश्रमकर्म्मा-करणजदोषैरनभिभवञ्च श्रुतिर्दर्शयत्यतो भगवद्धर्मा एव सर्व्वेभ्य उत्तमा‡ इत्यर्थः।

अन्तरा चापि तु तद्दृष्टेः॥ ३५॥

भगवद्धर्मेभ्य आश्रमधर्मा हीना इत्यप्यत्रमुच्यतेऽपि तु तस्मिन् पुरुषोत्तमे धर्मिण्येव दृष्टिस्तात्पर्यं यस्य पुंसस्तस्याश्रमधर्मा अन्त-रा च। फलसिद्धौ व्यवधानरूपायेति§ श्रुतिर्दर्शयतीति पूर्व्वेण

* अनभिभवत्वञ्चेति वा पाठः।
† सर्व्वं पाप्मानं इति च दृश्यते।
‡ उत्तमानि साधनानीति ख।
§ व्यवधानरूपायेति ख।

सम्बन्धः । अन्तरा शब्दोऽत्राव्ययात्मको व्यवधानवाचकः । तथाच श्रुतिः एतद्ध स्म वै* ब्राह्मणा अनूचाना विद्वांसः प्रजां न कामयन्ते किं प्रजया करिष्यामो येषान्नोऽयमात्मायं लोक इति ऋणापाकरणहेतुत्वेन लौकिकोत्कर्षहेतुत्वेनापि प्रजाया अभीष्टत्वेऽपि तदुत्पादनव्यासङ्गेन भगवदानन्दानुभवेऽन्तरायो भविष्यतीति तद्बुद्ध्या तदोपेक्षां दर्शयति ।

## अपि च स्मर्य्यते ॥ ३६ ॥

अपि शब्देनाश्रमधर्माणां तथात्वं किमु वाच्यं । यतो ज्ञानतत्साधनवैराग्यादीनामप्यन्तरायत्वं स्मर्य्यते ।

तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः ।
न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह ॥

इति भगवद्वाक्यं ।

## विशेषानुग्रहश्च ॥ ३७ ॥

स्मर्य्यत इति पूर्व्वेण सम्बन्धः । ज्ञानादेः सकाशाद्भक्तिमार्गे फलतोऽप्युत्कर्षमाह । ज्ञानादिसाधनवत्त्वानुग्रहो मुक्तिपर्य्यन्त एव भक्तिमार्गे त्वहं भक्तपराधीनोऽह्यस्वतन्त्र इव द्विजेत्यादिवाक्यैर्विशेषरूपो मुक्त्यादिभ्योऽपि भक्तानां व्यावर्त्तको भगवदनुग्रहः स्मर्य्यत इत्यर्थः । गूढाभिसन्धिमुद्घाटयन् फलितमर्थमाह ।

## अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥ ३८ ॥

अत इति पूर्व्वोक्तश्रुतिस्मृतिपरामर्शः । तथा चेतरस्या मुक्तेरपि भक्तिमार्गीयतदीयत्वमेव ज्याय इत्यर्थः । अत्र हेत्वन्तर-

---

* तत् पूर्व्वे ब्राह्मणाः इति वा पाठः ।

माह लिङ्गाचेति। मुक्तानान्तु मायाविनिर्मुक्तमात्मस्वरूपमेव न तु देहेन्द्रियादिकमप्यस्ति येन भजनानन्दानुभवः स्याद्भक्तानान्तु देहेन्द्रियादिकमपि मायातत्कार्यरहितत्वेनानन्दरूपत्वेन च भगवदुपयोग्यतोऽपि तत्तथेत्यर्थः। न हि मुक्तात्मनां क्वचन भगवदुपयोगोऽस्तीति भावः। तदुक्तं श्रीभागवते। न यत्र माया किमुतापरे हरेरनुव्रता यत्र सुरासुरार्चिता इत्यादिसूक्तोपरूप्यत्वचोच्यते। अतएव सप्तमस्कन्धे देहेन्द्रियासुहीनानां वैकुण्ठपुरवासिनामित्युक्तं। पुरवासित्वे देहादेरावश्यकत्वान्निषेधो जडात्मकानामेवेत्यवगम्यते। इतरत् व्याय इति पाठे तु पूर्व्वोक्तायमकर्मपरामर्शोऽत इत्यनेन। उभयोरेव वा। एतेन सोऽश्नुते सर्व्वान् कामान् सह ब्रह्मणा विपश्चितेति श्रुत्युक्तफलवत्त्वं* तस्य सूच्यते।

### तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमा-<br>तद्रूपाभावेभ्यः ॥ ३९ ॥

अथेदं विचार्य्यते। तदीयानामपि कदाचित् सायुज्यमस्ति नवेति। तत्र भक्तिमार्गस्यापि साधनरूपत्वात् तस्य च मुक्तावेव पर्य्यवसानात् तदीयत्वस्य साधनावस्थायामुत्कृष्टावस्थारूपत्वात् तेषामपि मुक्तिरावश्यकी। तथाच कर्मफलतो† न कश्चिद्विशेष इति प्राप्त उच्यते तद्भूतस्येत्यादि। तु शब्देन मर्य्यादामार्गीयव्यवच्छेदः। अत्र विश्वासदार्ढ्यायान्यस्य का वार्त्ता कर्म्ममात्रनिरूपकस्य जैमिनेरपि यदि कदाचित् भग-

---

* उक्तफलवत्त्वमिति च ।

† तथाच क[illegible] ख ।

यत्कृपयाऽयं भावो भवेत्तदा तद्भूतस्य पुष्टिमार्गीयस्य* भगवद्भावं प्राप्तस्य तस्यापि नातद्भाव उक्तभावतिरोधानं न कदाचिदपीत्यर्थः। अत्र हेतूनाह। नियमादीन्। तैत्तिरीयके ते ते धामान्युश्मसीति मन्त्रे। यत्र भूरिशृङ्गा अयासस्तदुरुगायस्य परमं पदमित्युक्त्वा तदनन्तरं तत्र कृतानि कर्माण्यपि विष्णोः कर्माणि पश्यतेति मन्त्रेण निरूप्य पुनः पूर्वोक्तलीलास्थानं तद्विष्णोः परमं पदमिति पदेनानूद्य तस्य नित्यत्वनिरूपणायोच्यते सदा पश्यन्ति सूरय इति। सूरयो विद्वांसः पुरुषोत्तमज्ञानवन्त इति यावत्। तत्र भक्त्यैवेति सूरिपदेन भक्ता उच्यन्ते। तथाच भक्तानां सार्वदिकदर्शनं† नियम्यते सदेति पदेन। एवं सति पुष्टिमार्गीयभगवद्भावं प्राप्तस्य मुक्तावुच्यमानायां तन्नियमो भज्येतेत्यर्थः। यथोक्तं साधनावस्थायामुत्तमावस्थारूपत्वं परं तदीयत्वस्य फलं मुक्तिरेवेति तथाप्यतद्रूपेति। उक्तभगवदीयत्वं न साधनरूपमपि तु मुक्तेरपि फलरूपं।

मुक्तानामपि सिद्धानां नारायणपरायणः सुदुर्लभः प्रशान्तात्मेति वाक्यात्।

यदा सर्वे प्रमुच्यन्ते‡ कामा येऽस्य हृदि स्थिताः।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते॥

इति श्रुत्याऽमृतस्य मुक्तस्य ब्रह्मस्वरूपभोग उच्यते। स च

---

* पुष्टिमार्गीयभगवद्भावं इति ख° ।
† सार्वदिग्दर्शनं इति ख° ।
‡ प्रभिद्यन्ते इति वा पाठः ।

यमेवैष वृणुत इति श्रुतेर्भगवदीयत्वसाध्यएवेति स्पष्ट फलत्वम[*]-स्यातोऽतद्रूपत्वं।

किञ्च। फलं हि साधनादुत्तम भवति। भगवदीयत्वा-दुत्तमस्यार्थस्याभावादपि न मुक्तिर्वक्तुमुचिता। तदुक्तं श्रीभाग-वते पञ्चमस्कन्धे पूर्व्वं भक्तिस्वरूपं[†] निरूप्य। तयैव परया निर्वृत्या ह्यपवर्गमात्यन्तिकं परमपुरुषार्थमपि स्वयमासादि-तम्नो एवाद्रियन्ते भगवदीयत्वेनैव परिसमाप्तसर्व्वार्था इति।

न चाधिकारिकमपि पतनानुमानात्
तदयोगात्॥ ४०॥

अथेदं विचार्य्यते। ध्रुवमपि च ब्रह्मादिलोकाधिकारं दत्वा तत्सम्बन्धिफलं ददाति नवेति तत्र नेत्याह। न चेति। तत्र हेतुः पतनानुमानादिति।

आब्रह्मभुवनाल्लोकाः पुनरावर्त्तिनोऽर्जुन।

इति स्मृतेरित्यर्थः। फलस्य सावधित्वा[‡]दिति भावः। किञ्च तादृशे भगवदीये[§] पतनायोगादपि[¶] न तथा। अथवा तादृशस्य सदा भक्तिरसानुभवात् तदतिरिक्तस्यानपेक्षणादन्येषां फलानां सम्बन्धाभावादित्यर्थः।

---

[*] स्पष्टफलत्वमिति ख।

[†] सर्व्वं भक्तिस्वरूपमिति ख।

[‡] फलस्य सावधिकत्वात् दिति वा पाठ।

[§] भागवदीये इति ख।

[¶] पतनायोगादपि इति ख।

### उपपूर्व्वमपि त्वेके भावमशनवत्तदुक्तं ॥ ४१ ॥

एके भक्ता आधिकारिके फले पतनमात्रं न हेयत्वप्रयोजक*-मिति वदन्त्यपि तूपपूर्व्वं पतनमेव तदिति वदन्ति भक्तिभावात् च्युतेः। अधिकारसमाप्तौ भगवदनुग्रहाद्यापि कदाचित् सम्भवतीत्युपपतनं तत्। मुक्तौ त्वपुनरावृत्तेर्भक्तिरसाद्यापि नेति महापतनमेव सेति भावः। तेन निषिद्धकर्म्मफलतुल्यत्वं ज्ञापितं भवति। अतएव श्रीभागवते

नारायणपरा लोके न कुतश्चन बिभ्यति।
स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिनः॥

इति गीयते। भक्तिमार्गे तु साक्षात्सङ्गाभावेऽपि तदीयं भावमात्र†मप्यशनवत् साक्षाद्भगवत्स्वरूपभोगवदेव मन्यन्ते। तदुक्तं श्रीभागवते। अथ ह भाव तवेत्यादिना। साक्षाद्भगवद्भोगो जीवव्यासभावित इति महानिरासायाह तदुक्तमिति। सोऽश्नुते सर्व्वान् कामान् सह ब्रह्मणा विपश्चितेति। अत्र ब्रह्म समश्नुत इत्यादिश्रुतिषु साक्षाद्ब्रह्मस्वरूपसाधनमुक्त-मित्यर्थः।

### बहिस्तूभयथापि स्मृतेराचाराच्च ॥ ४२ ॥

अथेदं चिन्त्यते। प्रचुरभगवद्भावभाववतः साक्षात् स्वरूप-भोगवतो वा गृहत्यागः कर्त्तव्यो नवेति। फलस्य सिद्धत्वा-न्नेति पक्षव्यवच्छेदाय महतां यातयामानां न बन्धाय गृहा मता इति वाक्यात् बन्धकत्वेन त्याज्य इति पक्षव्यवच्छेदाय च तु-

* पतनमात्रन्तु हेयत्वप्रयोजकं इति ख।
† तदीयभावमात्रमिति ख।

यन्ह:। भावमार्गे साचात्प्रभुसम्बन्धे चोभयथापि ग्टहात् बहिर्गमनं गृहत्याग इति यावत्। स आवश्यक:। तत्र प्रमाणमाह। स्मृतेरित्यादि।

यन्तु सर्व्वं परित्यज्य स्नेहं स्वजनबन्धुषु।
मय्याविश्य मन: सम्यक् समदृग्विचरस्व गां॥

इत्यादि स्मृतिर्भगवत्भाववतस्तादृ विशिष्टस्यापि बहिर्गमनमाह। तदाचारोऽपि तथैव श्रूयतेऽस्मत्तथा। अयमाशय:। आश्रमधर्मत्वेन गृहत्यागो यदहरेवेत्यादिश्रुतिभ्य: पूर्व्वमुपपादितोऽपि यदधुना पुनरुच्यते तेन तदतिरिक्तोऽयमिति ज्ञायते। तथाचोक्तवाक्यात् मुमुक्षुमुक्तिप्रतिबन्धकत्वाभावेऽपि व्यासक्तस्य तत्रावश्यकत्वादुक्तोभयोरपनवरतं प्रभुरसास्वादे प्रतिबन्धकत्वेन तस्य तत्त्यागस्य विप्रयोगरसानुभावकत्वेन च स कर्त्तव्य: यद्यपि स्वेष्टान्तरायत्वेन अतएव तत्त्यागो भावी तथाप्याप्य माद्रायमं गच्छेदिति वाक्यादन्यासमान्तरत्वाभावेन त्यागस्याविहितत्वमदाभावायेयस्मृतिरिति।

स्वामिनः फलश्रुतेरित्यात्रेयः॥ ४३॥

पुष्टिमार्गीयभक्तस्य विहितत्वादित्यान*प्रयोजकं। तत्र हेतु: तस्य भक्तिमार्गस्वामिन: श्रीगोकुलेशादेव फलस्य श्रुतेरतो बहिर्गमनं न साधनत्वेनात्र कार्य्यमिति भाव:। यच्च यमेवैष वृणुत इति श्रुतिरनुसन्धेया। एतदनुपदमेव पठ्यते नायमात्मा प्रवचनेन लभ्य इति। अत्र भगवद्दर्शनानन्तरमपि जीवनं

* विहितत्वादित्यान इति कच पुस्तके।

कतमं यदपेक्षो भगवल्लाभ इति जिज्ञासायां सर्व्वात्मभाव-एव बलमिति निर्णीयते। तस्यैव मर्यादाबलोपमर्दकत्वात् भगवद्वशीकारहेतुत्वाच्च। व्रजसीमन्तिनीनां प्रभुवचनातिक्रम-मपि कृत्वा स्वरूपपरिग्रहसाहसेनैव यत इत्यादिनेव आचार्य्या मनुते। इदमत्राभिप्रेतं। सर्व्वात्मभावस्य यद्बलं तत्तदात्मकस्य प्रभोरेव। तस्य चायं स्वभावो यदन्यत्र रोचतेऽतएव व्रजपरिवृढ-वदनेन्दुवचनकिरणप्रचारप्रोच्छलत्केवलभावाम्भोधिवचनवीचयो गीयन्ते यर्ह्यम्बुजाक्ष तव पादतलमस्माकं तत्प्रभृति नान्यसमक्षं स्थातुं पारयाम इत्यादयः। अतस्त्यागस्तु प्रकृतेन इत्याया-तीति न तदर्थं यतनीयमिति। विष्ण्ववतारत्वेन पुरुषोत्तम-भावस्वरूपश्चोऽयमिति तथा।

## आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परि-क्रीयते ॥ ४४ ॥

सर्व्वत्यागपूर्व्वकं यद्बहिः प्रभुसमीपगमनं भक्तस्य तदार्त्विज्य-मृत्विक्कर्म्मैवेत्यौडुलोमिराचार्य्यो मन्यते। तत्रायमभिसन्धिः। यजमानो हि स्वेष्टसिद्ध्यर्थमृत्विज आदौ वृणुते। प्रकृते च यमे-वैष वृणुत इति श्रुतेस्तस्मादेकाकी न रमत इति श्रुतेश्च स्वक्रीडार्थं भगवान् स्वचिकीर्षिततत्तल्लीलानुरूपान् जीवान् वृणुते। यतः स्वधिराम्बेति विकल्पादिकरूपाणां यथा सोमादिषु वरणं तथा सर्व्वात्मभावत्वेनैकरूपाणामेषाम् वरणं। तत्र यथा स्वीयस्तोम-तदङ्गसाधकरणं तेषां तदेतरसम्बन्धनिवर्त्तनपूर्व्वकं * तद्भोग्य-समर्पकत्वमत्र। तदुक्तं भगवता। यदा पुमांस्त्यक्तसमस्तकर्मा

* तदेतरसम्बन्धिनिवर्त्तनपूर्व्वकमिति ख।

निवेदितात्मा विचिकीर्षितो मे इति। अत्र पूर्वपदेनेतरसम्बन्धनिवर्त्तनोक्त्या सर्व्वात्मभाव उक्तो भवति। तदनन्तरमात्मनिवेदने सति तद्विषयकलीलाकरणेच्छाविषयः स भवति*। अन्तरङ्गलीलाप्रवेशनमिच्छायां विशेषस्तस्मात् सुष्ठूक्तमार्त्विज्यमिति। एतेन न ददाति न पचतीत्यादि श्रुतेर्यथा सोमादौ दीक्षितस्य तदानीन्तनधर्मनिवृत्तिः सएव परमो धर्मो यतस्तथा पुरुषोत्तमस्वीकृतभक्तैः सह रमणमेव सार्व्वदिकमेतदेव च महन्महत्त्वमिति सूचितं भवति। प्रकृते भक्तानामार्त्विज्येन निरूपणे हेतुत्वेन तात्पर्य्यान्तरमप्याह। तस्मै यजमानारब्धकर्मसाङ्गत्वाय ऋत्विक् परिक्रीयते वरणेन स्वकार्य्यमात्रोपयोगित्वाय स्वीयः क्रियते। तथा प्रकृतेऽपि। न च कश्चित् कल्याणो दक्षिणा इति प्रश्नवचनात् तदर्थैव तत्प्रवृत्तिरत्र तु स्वतः पुरुषार्थत्वेन भगवदर्थां प्रवृत्तिरतो वैषम्यमिति वाच्यं। श्रीरामस्यापि वरणसमये तत्प्रश्नावश्यकत्वात् तथैव दक्षिणादानमप्यन्यथा निरङ्गत्वापत्तेः। प्रकृतेऽपि भक्तानां स्नेहादेव प्रवृत्तिर्भगवान् स्वानुभवार्थमेव ताननुभावयतीति न वैषम्यं।

श्रुतेश्च† ॥ ४५ ॥

अथर्वणोपनिषत्सु पठ्यते। भक्तिरस्य भजनन्तदिहामुत्रोपाधिनैराश्येनैवामुष्मिन् मनःकल्पनमेतदेव नैष्कर्म्यमिति भक्तिमार्गप्रचारैकहृदयो बादरायणः मानं भागवतं तत्र तेनैवं श्रेयसत्तमैः।

---

* रमयतीति ख॰।

† श्रुतेश्चानुमेवेति पुस्तकान्तरस्थः पाठः।

सहकार्य्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत्॥४६॥

ननु यमेवेति श्रुतिः साधनान्तरनिषेधपूर्व्वकं वरणस्यैव साधनत्वमाह। तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः श्रद्धावित्तो भूत्वात्मन्येवात्मानं पश्येदिति श्रुतिः साधनान्तरमप्याह। एवं विरोधे श्रुतित्वाविशेषात् किमादरणीयं किमिति संशये साधनान्तरविधिरेवादरणीयोऽन्यथा वाक्यवैयर्थ्यं स्यादिति प्राप्त उच्यते सहकार्य्यन्तरविधिरिति। मर्य्यादापुष्टिभेदेन वरणं द्विधोच्यते। तत्र सहकार्य्यन्तरविधिस्तु मर्य्यादापक्षेणोच्यते पुष्टौ तु नान्यापेक्षेति न विरोधगन्धोऽपि। अपरञ्च। साधनं हि कायिकं वाचनिकं * मानसिकञ्च विधीयते। तत्र मनसैवाप्तव्यमिति श्रुतेस्तृतीयं मुख्यं। तदपि तावदेव मार्य्यादिकस्यापि विधेयत्वेन कर्त्तव्यं यावत् स्नेहो न भवति। यतस्तद्वतः स्नेहवतस्तूक्तं तृतीयं साधनमपि विध्यादिवत्। यथा तद्वतो विधिरर्थवादो वा प्रवृत्तावप्रयोजकस्तस्य स्वतएव सम्भवात् तथा भगवत्प्राप्ताविदमित्ययं कैमुतिकन्यायेन पूर्व्वयोरप्रयोजकत्वमेतच्छ्रेयस्त्वादेवायात्यतीति तृतीयमेवोक्तं।

कृत्स्नभावात्तु गृहिणोपसंहारः॥४७॥

ननु बहिस्तु भयधेत्यादिना भगवदीयस्य गृहत्याग आवश्यक इति निरूपितं छान्दोग्ये त्वाचार्य्यकुलादित्युपक्रम्य छान्दोग्योपनिषदन्ते आचार्य्यकुलाद्वेदमधीत्य गुरोः कर्म्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्म्मिकान्

* मार्गिकमिति वा पाठ.।

विद्धदात्मनि सर्व्वेन्द्रियाणि संप्रतिष्ठाप्याहिंसन् सर्व्वाणि भूतान्यन्यत्र तीर्थेभ्यः स खल्वेवं वर्त्तयन्यावदायुषं ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्त्तते न च पुनरावर्त्तते न च पुनरावर्त्तते * । इदं विषयवाक्यं ब्रह्मलोकमभिसम्पद्यत इति गृहिणोपसंहारः कृतः । वाजसनेयिशाखायाञ्चेतद्ध स्म वै तत्-पूर्व्वे ब्राह्मणा अनूचाना विद्वांसः प्रजां न कामयन्त इत्युपक्रम्याथ भिक्षाचर्य्यं चरन्तीति पठ्यते । एवं सति विकल्पे सम्भवत्यप्युपसंहारस्य तात्पर्य्यग्राहकत्वाद्गृहिणएव यथोक्तकर्त्तुर्ब्रह्मसम्पत्तिरितिश्रुतेस्तात्पर्य्यं । त्यागोक्तिस्तु भक्तैतादृशं यदर्थं सर्व्वं त्यजन इति श्रुतिपरेति भाते गृहिणोपसंहारे हेतुत्वेन तात्पर्य्यमाह । कृत्स्नेति । त्यागे वाङ्मनसोरेव भगवति विनियोगो न सर्व्वेन्द्रियाणां । गृहिणस्तु सर्व्वैः प्रकारैर्भजनं भवतीति परिजनस्य कृतार्थो भवतीति वा भजने कृत्स्नता भवतीति तेनोपसंहारः कृत इत्यर्थः । अतएवात्मनि सर्व्वेन्द्रियाणि संप्रतिष्ठाप्येत्युच्यते । अत्रात्मपदं भगवत्परमिति ज्ञेयं । कर्म्ममार्गीयगृहिव्यवच्छेदाय तुशब्दः ।

अत्रेदमाकूतं । भक्तिमार्गो बहुविध इति कपिलदेववाक्यात् केचन भक्ताः स्वगृहेष्वेव स्नेहेन भगवदाकारे विविधोपचारैः सेवां कुर्व्वन्तस्तयैव निर्वृत्या मुक्तिमपि तुच्छां मन्यन्ते । तदुक्तं । मधुद्विट्स्वनुरक्तमनसामभवोऽपि फल्गुरिति । तेन भगवद्भजनएव तत्रापि पुष्टिमार्गएव श्रुतेर्भर इति ज्ञायते । पूर्व्वमुत्कटभगवद्भाववतां तदर्थं त्यागं निरूप्य गृहिणोप-

* क्वचिदपि दिराउक्तिर्दृश्यते ।

संहारतात्पर्य्यं मर्यादानिरूपितत्वांशेन तादृग्भाववतैव त्यागः कार्य्यस्तद्रहितेन तु स्वृहएवोक्तरीत्या प्रभुभजनं कार्य्यं तेनैव तल्लाभ इति व्यासहृदयमिति ज्ञायते। उक्तभावाभावे त्यागधर्म्मानिर्व्वाहादिति। केचन भक्ता भाषणादिलीलादर्शनं विना स्थातुमशक्ताः मधुरभावविषयाग्रया गृहांस्त्यक्त्वा वनं गच्छन्ति। पानैयीरुत्तोमिश्चास्तु भगवदवतारसामयिकभक्तदयोक्ता। एते सर्व्वे फलमार्गीयाः वाजसनेय्युक्तास्तु साधनमार्गीया इति नारायणयतिः कश्चित्।

मौनवदितरेषामप्युपदेशात् ॥ ४८ ॥

किञ्च। सन्न्यासिन आवश्यका ये धर्मास्ततोऽधिकास्ते गृहिणः सिध्यन्तीत्यपि हेतोस्तेनोपसंहारः कृत इत्याशयेनाह। मौनवदित्यादि। मौनपदमनीहानिरायामादिसिद्धिधर्म्मोपलक्षकं। यथा वागिन्द्रियमात्रदेहमात्रचित्तमात्रनियामकास्ते धर्म्मा उक्ता न्यासिनस्तथेतरेषामपीन्द्रियनियामकानां धर्म्माणामात्मनि सर्व्वेन्द्रियाणि संप्रतिष्ठाप्येति श्रुत्या गृहिण उपदिश्यन्त इति युक्तो गृहिणोपसंहार इत्यर्थः। तत्र नियमनमात्रमत्र तु भगवति विनियोगादाधिक्यमिति भावः। यद्यपि तत्र केवलनियमनस्याप्रयोजकत्वात् तथापि भगवति विनियोगएव तात्पर्य्यमिति ज्ञेयम्।

अनाविष्कुर्व्वन्नन्वयात् ॥ ४९ ॥

ननु भगवति सर्व्वेन्द्रियविनियोगात् गृहिणोपसंहार इति न युज्यते यतो देशे स्वाध्यायमधीयान इत्यादिकर्म्ममार्गीयसाधनश्रुतेरित्याशङ्क्य तत्तात्पर्य्यमाहानाविष्कुर्व्वन्निति। भग-

वह्नावस्य रसात्मकत्वेन शुद्धस्यैवाभिहरिरसभावकत्वादाश्रमधर्मै-रेव लोके स्वं भगवद्भावमनाविःकुर्वन् भजेतेत्येतदाशयेन ते धर्मा उक्ताः। गोपने मुख्यं हेतुमाहान्वयादिति। यतो भगवता सममन्वयं सम्बन्धं प्राप्य वर्त्तते ऽतो हेतोस्तथा। अत्र ल्यब्लोपे पञ्चमी। एतेन यावदन्तःकरणे साक्षात् प्रभोः प्राकट्यं नास्ति तावदेव बहिराविकरणं भवति प्राकट्ये तु न तथा सम्भवतीति ज्ञापितं।

## ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ ५० ॥

वैदिककर्मकरणे तात्पर्य्यसत्त्वा लौकिकस्यानावश्यकत्वेऽपि तत्समयमाह। प्रस्तुतं प्रभुभजनं तत्प्रतिबन्धासम्भव एवैहिकं कर्म कार्यं। नन्वैहिकं कर्मास्तु मा वास्तस्तत्समयोक्ति-र्व्यर्थेत्याशङ्क्याह।* तद्दर्शनादिति। आचार्य्यकुलादित्युपक्रम्याथे पयते धार्मिकान्विदधदिति। अतो धार्म्मिकपुत्रविधानमैहिकं कर्म श्रुतौ दृश्यतेऽतस्तत्समयोक्तिरावश्यकी अन्यथा श्रुतावुक्तमस्तीति प्रस्तुतबाधेऽपि तत्करणे फलप्रतिबन्धः स्यादिति भावः।

## एवं मुक्तिफलानियमस्तदवस्थावधृते-स्तदवस्थावधृतेः ॥ ५१ ॥

ननु† तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्य इति, श्रुतौ मुक्त्यनन्तरं ब्रह्मसम्पत्तिः श्रूयते। सा तु पुरुषोत्तमसङ्गे लीलारसानुभवातिरिक्ता वक्तुमशक्या मुक्तोपसृप्यव्यपदेशात्।

---

* अथवं प्रभुभजन तद्दर्शनात् इति च।
† ननु मक्तेति च।

मुक्तानामपि सिद्धानां नारायणपरायणः।
सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने॥

इति अतीव मुक्तेः फलं भक्तिरसानुभव एव। एवं सत्युक्त-पट्हिणसात् फलं भवति नवेति संशये निर्णयमाह। एवंभूत-स्वोतरूपस्य मुक्तस्य मुक्तेर्यत् फलं भक्तिरसानुभवस्तस्यानियम-स्तस्य भगवदिच्छाधीनत्वात् साधनासाध्यत्वात्। अतएव मुक्तिं ददाति कर्हिचित् स्म न भक्तियोगमिति एकवाक्यं। औत्-सर्गिकं हेतुमाह तदवस्थेति। न च पुनरावर्त्तत इत्यस्याहत्या मुक्त्यवस्थाया एव सार्व्वदिकत्वेन निर्द्धारः क्रियते। यद्यप्येवं मुक्तिफलाभावनियम एवायाति न तु तदनियमस्तथापि तस्य तावदेव चिरमित्यादिप्रमाणेन स पुनरावर्त्तत इति श्रुत्या च विरोधाभावायौत्सर्गिकी तदवस्था। तत्पातन्तु कस्यचिदनुग्रहेण पुष्टौ प्रवेशने भवतीति स्वाभिप्रायं प्रकटीकुर्व्वता बादरायणेना-नियमः इत्युक्तं। एवं सति न च पुनरावर्त्तत इति श्रुतिः प्रपञ्चे पुनरावृत्तिं निषेधति न तु तदतीतेऽपीति ज्ञेयं। समाप्ति-ज्ञापनायावृत्तिः। अथवा श्रुतौ तदवस्थापत्तेर्हेतोरुक्तत्वमपि तदवस्थापत्तिर्यतोऽतः फलानियमनियमयोऽपीत्यर्थः। एवं सति मुक्तिपर्य्यन्तं साधनं भगवद्भाव इति निर्णयः सम्पन्नः।

इति श्रीवेदव्यासमतवर्त्ति श्रीवल्लभाचार्य्यविरचिते ब्रह्मसूत्राणु-भाष्ये चतुर्थाध्यायस्य चतुर्थः पादः समाप्तः।

---

# चतुर्थोऽध्यायः

## प्रथमः पादः ।

समन्वयेनाविरोधात् साधनैर्ब्रह्मविद्यदि ।
तथापि मध्यवस्था स्यात् सा चतुर्थे विविच्यते ॥
जीवतो म्रियमाणस्य गच्छतः सफलस्य च ।
यतो ब्रह्मविदा कार्य्यमेवमेव न चान्यथा ॥
तामसीं बुद्धिमाश्रित्य ये मूढ़ाः सर्व्वविप्लवं ।
वदन्ति शास्त्रमाभाय सद्भिः शोच्याय ये तु तान् ॥
ब्रह्मविक्रमनाभावः यत्नांशेनापि चेत् भवेत् ।
शास्त्रमेतद्वृथाजातं सर्व्वस्वविनाशतः ॥
स्वाध्यायस्य च सम्यक्त्वे ब्रह्मगतिश्रुती ।
अन्यथा न श्रुतेरर्थः स्याद्वेदव्यासो वदेव किं ॥
तामसीं बुद्धिमाश्रित्य या मुक्तिः कैश्चिदुच्यते ।
सा सुषुप्तिश्रुतेरर्थो मोहादेवान्यथामतिः ॥
अतो ब्रह्मविदः कार्य्यं जीवतः पूर्व्वमुच्यते ।
आवृत्तिः श्रवणादीनां नवत्वोपदेशतः ॥
दर्शनार्थन्ततो लिङ्गादपि ब्रीह्यवघातवत् ।
आवृत्तौ श्रवणादीनामाप्नोति स्वरात् दृढ़ा मतिः ॥
आपाततो दर्शनं तदभेदेनापि बोध्यते ।
प्रतीकोपासनादीनां नैवं भावो हि जायते ॥

आलम्बनार्थं तत्रापि ब्रह्मदृष्टिर्विनिश्चिते।
आदित्यादिब्रह्मदृष्टेरङ्गत्वं न स्वतन्त्रता ॥
मनने च निदिध्यासे विशेषश्चोच्यतेऽधुना ।
आसनादिषडङ्गैस्तु चित्तं श्रौतार्थएव हि ।
धारयेदामृतेरेवं ततः सिद्धिमवाप्नुति ।
धर्माधर्मभयं तस्य नास्त्येवेति विनिश्चयः ॥
अग्निहोत्रादिकं कार्यं सन्यासः फलएव हि ।
भोक्ता चेत् पुरुषो यत्नः प्रारब्धान्ते फलं भवेत् ॥
एतावान् प्रथमे पादे निर्णयः सूत्रकृत्कृतः ।
द्वितीये वियमाणस्य सर्वेन्द्रियलयः पुरा ।
लिङ्गस्यापि शरीरस्य नाशोत्क्रान्तिरिहोच्यते ।
दिनायनकृतो नास्य विशेषोऽस्तीति चोच्यते ॥
तृतीये क्रमसुक्तौ यो मार्गों यस्य श्रुतेर्मतः ।
तन्निर्धारोऽन्यमार्गीयाणामप्राप्यत्वच वर्ण्यते ॥
गन्तव्यच परं ब्रह्म कार्यो लोकस्तु नेति च ।
तुरीये पुष्टिमर्यादाभेदेन फलमुच्यते ॥
प्रभोरेव फलत्वं तन्निर्दोषत्वच वर्ण्यते ।
लीलानित्यत्वतः पूर्णगुणत्वच ततोऽखिलं ॥

अथ फलप्रकरणत्वेऽपि साधनरूपस्यापि अवधात्तरङ्गत्वं प्रापयितुं तन्निर्धारमप्याह ।

## आवृत्तिरसकृदुपदेशात् ॥ १ ॥

चौथा पादे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इत्यादिवाक्यैर्विहितं श्रवणादिकं किं सकृदेव कर्त्तव्यमुतासकृदिति भवति संशयः। किं तावत्प्राप्तं सकृदेवेति। तावतैव

शास्त्रार्थस्य सम्पत्तेः। नच तण्डुलनिष्पत्तिफलकावघातस्येव दर्शनफलकानां श्रवणादीनां तत्सिद्धिपर्य्यन्त*मावृत्तिर्न्यायप्राप्तेति† वाच्यं। अवघातस्य वितुषीकरणात्मकदृष्टद्वारकत्वेन तथात्वमस्तु नाम प्रकृते त्वदृष्टद्वारकत्वात् सकृत्त्वेनैवादृष्टद्वारा फल-सम्पादनसम्भवादावृत्तिरप्रयोजिकेति‡ मास्म वध्यते। आवृत्ति-रेव श्रवणादीनां श्रुत्यभिमता। कुतः। असकृदुपदेशात्। छान्दोग्ये श्वेतकेतूपाख्याने ऐतदात्म्यमिदं सर्वं तत् सत्यं स आत्मा तत्त्वमसि श्वेतकेतो इति वाक्येन जडजीवयोर्ब्रह्मात्मत्वं नवकृत्व उपदिष्टवान्। तथाच सकृदुपदेशेनैव चेदर्थसिद्धिः स्यात् तदैकमेवार्थमेकस्य एकदैवासकृन्नोपदिशेत् प्रयोजना-भावात्। एतेनावघातवदन्तःकरणदोषनिवर्त्तनं दृष्टं§ द्वारमन्ये-षामुपदेशानां चरमस्य तस्य ज्ञानसाधकत्वमिति मन्तव्य। अत्रैव हेत्वन्तरमाह।

लिङ्गाच्च॥२॥

श्रुत्यनुमापकत्वेन स्मृतिर्लिङ्गमित्युच्यते। सा च

यथायथात्मा परिमृज्यतेऽसौ
मत्पुण्यगाथाश्रवणाभिधानैः।
तथातथा पश्यति तत्त्वसूक्ष्मं
चक्षुर्यथैवाञ्जनसम्प्रयुक्तम्॥

---

* श्रवणादीनां सिद्धिपर्य्यन्तमिति ख।
† आवृत्तिरिति शेष इति ख।
‡ अप्रयोजिकेति वा पाठः।
§ दृष्टद्वारमिति वा पाठः।

इत्यादिरूपा तदावृत्तिमेव फलसाधकत्वेनाह। अत्र दृष्टान्तेनापि द्रष्टद्वारकत्वं श्रवणादीनां सूच्यते आत्मा वारे द्रष्टव्य इतिपदेन श्रवणादीनां फलात्मकं दर्शनं पूर्वमुक्त्वा श्रोतव्यो मन्तव्य इत्यादिना तत्साधनानि पश्चात् यदाह तेनात्मनः परोक्षमपि ज्ञानमवान्तरफलरूपमिति भक्तिमार्गे परमफलरूपतत्सजातीयत्वेन च फलमध्यपात्येवेति श्रुत्यभिमतमिति ज्ञायते। तेन सूत्रकृदपि फलप्रकरणेऽपि साधनविचारं चकारेति निगूढाशयः। तथापि पाठक्रमादर्थक्रमो बलीयानिति न्यायात् द्रष्टव्य इति पदस्य पश्चात्सम्बन्धे तृतीये निरवसरं प्राप्नोतीति प्रकृतविचारस्य फलप्रकरणासङ्गतत्व*मापततीति प्रकारान्तरेण सूत्रार्थ उच्यते। आवृत्तिरसकृदुपदेशात्। श्रुतिर्हि कर्मज्ञानभक्तीः साक्षात्परम्पराभेदेन पुरुषार्थसाधनत्वेन हीनमध्यमोत्तमाधिकारिणः प्रति कर्त्तव्यत्वेन प्रतिपादयति। तत्र तेषां स्वरूपं तृतीयेऽध्याये बादरायणेन प्रतिपादितमथ तुरीयेऽध्याये तेषां फलं चिन्त्यते। तत्रादौ कर्ममार्गस्य फलमुच्यते। ज्ञानभक्त्योरेव क्रमेणोत्तमात्युत्तमफलकत्वमतस्तत्साधनत्वेनैव तत्कर्त्तव्यं न तु स्वातन्त्र्येणेति ज्ञापयितुं आवृत्तिरिति। कर्ममार्गस्यावृत्तिः पुनर्जन्मफलं तदप्यत्र इदं पदमावृत्त्योभयथापि सम्बध्यते। तथापात्र प्रमाणापेक्षायां तदाह हेतुत्वेनासकृदुपदेशादिति। अतो कर्ममार्गे पुनर्जन्मासकृदुपदिश्यते यतोऽन्यथा सकृदुपदेशेनैव तदवगमेऽप्यसकृदुपदेशोऽनर्थकः स्यादतस्तथेत्यर्थः। वाजसनेयि-

* फलप्रकरणासङ्गतत्वमिति वा पाठः।

शाखायां पठ्यते एवमेवायꣳ शारीर आत्मैभ्योऽङ्गेभ्यः संप्र-
मुच्य पुनः प्रतिन्यायं प्रतियोन्याद्रवति प्राणायैवेति। तत्रैव
पुनस्तेन प्रद्योतेनैष* आत्मा निष्क्रामतीत्युपक्रम्य पठ्यते तं
विद्याकर्म्मणी समन्वारभेते पूर्व्वप्रज्ञा चेति। तत्रैवैतदनुपद-
मेव तद्यथा तृणजलायुकेत्युपक्रम्य पठ्यते एवमेवायं पुरुष इदꣳ
शरीरं निहत्याविद्यां गमयित्वान्यन्नवतरं कल्याणतरꣳ रूपं
तनुते पित्र्यं वा गान्धर्व्वं वा ब्राह्मं वा प्राजापत्यं वा दैवं
वा मानुषं वान्येभ्यो वा भूतेभ्य इति। तत्रैवाग्रे पठ्यते

प्राप्यान्तं कर्म्मणस्तस्य यत्किञ्चेह करोत्ययं।
तस्माल्लोकात् पुनरेत्यस्मै लोकाय कर्म्मणे। इति

अत्र हेत्वन्तरमाह। लिङ्गाच्च। वेदानुमापकत्वेन स्मृति-
र्लिङ्गमित्युच्यते। सा च भगवद्गीतासु त्रैविद्या मामित्युपक्रम्य
पठ्यते।

एवं त्रयीधर्म्ममनुप्रपन्ना
गतागतं कामकामा लभन्ते। इति
आब्रह्मभुवनाल्लोकाः पुन-
रावर्त्तिनोऽर्जुन। इति च

अथवा यथाकारी यथाचारी तथा भवति साधुकारी साधु-
र्भवति पापकारी पापो भवति पुण्यः पुण्येन कर्म्मणा भवति
पापः पापेनेति श्रुतिर्वर्त्तमानजन्मकर्म्मणोः पूर्व्वजन्मसम्बन्धिकर्म्मा-
नुमापकत्वं वदतीति कर्म्मिणः पुनर्जन्मावश्यकमिति ज्ञायते।
एवं सति लिङ्गत्वेन निरूपणादित्यर्थः सम्पद्यते। निवृत्ति-

---

* प्रद्योतेनैव इति वा पाठः।

मार्गीयस्यापि तस्य ज्ञानोपकर्त्तृत्वमात्रं न तु जन्मनिवर्त्तकत्वं* मानाभावात् ।

एवं कर्म्मफलं विचार्य्य ज्ञानफलं विचारयति ।

आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ ३ ॥

पूर्व्वार्धनिरूपणव्यवच्छेदाय तु शब्दः । ज्ञानिनो हि भगवन्तमात्मत्वेनैवोपासते । तथा नैरन्तर्य्येणानेकजन्मभिस्तथैव तेषां हृदि भगवान् स्फुरति । तदा स्वानन्दांशस्याप्याविर्भावाद् ब्रह्मभूत. स्वात्मत्वेनैव † स्फुरितमिति तदानन्दात्मकः सन् तमनुभवति । एवं स्थितः प्रारब्धसमाप्तौ देहापगमे तत्रैव प्रविष्टो भवति । एतादृशः सर्व्वोपकारीति परार्थमपि तस्मै भगवता ज्ञानं दत्तमिति प्रवचनमपि तस्य फलान्तःपातीत्यधिकारिष्वुपस्थिते तथैवोपदिशति च । एतदेवाह ग्राहयेत्यादिना । उप समीपे गमनं प्रवेश इति यावत् । अथवा । ननु ज्ञानभक्त्योरनावृत्तिः फलमत उक्तमेतेन तु कर्मत्वाश्रयेण सर्वेषः फलमावृत्तिरिति यन्निरूपितं तन्नेदं विरुध्यते । न च पुनरावर्त्तत इति श्रुतिः सर्व्वथाऽनावृत्तिमाहेति सावधिकीं तामभरशब्देन तन्निवृत्तिमिव । किमत्र युक्तं सावधिकीमेवेति । तथाहि पूर्व्वकर्म‡नैयत्यस्य त्वयाप्यङ्गीकार्य्यत्वात् तस्य प्ररोहैकस्वभावत्वात्§ तस्य दुरतिक्रमत्वात् तत्फलानुभवस्यावश्यकत्वात् । अपिच ।

---

* न जन्मनिवर्त्तकत्वमिति खं ।

† ब्रह्म स्फुरितमिति पुस्तकान्तरसम्मत पाठः ।

‡ पूर्व्वं कर्म्मनैयत्यस्येति वा पाठः ।

§ प्ररोहैकत्वस्वभावत्वात् इति च पुस्तकान्तरे दृश्यते ।

नामतो इतीवक्तरीत्या तदनुग्रहेण तमुपगच्छन्ति। ज्ञानमार्गेऽङ्गीकृतास्त्वात्मत्वेनैव ज्ञानादुप समीपएव गच्छन्त्युक्तरीत्या अक्षरात्मके तत्रैव प्रविष्टा भवन्तीत्यर्थः। भक्तिमार्गेऽङ्गीकृतास्तु साक्षात् प्रकटे पुरुषोत्तमे सति तद्भजनार्थमुप समीपं गच्छन्तीत्यर्थः। एवं श्रेयोक्तिरियमिति ज्ञायते। सम्प्रदायानुवृत्तिरपि भगवद्भिर्विवेचिताहम्याः स्वयं येन मार्गेण फलं प्राप्तास्तं मार्गमन्यानपि ग्राहयन्त्युपदेशैरथोभयतायात्मत्वमेव हेतुरन्यथा चात्मारामस्य सर्वनिरपेक्षस्यैवंकरणासम्भवेन मोक्षमार्गाप्रसिद्धिरेव स्यात्। तस्मात् सर्वथा अनावृत्तिरेव सूत्राभिमतेति ज्ञेयं।

नन्वात्मत्वेनोक्तिरुपासनार्थेति नोक्तं साधीय इत्यत उत्तरं पठति।

## न प्रतीकेन हि सः॥ ४॥

अतद्रूपे तत्त्वेनोपासनं हि प्रतीकमित्युच्यते। तथाच तादृशेन तेन स मोक्षो न भवतीत्यर्थः। श्रुतिसिद्धत्वादस्ति मोक्ष इति न वक्तुं शक्यमिति भावः। अथवा। आत्मत्वेनोक्तिरुपासनार्थेति यदन्यादौ वक्तव्यः फलार्थमेव तत्। फलञ्च सूत्रकृतापवेंग एवेति तथापि वाच्यं। एवं सत्यादौ ज्ञानमार्गेऽनुपपत्तिमाह। न प्रतीके अनात्मभूते ज्ञानिनः उपगमः पूर्वोक्तः प्रवेशः सम्भवतीति शेषः। भक्तिमार्गेऽपि तामाह न हि स इति। न हि प्रतीकोपासने सः लोकवेदप्रसिद्धः पुरुषोत्तमोऽभ्युपास्यत्वेन येन तत्प्राकट्यं स्यात् तदुपगमनञ्चेत्यर्थः। एवं ज्ञानभक्त्योः फलवत्ता साधिता।

नतु सर्व्वं खल्विदं ब्रह्म आत्मैवेदं सर्व्वमित्यादिश्रुतयः सर्व्वत्र ब्रह्मदृष्टिं मुक्तिसाधनत्वेनोपदिशन्ति। सा च प्रतीकात्मिकैवेति कथं प्रतीकोपासनस्य न मोक्षसाधकत्वमिति प्राप्त उत्तरमाह।

ब्रह्मदृष्टिरुत्कर्षात् ॥ ५ ॥

सर्व्वत्र ब्रह्मदृष्टिर्न प्रतीकात्मिका सर्व्वस्य वस्तुतो ब्रह्मात्मकत्वात्। सा च नोपदेशसाध्या अतो नोपदिश्यते किन्त्वनूद्यते। सा त्वधिकारोत्कर्षात् स्वतएव भवतीति प्रतीकोपासनस्य न मुक्तिसाधनत्वमिति साधूक्तं। एतदेवोक्तमनेन सूत्रेण।

आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ६ ॥

छान्दोग्ये अथ होवाच सत्ययज्ञं पौलुषिं प्राचीनयोग्य कं त्व*मात्मानमुपास्स इत्यादित्यमेव भगवो राजन्निति होवाचेति अथ होवाचेन्द्रद्युम्नमित्युपक्रम्य कं त्वमात्मानमुपास्स इति वायुमेव भगवो राजन्निति होवाचेति एवमेवाग्रे प्रश्नभेदेन वक्तृभेदेनाकाशापःप्रभृतय आत्मत्वेनोपासनाविषया उक्ताः। तथैवासौ वा आदित्यो देवमध्वित्युपक्रम्यान्ते पश्यति य एतमेवं विद्वानादित्यं ब्रह्मेत्युपास्त इति। अत्रेदं चिन्त्यते। अत्र प्रतीकोपासनत्वमस्ति नवेति। अस्तीति पूर्व्वः पक्षः। तथाहि सर्व्वं खल्विदं ब्रह्मेति श्रुतौ सर्व्वमनूद्य ब्रह्मत्वं तत्र बोध्यत इति। न क्वचित् प्रतीकोपासनमस्तीति हि पूर्व्वं निरूपितं। तच्चोक्तश्रुतिभिः प्रत्येकं तत्त्वेनोपास्यत्वेनोक्तया नोपपद्यते। ब्रह्मण एकत्वादेकप्रकारकेनैवोपासनेन सर्व्वेषां फलसिद्धेः पृथक् पृथगुक्तौ गौर-

* कि त्वमिति वा पाठ।

वात् प्रयोजनविशेषाभावाच्च । तादृशाधिकाराभावात् पृथक्-
तदुक्तिरिति चेन्न सर्वत्र सदा तद्भावनायां तथानुभवस्यापि सम्भा-
वात् । एवं सति वस्तुतः सर्व्वस्य ब्रह्मत्वं नाभिमतं किन्तु यथा-
दित्यादीनां तत् तथा * सर्व्वव्यापीति प्रतीकोपासनत्वमेव
सर्व्वत्र तेनैव फलमिति प्राप्ते प्रतिवदति । आदित्यादौ याः
ब्रह्मत्वमतय उच्यन्ते तास्तु साकारस्यैव ब्रह्मणो व्यापकत्वात्
तस्य प्रत्येकमप्यङ्गमुपासितं फलदमित्येकैकाङ्गविषयिण्यस्ताः
विधीयन्ते । उपपन्नं चैतत् । नहि साकारव्यापकब्रह्मणोऽङ्गं
न ब्रह्मातो न प्रतीकोपासनत्वं तत्र । अपरञ्च । असौ वा
आदित्यो देवमध्वित्युक्ता तस्य प्रतिदिक्रश्मीणां रूपावलोकन-
रूपाणां मधुत्वं निरूप्य तद्वत् प्रथमममृतं तद्वसव उपजीव-
न्त्यग्निना मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं
दृष्ट्वा तृप्यन्ति त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्तीति
पठ्यते । तथाच दर्शनमात्रेणान्यधर्म्मनिवृत्तिस्तस्यैव स्वतन्त्रपुरु-
षार्थत्वेन ज्ञानमतिप्रथितस्नेहजनितगाढ़भावेन तत्रैव लयः ।
पुनस्तद्दर्शनानन्दानुभवार्थं भगवानेव कृपया पुनः पूर्व्वभावं
सम्पादयतीति तस्मात् रूपादुदयेतत् सर्व्वं भगवदङ्गत्व
एवोपपद्यत इत्यपि हेत्वभिप्रेतोऽर्थो ज्ञेयः । नहि प्रतीकत्वे इदं
सर्व्वं सम्भवति । भक्तिमार्गीयत्वादस्यार्थस्येति भावः । पदानां
भगवत्स्वरूपात्मकत्वेनैक्यमिति ज्ञापनार्थैकवचनं । एतेन
स्वरूपस्यैव फलत्वमुक्तं भवतीति सूत्रस्य सिद्धान्तः सूचितो
भवति ।

---

* तथा तदा सर्व्वव्यापीति वा पाठः ।

ननु सर्व्वं खल्विदं ब्रह्म आत्मैवेदं सर्व्वमित्यादिश्रुतयः सर्व्वत्र ब्रह्मदृष्टिं मुक्तिसाधनत्वेनोपदिशन्ति। सा च प्रतीकात्मिकैवेति कथं प्रतीकोपासनस्य न मोक्षसाधकत्वमिति प्राप्त उत्तरमाह।

ब्रह्मदृष्टिरुत्कर्षात् ॥ ५ ॥

सर्व्वत्र ब्रह्मदृष्टिर्न प्रतीकात्मिका सर्व्वस्य वस्तुतो ब्रह्मात्मकत्वात्। सा च नोपदेशसाध्या अतो नोपदिश्यते किन्त्वनूद्यते। सा त्वधिकारोत्कर्षात् स्वत एव भवतीति प्रतीकोपासनस्य न मुक्तिसाधनत्वमिति साधूक्तं। एतदेवोक्तमनेन सूत्रेण।

आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ६ ॥

छान्दोग्ये अथ होवाच सत्ययज्ञं पौलुषिं प्राचीनयोग्य कन्त्व*मात्मानमुपास्स इत्यादित्यमेव भगवो राजन्निति होवाचेति अथ होवाचेन्द्रद्युम्नमित्युपक्रम्य कं त्वमात्मानमुपास्स इति वायुमेव भगवो राजन्निति होवाचेति एवमेवाग्रे प्रश्नभेदेन वक्तृभेदेनाकाशापःप्रभृतय आत्मत्वेनोपासनाविषया उक्ताः। तथैवासौ वा आदित्यो देवमध्वित्युपक्रम्यान्ते पठ्यते स एतमेवं विद्वानादित्यं ब्रह्मेत्युपास्त इति। अत्रेदं चिन्त्यते। अत्र प्रतीकोपासनत्वमस्ति नवेति। अस्तीति पूर्व्वः पक्षः। तथाहि सर्व्वं खल्विदं ब्रह्मेति श्रुतौ सर्व्वमनूद्य ब्रह्मत्वं तत्र बोध्यत इति। न क्वचित् प्रतीकोपासनमस्तीति हि पूर्व्वं निरूपितं। तच्चोक्तश्रुतिभिः प्रत्येकं तत्त्वेनोपास्यत्वेनोक्त्या नोपपद्यते। ब्रह्मण एकत्वादेकप्रकारकेनैवोपासनेन सर्वेषां फलसिद्धेः पृथक् पृथगुक्तौ गौर-

* किं त्वमिति वा पाठः।

वात् प्रयोजनविशेषाभावाच्च । तादृशाधिकाराभावात् पृथक्-तदुक्तिरिति चेन्न सर्वत्र सदा तद्भावनायां तथानुभवस्यापि सम्भवात् । एवं सति वस्तुतः सर्वस्य ब्रह्मत्वं नाभिमतं किन्तु यथा-दित्यादीनां तत् तथा* सर्वस्यापीति प्रतीकोपासनत्वमेव सर्वत्र तेनैव फलमिति प्राप्ते प्रतिवदति । आदित्यादौ याः ब्रह्मत्वमतय उच्यन्ते तास्तु साकारस्यैव ब्रह्मणो व्यापकत्वात् तस्य प्रत्येकमप्यङ्गमुपासितं फलदमित्येकैकाङ्गविषयिण्यस्ताः विधीयन्ते । उपपन्नं चैतत् । नहि साकारव्यापकब्रह्मणोऽङ्गं न ब्रह्मातो न प्रतीकोपासनत्वं तत्र । अपरञ्च । असौ वा आदित्यो देवमध्वित्युक्ता तस्य प्रतिदिक्रश्मीणां छपावलोकन-रूपाणां मधुत्वं निरूप्य तद्यत् प्रथममसृतं तद्दसव उपजीव-न्त्यग्निना मुखेन न वै देवा अश्नन्ति न पिबन्तीत्येते देवा अमृतं दृष्ट्वा तृप्यन्ति त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्तीति पठ्यते । तथाच दर्शनमात्रेणान्यधर्मनिवृत्तिस्तस्यैव स्वतन्त्रपुरु-षार्थत्वेन ज्ञानमतिप्रथितस्तैरुत्सविगाढभावेन तत्रैव लयः । पुनस्तद्दर्शनानन्दानुभवार्थं भगवानेव कृपया पुनः पूर्वभावं सम्पादयतीति तस्मात् रूपादुद्यन्त्येतत् सर्वं भगवदङ्गत्व एवोपपद्यत इत्यपि हेतुभिर्मिर्गोऽर्थोऽत्रेयः । नहि प्रतीकत्वे इदं सर्वं सम्भवति । भक्तिमार्गीयत्वात्स्वार्थस्येति भावः । अङ्गानां भगवत्स्वरूपात्मकत्वेनैक्यमिति ज्ञापनायैकवचनं । एतेन स्वरूपस्यैव फलत्वमुक्तं भवतीति मुख्यः सिद्धान्तः सूचितो भवति ।

---

* तदा तदा सर्वस्यापीति वा पाठः ।

आसीनः सम्भवात् ॥ ७ ॥

पूर्वसूत्रेण धर्ममात्रस्य फलत्वमुक्त्वा अधुना धर्मिणः फलत्वं तत्साधनञ्चाह। सम्भवात् उत्कटस्नेहात्मकसाधनस्य सम्भवात् तदधीनः सन् तदग्र आसीनो भगवान् भवति। एतेन भक्तवश्यतोक्ता। एवं बहिःप्राकट्यमुक्त्वा चान्तरं तदाह।

ध्यानाच्च ॥ ८ ॥

भावानौत्कट्यदशायां अभिचारिभावात्मकसततस्मृतिरूपध्यानादपि हृदि प्रकटः सन् चासीनो भवतीत्यर्थः। तेन स्थैर्यमुक्तं भवति। एवं भक्तेच्छयैव स्वरूपप्राकट्यमित्युक्त्वा लीलानाविष्करणमाविष्करणञ्चापि हरिच्छयैवेत्याह।

अचलत्वञ्चापेक्ष्य ॥ ९ ॥

भक्तेच्छामपेक्ष्याचलत्वं चकाराच्चलत्वमपीत्यर्थः।

स्मरन्ति च ॥ १० ॥

केचन भक्ताः स्वरूपनिरपेक्षास्तत्स्मरणजनितानन्देनैव विस्तापवर्गोत्कलत्वा भवन्ति। चकाराच्छ्रवणकीर्त्तनादयोऽपि समुच्चीयन्ते। तदुक्तं। यद्य ह वाव तव महिमामृतसमुद्रविप्रुषा सकृल्लीढया स्वमनसि निष्यन्दमानानवरतसुखेन विस्मारितदृष्टश्रुतसुखलेशाभासाः परमभागवता इति। अथवा अहं भक्तपराधीन इत्यादिस्मृतिः पूर्वोक्ते प्रमाणत्वेनोक्ता।

यत्रैकाग्रता तत्राविशेषात् ॥ ११ ॥

यदिदं विचार्यते। भक्तिराविर्भावो येषांयेष्वन्यान्यस्तेषांस्तेषाञ्च मिथस्तारतम्यमस्ति न वेति। तत्र निर्णयमाह।

यत्र भक्तिर्विकाशता भगवत्स्वरूपे प्रकट एवैकस्मिन् ग्राहक-चित्तधारा नतस्तत्र बहिर्विज्ञानं तत्रोभयोरन्तःपश्यतो बहिः-पश्यतश्च भावे भगवत्स्वरूपे च विशेषाभावान्न तारतम्यमस्ती-त्यर्थः ।

## आप्रायणात् तत्रापि हि दृष्टं ॥ १२ ॥

उक्तेऽर्थे एवायं संशयः । अन्तःप्राकट्यवतो यदा बहिःसंवे-दने सत्यपि पूर्वानुभूतभगवत्स्वरूपानुभवस्तदा पूर्वमन्तरनु-भूतमधुना बहिरनुभवामीत्यनुव्यवसायो भवति नवेति । तत्र नैतस्यायाहर्तुमर्हतीति पूर्वः पक्षः । तत्र सिद्धान्तमाह । आप्रायणादिति । श्रीभागवते । प्रायणं हि सतामसत्तमिति भगवद्वाक्यात् प्रायणशब्देन स्वतःपुरुषार्थत्वेन प्राप्यं परमं पार-लौकिकं फलमुच्यते । तथाच तत्पर्यादोक्तत्य तस्य सैवावस्था सार्वदिकी न तु बहिःप्राकट्येऽपि बहिरनुसन्धानमित्यर्थः । ततस्तस्य तत्र सायुज्यं भवति न वेति संशये निर्णयमाह । तत्रापि प्रायणेऽपि प्राप्ते तस्य पूर्ववत् प्रभुणा सममालापाव-लोकनयोश्चरणनलिनस्पर्शादिकं दृष्टमेव फलं न त्वदृष्टं सायुज्य-मित्यर्थः । यतः शुद्धपुष्टिमार्गेऽङ्गीकृतोऽन्यथा पूर्वोक्तभाव-सम्भवः कथं स्यादित्युपपत्तिर्हि शब्देन सूच्यते । एतच्च तद्भूतस्य तु नातद्भाव इत्यत्र निरूपितं ।

## तदधिगम उत्तरपूर्व्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥ १३ ॥

पुष्टिमार्गीयभक्तस्य फलं निरूप्य मर्य्यादामार्गीयस्य तस्य फलं विचार्यते । तत्र तु ज्ञानपूर्व्वकत्वं भक्तेरावश्यकं कर्म्म मर्य्या-

दाया अपि स्वकृतत्वात्तामनुभाव्यैव भगवता फलं दीयते। तच्च नाभुक्तं क्षीयते तद्भोगानुकूलकर्मणा स्वसजातीयतत्-सन्तानजननादनिर्मोच एव सर्व्वस्य सम्पद्यते। नच प्रायश्चित्त-वज्ज्ञानस्य कर्मनाशकत्वं वक्तुं शक्यं तद्वत्तस्य तदुद्देशेनाविहि-तत्वात्। तथाकथने चान्योन्याश्रयः। दुरितस्य चित्ताशुद्धिहेतु-त्वेन तन्नाशे ज्ञानोदयो यतोऽतोमर्य्यादामार्गे मुक्तिरनुक्तिविष-येति प्राप्त उच्यते। तदधिगमे ब्रह्मज्ञाने सति तज्ज्ञानस्वभावा-देवोत्तराघस्याश्लेषोऽसम्बन्धः पूर्व्वस्य तस्य विनाशो भवती-त्यर्थः। अश्लेषस्योत्पन्नस्याश्लेष इति नार्थस्तस्याक्रान्त्येवोत्पत्ते-स्तदतिरिक्तस्य श्लेषस्याभावादतोऽनुत्पत्तिरेवार्थः। नचैवं मर्य्या-दामार्गीयत्वभङ्गः। साधनं विना स्वरूपबलेनैव कार्य्यकरणे हि पुष्टिरिह तु नियतकर्मविरोधित्वस्वभावेन ज्ञानेनैव तथा सम्पत्तेः। अतएव तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्व्वे पाप्मानः प्रदूयन्त इति श्रुतिरग्निदृष्टान्तमाह। स्मृतिरपि

यथैधांसि समिद्धोऽग्निर्भस्मसात् कुरुतेऽर्ज्जुन।
ज्ञानाग्निः सर्व्वकर्म्माणि भस्मसात् कुरुते तथा॥ इति

सर्व्वं पाप्मानन्तरति तरति ब्रह्महत्यां योऽश्वमेधेन यजत इत्यादि श्रुतिभ्यस्तथापि न तद्भोगनियमो वक्तुं शक्यः। एते-नाभुक्तस्याघस्याभोगे च कर्म्मान्तरजननान्मोक्षासम्भव इति निरस्तं वेदितव्यं। न चान्योन्याश्रयः। अनाद्यविद्याजनित-संसारवासनात्मिका हि सा। सा च गुरूपसत्तिश्रवणमनन-निदिध्यासनादिरूपया ज्ञानसामग्र्यैव नाश्यते। अविद्या परं ज्ञानेन नाश्यत इति क्व तत्प्रसङ्गः ज्ञानसामग्र्या बलिष्ठत्वात्

कर्म्मणो दुर्ब्बलत्वात् तत्प्रतिबन्धकत्वमिति* ज्ञानमाहात्म्यबोधका श्रुतिस्मृतिमता तथाप्यूरीकार्य्यं। इममेव हेतुमाहाचार्य्य-स्तद्व्यपदेशादिति।

इतरस्याप्येवमसंश्लेषः पाते तु ॥ १४ ॥

पापस्य शास्त्रविरोधित्वेन शास्त्रीयज्ञानेन सम विरोधो भवतु नाम धर्म्मस्यातथात्वे नाविरोधएवेत्याशङ्कानिरासाय पूर्व्वन्यायातिदेशमाह। इतरस्य पुण्यस्याप्येवं। पूर्व्वस्य नाश उत्तरस्यासंश्लेष इत्यर्थः। अतिदेशाद्धेतुरपि स एव ज्ञेयः। तथाहि। उभे उ हैवैष एते तरति। क्षीयन्ते चास्य कर्म्माणीति सामान्य-वचनात् ज्ञानाग्निः सर्व्वकर्म्माणीति स्मृतौ सर्व्वशब्दाच्च तथा।

अथेदं मृश्यते। मर्य्यादामार्गीयत्वात् ज्ञानानन्तरं भरत-वत्सङ्गदोषेण भगवद्भावानुरतौ सङ्गदोषोत्पत्तिवदग्रे विहित-निषिद्धकर्म्मणोरप्युत्पत्तिर्भवतु शक्येति ज्ञानस्य न सर्व्वात्मना कर्म्मविरोधित्वमिति तत्र निर्णयमाह। पाते भक्तिमार्गे भग-वद्भावाप्तुरुतिः पात इत्युच्यते। तुरप्यर्थे। अयिमन्दे याचे व्यवच्छेदार्थकतुशब्दोक्त्याऽस्मिन्मार्गे पापस्य व्यवच्छेद एव। न कर्हिचिन्मत्परा इति वाक्यात्। परन्तु मर्य्यादामार्गीयत्वात् प्रारब्धभोगार्थं प्रभुश्चेत् तथा करोति तद्भावे पूर्णे सति तद्दोषोऽ-सम्भावित इति तदैवं भवतीति व्यासाभिप्रायो ज्ञायते। तथा च तस्मिन् सत्युत्तरस्य कर्म्मणोऽसंश्लेष एवेत्यर्थः। पूर्व्वसूत्रे एवमेवाश्लेषशब्दस्य व्युत्पत्तेः।† अतिदेशस्त्वेवंपदेनैव प्राप्तेः सर्व्वं

* तत्प्रतिबन्धकत्वमिति पुस्तकान्तरधृतः पाठः।

† ज्ञानाभावत्वमिति ख।

अतएव श्रीभागवते मृगदारकाभावेन स्वारब्धकर्म्मणा योगा-रम्भणतो विभ्रंशित इति । उपभोगेन कर्म्मारब्धं व्यपनयन्निति च भरतं प्रति वचनं गीयते । एवं सति भविमन्त्रादिप्रतिबद्धशक्ते-रग्नेरिव ज्ञानस्याप्यदाहकत्वे न काचिद्धानिरिति सर्व्वमनवद्यं । इच्छाप्रतिबद्धताहशायां न प्राचीना दशास्तीति तद्व्यवच्छेद-ज्ञापनाय तुशब्दः । एतेन भगवज्ज्ञानस्य सर्व्वतो बलवत्त्वात् कथं तस्य पात इति शङ्का निरस्ता । भगवदिच्छाया मूलकारणत्वे-नोक्तेस्तस्याः सर्व्वतो बलिष्ठत्वात् । तदिच्छा च स्वकृतमर्य्यादा-पालनाय पुष्टावङ्गीकृतेन तथेति सर्व्वमनवद्यं ।

## अग्निहोत्रादि तु तत्कार्य्यायैव तद्दर्शनात् ॥ १६ ॥

ननु प्रारब्धं हि प्राचीनं तन्नाशाय तद्भोगएव कर्त्तव्यो ब्रह्म-विदा न तु विहितमन्यदप्यग्निहोत्रादि प्रयोजनाभावात् । दृश्यते च तादृशानां तत्करणमत उत्तरस्य कर्म्मण· संश्लेष चावश्यक इत्याशङ्का तत्प्रयोजनमाह । तु शब्द· शङ्काव्युदासकः । अग्नि-होत्रादिविहितकर्म्मकरणं तत्कार्य्यायैव । भोगकार्य्याय प्रारब्ध-नाशायैवेत्यर्थं --। येषां अग्निहोत्रादिकारकं प्रारब्धमस्ति तैरेव तन्नाशाय भोगवत् तदपि क्रियते न त्वसाहश्यैरतएव न सनकादीनां तथात्वं * । कुत एतत् । तद्दर्शनात् । यथाकारी यथाचारी तथा भवति साधुकारी साधुर्भवति पापकारी पापो भवति पुण्यः पुण्येन कर्म्मणा भवति पाप· पापेनेति श्रुतिः पूर्व्वकर्म्मणोऽग्रिम-कर्म्महेतुत्वं दर्शयतीति नानुपपत्तिः काचित् । केचित्तु ज्ञानस्य

* तथैवेति इति ख ।

यस्मार्थं तदेवाग्निहोत्रादेरिति तत्कार्य्यायेति पदस्यार्थं वदन्ति। स न साधुः। तदधिगम इत्युपक्रमात् ब्रह्मविदः प्रारब्धात्मकप्रतिबन्धनाशे मोचस्य पूर्व्वज्ञानेनैव सम्पत्तेः कर्म्मणो वैयर्थ्यापातात्। तमेतं वेदानुवचनेनेत्यादि श्रुतिदर्शनं दर्शनपदार्थ इत्यपि पूर्व्वविरोधादुपेक्ष्यः।

## अतोऽन्याऽपि ह्येकेषामुभयोः॥१७॥

तदेवं पूर्व्वसूत्रचतुष्टयेन मर्य्यादामार्गीयभक्तस्य मर्य्यादयैव मुक्तिप्रतिबन्धकभावस्तयैव तन्नाशश्चेति निरूपितं। अथ पुष्टिमार्गीयस्य विनैव भोगं प्रारब्धं नश्यति नवेति विचार्य्यते। तत्र भोगैकनाश्यत्वस्वभावत्वात् तस्य न तं विनाऽन्यापि नश्यतीति प्राप्ते निर्णयमाह। एकेषां पुष्टिमार्गीयाणां भक्तानामुभयोः प्रारब्धाप्रारब्धयोर्भोगं विनैव नाशो भवति। कुत एतत् तत्राह। अतः श्रुतेः कर्म्मणो ज्ञाननाश्यत्वनिरूपिकायाः। ब्रह्मविदएव शमदमादिनिरूपणेन तदनाश्यप्रारब्धाख्यकर्म्मावेदकश्रुतेरन्यापि श्रुतिः पठ्यते। तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्यामिति ज्ञानभोगाभ्यां कर्म्मनाशनिरूपकश्रुत्यन्यायाः श्रुतेर्विरोधपरिहारायावश्यं विषयभेदो वाच्यः। न च काम्यकर्म्मविषयेयं श्रुतिरिति वाच्यं। तदधिगम उत्तरपूर्व्वाघयोरश्लेषविनाशाविति सूत्रेणेतरस्याप्येवमिति सूत्रावयवेन चाविशेषेणारब्धातिरिक्तकर्म्मणोरखिलयोर्नाशनिरूपणात्। पापकृत्यायां काम्यत्वासम्भवाच्च। तस्मादुत्कटतुरग्रहभाजनस्य भक्तस्य स्वप्राप्तिविलम्बमसहिष्णुर्भगवानस्य प्रारब्धमेतत्सम्बन्धिगतं कृत्वा तस्य तेन भोगं कारयति। प्रारब्धं भोगैक-

मार्गमिति स्वकृतमर्य्यादापालनाय न नाशयति। न च तयोर-
मूर्त्तत्वेनाकृताभ्यागमप्रसङ्गेन च नैवं वक्तुमुचितमिति वाच्यं।
ईश्वरत्वेनान्यथापि करणसम्भवात्। मर्य्यादाविपरीतस्वरूप-
त्वात् पुष्टिमार्गस्य न कामनाभावानुपपत्तिर्भावनीया। तस्या भक्ति
भूषणत्वात्। यतएवैकेषामिति दुर्लभाधिकारः सूचितः।

## यदेव विद्ययेति हि ॥ १८ ॥

ननु यदेव विद्यया करोतीति श्रुत्या विद्यापूर्व्वकं कर्म्मकरणं
वीर्य्यातिशयः फलं श्रूयतेऽतो ब्रह्मविद्यावतोऽपि तथात्वमौचि-
त्यात्*उत्तरस्याश्लेष इति यदुक्तं तन्नोपपद्यते इति प्राप्त आह।
यदेवेति। हि यस्माद्धेतोस्तथा यदेव विद्यया करोति श्रद्धयोप-
निषदेति श्रुतिरेव ब्रह्मविदोऽपि कर्म्मोत्पत्तिप्रसंजिकात्वेनोदा-
हृता सा तु न तत्परा। तथाहि। ओमित्येतदक्षरमुद्गीथमुपा-
सीतेत्युपक्रम्य तस्य रसतमत्वं मिथुनरूपत्वमनुज्ञाक्षरत्वं तयो-
मसृप्तिहेतुत्वञ्च निरूप्यैतदर्थे यदेव विद्ययेत्याद्युक्तेति स्वरूप-
तस्तस्यैवाक्षरस्योपव्याख्यानं भवतीत्युपसंहारादुद्गीथोपासनाविषय-
मेव यदेव विद्ययेति वाक्यमिति ज्ञायते। तेनोक्तरसतमत्वादि-
प्रकारकोपासनानां मध्ये यदेव विद्यया करोति तदेव वीर्य्यवत्तरं
भवतीति तदर्थ इति न ब्रह्मविद्यागन्धोऽप्येति न सा प्रकृतोप-
सम्भवतीत्यर्थः। यद्वा। उक्ताशङ्कानिरासायैवाह यदेवेति।
ब्रह्मविदि प्रारब्धवशायैव कर्म्म कुरुते तत्त्वन्यकृतात् कर्म्मणः
सकामात् सवासनत्वाभावाद्वीर्य्यवत्तरं भवत्येवेति नानुपपत्तिः
काचिदित्यर्थः। यद्वा। ननु पुष्टिमार्गीयस्य प्रारब्धस्यापि भोगं

---

* तथात्वमौचित्यात् तदुत्तरस्येति ख।

विनैव नाश इति श्रुत्वाऽसम्भावनां कुर्वाणं प्रति कैमुतिकन्यायेन तत्परिहारमाह । यदेवेत्यादि । जीवनिष्ठा विद्या हि भगवद्-ज्ञानभक्तेरङ्गभूता । एवं सति यत्र धर्मसम्बन्धिसम्बन्धादन्ये-ष्योऽतिशयं कर्माणि वहति श्रुतिस्तत्र साक्षाद्धर्मिसम्बन्धेऽति-शयितकार्य्यसम्पत्तौ कथमसम्भावनां कर्त्तुमुचितेति निगूढा-शयः । अतएव हेतुवाची हि शब्दः ।

भोगेन त्वितरे क्षपयित्वाऽथ सम्पद्यते ॥ १९ ॥

पुष्टिमार्गीयफलप्राप्तौ प्रतिबन्धाभावं सोपपत्तिकमुक्त्वा तत्-प्राप्तिप्रकारमाह । इतरे ये प्राप्यालौकिकदेहाद्भिन्ने स्थूल-लिङ्गशरीरे क्षपयित्वा दूरीकृत्य अथ भगवल्लीलोपयोगिदेह-प्राप्त्यनन्तरं भोगेन सम्पद्यते । सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेति श्रुत्युक्तेन भोगेन सम्पद्यत इत्यर्थः । श्रुत्यर्थस्त्वानन्दमयाधिकरणे निरूपितः । अलौकिकत्वं विनोक्त देहं विना भोगफलप्राप्तेर्व्यवच्छेदकस्तुशब्दः ।

इति श्रीवेदव्यासमतवर्त्तिश्रीवल्लभाचार्य्यविरचिते ब्रह्मसूत्राणु-भाष्ये चतुर्थस्याध्यायस्य प्रथमः पादः समाप्तः ।

---

## द्वितीयः पादः।

### वाङ्मनसि, दर्शनाच्छब्दाच्च ॥ १ ॥

पूर्व्वपादे लौकिकशरीरे क्षपयित्वाऽलौकिकं तत्प्राप्य-
फलेन सम्पद्यत इति निरूपितं। अथाचेदं चिन्त्यते। भक्तस्य
स्थूलशरीरस्य त्यजनं नाम किं तत्स्वरूपनाशमनुत अग्नि-
प्रक्षिप्तचामीकरत्वमिव तस्यैवालौकिकत्वसम्पादनं भग-
वदनुग्रहादिति। तत्रोत्तरएव पक्षः साधीयानिति भाति।
तथाहि। यथा पूर्व्वं संसारिणएव जीवस्य तदनुग्रहात्
पूर्व्वावस्थापगमो मुक्तावस्था चोच्यते तथात्रापि वस्तुस्थित-
त्वात्। न तस्मात् प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते इति
श्रुतिषु जीवस्य सायुज्यमुक्तिकाले तत्प्राणादीनामपि तथै-
वाच। अतएवाग्रे अत्रैव सन् ब्रह्माप्येतीत्युच्यते। पुष्टिमार्गीय-
स्त्रीणामुत्तमभावाच्चैवं तद्विषयिणीति प्राप्ते प्रतिवदामः। ब्रह्मां-
शत्वेन जीवस्यानन्दांशकत्वान्निर्दोषस्वरूपत्वाभिव्यक्त्याच दोषा-
भावागन्तुकत्वात् तदपगमे तस्य तथात्वमुचितं प्राणादयस्तु
न तादृशा इति तद्दृष्टान्तेनात्रापि तथात्वं न वक्तुं शक्यं।
देहेन्द्रियासुहीनानां वैकुण्ठपुरवासिनामिति श्रीभागवतवा-
क्याच। नच लौकिकत्वविशिष्टदेहादिरत्र निषिध्यत इति वाच्यं।
सामान्यनिषेधे बाधकाभावात्। न च तदनुभवएव बाधक
इति वाच्यं। भगवत इव तदीयानामपि तेषां तथात्वे बाधका-

अतएव च सर्व्वाण्यनु ॥ २॥

अतएव दर्शनाच्छब्दाच हेतोः सर्व्वाणीन्द्रियाणि अनु सान्निध्यात्। वाचः पश्चान्मनसि सङ्गतानि भगवदानन्देन सम्पद्यन्त इत्यर्थः। केचित्तत्र छान्दोग्यस्थं वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायामिति वाक्यं विषयत्वेनोक्ता सूत्रे वाक्यद्वयस्य तद्वृत्तिपरत्वं वदन्ति। सम्पत्तिं तत्राप्यत्र। तन्न साधीयः। तथाहि। वाक्यद्वयस्य वृत्तिपरत्वमेवाभिमतं स्यात् सूत्रकारस्तदा तथैव वदेन्न तु तत्स्वरूपमेव वाक्यं। तन्निर्णयार्थमेव प्रवृत्तिः मुख्यार्थत्यागो लक्षणापत्तिश्च। किञ्चैवं मनसीति पदमैयर्थ्यं स्यादिषयवाक्योक्तक्रमत्यागानुपपत्तिश्चेति।

तन्मनः प्राण उत्तरात् ॥ ३ ॥

पूर्व्वोक्तसर्व्वेन्द्रियविशिष्टमनः प्राणे सम्पद्यते न तु केवलं तत्र हेतुरुत्तरादिति। स यथा शकुनिः सूत्रेण प्रबद्धोदिशं दिशं पतित्वा अन्यत्रायतनमलब्ध्वा बन्धनमेवोपश्रयत एवमेव खलु सौम्य तन्मनोदिशं दिशं पतित्वान्यत्रायतनमलब्ध्वा प्राणमेवोपश्रयत इत्युक्ता तत्र हेतुमुत्तरेण वाक्येनाह प्राणबन्धनं हि सौम्य मन इति। तस्माद्धेतोस्तथेत्यर्थः।

सोऽध्यक्षे तदुपगमादिभ्यः ॥ ४ ॥

सर्व्वेन्द्रियविशिष्टमनोविशिष्टः प्राणोऽध्यक्षे पुरी हृदि वा प्रकटे भगवति सम्पद्यत इत्यर्थः। अत्र हेतुः। उपगमादिभ्य इति। उपगमोऽभ्युपगमः पुष्टिमार्गेऽङ्गीकार इति यावत्। ततस्तथेत्यर्थः। आदिपदाद्भगवदधीकारणसमर्थः स्नेहः प्रश्ननिष्कि-

तार्थत्यागस्तदनुरूपं भजनञ्च। अभ्युपगमे सिद्धे खेदादयोऽवश्यं भवन्त्येवेत्याशयेन तदादित्वमुक्तं। नोद्देशः कृतः। मर्यादामार्गेऽङ्गीकृतानान्तु मुक्तिपर्य्यवसायित्वेन मुमुक्षुत्वादुत्कटखेदासम्भवेन प्रभुप्राकट्यासम्भवात् खप्रकृतौ सङ्घातलये शुद्धजीवस्य भगवदनुग्रहेण श्रवणादिरूपया तथाविधस्नेहरूपया च भक्त्या मुक्तिः सम्पद्यत इति अत्रैव तारतम्यमिति निगूढाशयेनेदमुक्तं। अभ्युपगमादयस्तु मुण्डकोपनिषत्सु पठ्यन्ते। नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनुं स्वां। नायमात्मा बलहीनेन लभ्यो न च प्रमादात् तपसो वाप्यलिङ्गात्। एतैरुपायैर्यतते यस्तु विद्वांस्तस्यैष आत्मा विशते ब्रह्मधामेति उक्तं निगूढमाशयं प्रकटयति।

## भूतेषु तच्छ्रुतेः॥ ५॥

ननु मर्य्यादामार्गीयाणामप्येवमेव वागादित्वय उतान्यथेति संशये निर्णयमाह। तेषान्ते भूतेषु लीयन्ते तत्प्रकारीत्या भगवति। अत्र प्रमाणमाह। तच्छ्रुतेः। यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणः चक्षुरादित्यं मनश्चन्द्रं दिशः श्रोत्रं पृथिवीं शरीरमाकाशमात्मौषधीर्लोमानि वनस्पतीन् केशा अप्सु लोहितञ्च रेतश्च निधीयत इति श्रुतेः। नचाविद्वद्विषयिणीयं श्रुतिरिति वाच्यं। याज्ञवल्क्येति होवाच यत्रायं पुरुषो म्रियत उदस्मात् प्राणाः क्रामन्त्याहो नेति नेति होवाच याज्ञवल्क्योऽत्रैव समवलीयन्ते स उच्छ्वयत्याध्मायत्याध्मातोमृतः शेत इति पूर्व्ववाक्यात्। नह्यविदुषः प्राणानामनुत्क्रमः। तमुत्क्रामन्तं प्राणोऽनूत्क्रामतीत्यादिश्रुतेः। ननु यत्रास्य पुरुषस्येत्युप-

कस्य रेतस निधीयेत इत्यन्ता श्रुतिरविद्वद्विषयिणीति मन्तव्यं । यत एतदग्रे क्वायं तदा पुरुषो भवतीति प्रश्ने याज्ञवल्क्यार्त्त-भागाभ्यां विचारितमुत्तरमुच्यते तौ ह यदूचतुः कर्म्म हैव तदूचतुरथ ह यत्प्रशशंसतुः कर्म्म हैव तत्प्रशशंसतुः पुण्यो वै पुण्येन कर्म्मणा भवति पापः पापेनेति । एतेन कर्म्माश्रयस्तिष्ठतीति निर्णयः सम्पद्यते । एवं सति प्राणानुत्क्रमणोक्त्या सङ्घातत्वोक्त्या च विद्वद्विषयत्व*मवावसीयते । यतस्तस्यैवोक्तद्वयं सम्भवति । अपिमत्युत्युक्तकर्म्माश्रयत्वञ्च तस्मिन् विरुद्धमतः पूर्व्वोत्तरविरो-धाद्विषयानिर्णये प्राप्ते प्रतिवदामः । मर्य्यादामार्गीयवि-द्विषयिण्येवेयं श्रुतिरिति । अत एव प्रश्ने क्व तदा पुरुषो भव-तीत्येतावतैव चरितार्थेऽपि साधारणपुरुषव्यावृत्त्या मर्य्यादा-मार्गीयतत्प्रापकमयमिति पदं तस्यैवोपक्रान्तत्वात् तथा । अपिमविचारितोऽर्थोऽपि तद्विषयक † एवेति बुध्यस्व । ननूक्तं बाधकमिति चेत् हन्त श्रुतिशिरःसमाकलितमाकलय । मर्य्यादामार्गे हि विधिप्राधान्यं तथैव तन्निर्माणात्‡ । तत्र ह्येवं कृत एवं फलं दास्ये नत्वकृतेऽपीति भगवदिच्छा अतः कर्म्म प्रधानं । एवं सत्यार्त्तभागस्यायमाशयः । वागादिरेतोऽन्त-लयेन प्रारब्धस्यापि तदा नाशात् शुद्धं जीवं विश्वविषयं कदाचित्पुष्टौ प्रवेशयति नवेति संशयेन तदायं कि§ मर्य्यादा-मार्गे एवोत पुष्टावपि प्रवेशितो भवतीति प्रश्नः । तदाऽस्यार्थ-

---

* विद्वद्विषयत्वमारभ्य कर्म्माश्रयत्वञ्चेत्यन्तं खपुस्तके नास्ति ।

† तद्विषय एवेति ख ।

‡ विधिप्राधान्यात् तथैव निर्माणात् इति खं ।

§ तदायं क इति ख ।

स्वेश्वरेच्छाचारीतिमविदुषो दुर्ज्ञेयत्वं जानन्ती स्वयमेव यद्‌व-
धारितवती तदपि रहस्यमिति स्फुटमनुक्त्वा श्रुतिः पर्य्यवसित-
मर्थमुक्तवती तौ हेत्यादिना । अत कर्म्मपदं मर्य्यादामार्गपरं ।
तथाच मर्य्यादामार्गएव तस्य स्थितिरित्यर्थः सम्पद्यते । मुक्तएव
भवतीति यावत् । अतएव तत्प्रशंसापि यत ईश्वरत्वेन सर्व्व-
करणसमर्थोऽपि तद्दाने तदपेक्षते । अत हेतुत्वेन मर्य्यादा-
मार्गस्वरूपमुक्तं पुण्यो वा इत्यनेन* । ननु मर्य्यादामार्गीयो
भक्तो ज्ञानी च भवति उक्तनिर्णयस्तु ज्ञानमार्गीयविषयएव
भक्ते नाड्यमपि कदाचित् पुष्टावपि प्रवेशयतीत्याशङ्क्य तन्नि-
र्णयमाह ।

## नैकस्मिन् दर्शयतो हि ॥ ६ ॥

एकस्मिन् ज्ञानिनि भक्ते वा मर्य्यादानियमो न । किन्तू-
भयोरपि । तत्र हेतुर्दर्शयत इति । यतो याज्ञवल्क्यार्त्तभागौ
ज्ञानिभक्तसाधारण्येन मर्य्यादानियमं दर्शयत उक्तरीत्या तौ
हेत्यादिना । अन्यथा मार्त्तभागीकारोऽन्यथा† भवेदित्युपपत्तिर्हि
शब्देन सूच्यते । पूर्व्वोक्तपूर्व्वोत्तरश्रुतिविरोधपरिहारान्यथा-
नुपपत्तिरत्र मूलमिति ज्ञेयं । केचित्तूपसंहृतेषु वागादिषु
शरीरान्तरप्रेप्सासामयिको जीवः क्वायं तदा पुरुष इति प्रश्न-
विषय इति वदन्ति । तन्न साधीयः । तमुत्क्रामन्तं प्राणोऽनूत्-
क्रामति प्राणमनूत्क्रामन्तम् सर्व्वे प्राणा अनूत्क्रामन्तीति श्रुति-
भिर्विदेहान्तरजीवस्य प्राणानामिन्द्रियाणाञ्च सहैवोत्क्रमणं

---

* इत्यादिना इति ख ।

† मार्त्तभागीकृतिरन्यथा इति ख ।

वदतीति वागादिलयस्य तत्रारम्भवाचोक्तस्य मन्त्रविषयत्वं वक्तुं युक्तं। पूर्व्ववाक्येऽपि वमन्तीयन्त इत्युक्तत्वाच्चातोऽस्मदुक्त एव मार्गोऽनुसर्त्तव्यः। एतेन नायं परविद्यावान् यतोऽमृतत्वमेव तत्-फलमिति* तच्च देशान्तरानायत्तमित्युत्क्रमणापेक्षकर्म्माश्रयत्वञ्च न स्यात् किन्त्वपरविद्यावांस्तस्मात् ब्रह्मलोकावधिफलमिति कर्म्माश्रयत्वोत्क्रमणादिकं सम्भवतीत्यपि निरस्तं वेदितव्यं।

समाना चासृत्युपक्रमादमृतत्वञ्चानु-
पोष्य ॥ ७ ॥

मर्य्यादापुष्ट्योर्न कदाचिदन्यथाभाव इति यदुक्तं तत्र हेत्व-पेक्षायां वस्तुस्वरूपमेव तथेति बोधयितुमाह। समानेत्यादि। अयमाशयः। साधनक्रमेण मोक्षनेच्छा हि मर्य्यादामार्गीया मर्य्यादा। विहितसाधनं विनैव मोक्षनेच्छा पुष्टिमार्गमर्य्यादा। तथा सति सदैकरूपत्वं तयोर्युक्तमिति। एतदेवाह सृतिः संसृतिर्जीवानां स्वस्मात् पृथक्कृतानामविद्ययाऽहन्ताममतास्पदीकरणं तदुपक्रम आरम्भस्तं मर्य्यादीकृत्य मुक्तिपर्य्यन्त-स्वरूपा मर्य्यादा समाना सदैकरूपा मध्ये नान्यथा भवतीत्यर्थः। एवमेवानुपोष्य व्रतमकृत्वाऽमृतत्वमपि पुष्टिमार्गे समानमित्यर्थः। अनुपोष्यपदमशेषमुक्तिसाधनोपलक्षणं। एवं प्रासङ्गिकमुक्त्वा प्रकृतं परामृशति। सोऽध्यक्ष इति सूत्रेण पुष्टिमार्गीयभक्त-सङ्घातस्य भगवत्येव लय इत्युक्तमक्रमेण तेन मर्य्यादामार्गीयभक्त-सङ्घातस्य भूतेषु लयमुक्त्वा पश्चादनन्तरं शुद्धजीवस्य तस्य मुक्ति-

---

* तत्फलमिति च।

रेव भवतीति वक्तव्ये सत्याह सोम्य हस्तमित्यादिना स्वाशय-
मन्येष्वप्रकटयन्तौ कर्म्म यन्निरूपितवन्तौ तत्कृत इत्याशङ्का
तयोराशयं निगूढं प्रकटयति ।

तदाऽपीतेः संसारव्यपदेशात् ॥ ८ ॥

तदा नित्यलीलान्तःपातित्वलक्षणपुष्टिमार्गीयमुक्तिदशायां मर्य्यादा-
मार्गीयाया अपीतेर्मुक्तेः संसारत्वाभावेऽपि पुरुषोत्तमभजना-
नन्दानुभवाभावात् संसार इत्येव पुष्टिमार्गे व्यपदेशो यतः
क्रियतेऽतस्तदभिसन्धाय तथा रीत्या निरूपणं । अतएव श्री-
भागवते श्रीशिववचनं गीयते

नारायणपराः सर्व्वे न कुतश्चन बिभ्यति ।
स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिन इति ।

श्रीभगवद्गीतास्वपि देवान् देवयजो यान्ति मद्भक्ता यान्ति
मामपीति वाक्ये मर्य्यादामार्गीयभक्तमुक्तेरितरसाधारण्यमु-
च्यते । ननु संसारत्वमुक्तेरपि हेयत्वं यत्र तादृशं चेत् पुष्टिमार्गीयं
तत्त्वं तदा मुक्तेः पुरुषार्थत्वबोधिकायाः श्रुतेः प्रतारकत्वमापत-
तीति तद्बोधकप्रमाणानां तत्स्तुतिमात्रपरत्वमेवेति प्राप्त आह ।

सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ ९ ॥

पुष्टिमार्गीयं तत्त्वं सूक्ष्मं दुर्ज्ञेयमित्यर्थः । अयमाशयः ।
पुष्टिमर्य्यादामप्यतिक्रम्य पुष्टिपुष्टौ प्रवेशे तत्तत्त्वमनुभवविषयो
भवति नान्यथा । तत्र प्रवेशस्त्वतिदुरापोऽतिशयितानुग्रहेतरा-
साध्यत्वादत उक्तेतराक्षेवमेव तद्भवति । तेषान्तु मुक्तिरेव फलं
तथा एवेष्टत्वाद्रागिणां स्वर्गादिवत् । इष्टफलाप्राप्तौ हि प्रता-
रकत्वमन्यथा मध्याहिमार्गीयफलबोधिकाया अपि श्रुतेः प्रतार-

वदतीति वागादिलयस्य तत्रारम्भवाचोक्तस्य प्रश्नविषयत्वं वक्तुं शक्यं। पूर्ववाक्येऽत्रैव समलीयन्त इत्युक्तत्वाच्चातोऽस्मदुक्त एव मार्गोऽनुसर्त्तव्यः। एतेन नायं परविद्यावान् यतोऽमृतत्वमेव तत्-फलमिति* तत्र देशान्तरानायत्तमित्युत्क्रमणापेक्षकर्माश्रयत्वञ्च न स्यात् किन्त्वपरविद्यावांस्तस्यास्तु ब्रह्मलोकावधिफलमिति कर्माश्रयत्वोत्क्रमणादिकं सम्भवतीत्यपि निरस्तं वेदितव्यं।

समाना चासृत्युपक्रमादमृतत्वञ्चानु-
पोष्य ॥ ७ ॥

मर्यादापुष्ट्योर्न कदाचिदन्यथाभाव इति यदुक्तं तत्र हेत्व-पेक्षायां वस्तुस्वरूपमेव तथेति बोधयितुमाह। समानेत्यादि। अयमाशयः। साधनक्रमेण मोक्षनैच्छा हि मर्यादामार्गीया मर्यादा। विहितसाधनं विनैव मोक्षनैच्छा पुष्टिमार्गमर्यादा। तथा सति सदैकरूपत्वं तयोर्युक्तमिति। एतदेवाह सृतिः संसृतिर्जीवानां स्वस्मात् पृथक्कृतानामविद्ययाऽहन्ताम-मतात्मदीकरणं तदुपक्रम आरभ्य मर्यादीकृत्य मुक्तिपर्यन्त-मुक्तरूपा मर्यादा समाना सदैकरूपा मध्ये नान्यथा भवतीत्यर्थः। एवमेवानुपोष्य अमृतत्वमपि पुष्टिमार्गे समानमित्यर्थः। अत्रोपोषणपदमशेषमुक्तिसाधनोपलक्षणं। एवं प्राथक्रियमुक्ता भक्तं परामृशती। सोऽध्यक्ष इति सूत्रे पुष्टिमार्गीयभक्त-सङ्घातस्य भगवत्येव लय इत्युक्तमक्रमेण तेन मर्यादामार्गीयभक्त-सङ्घातस्य भूतेषु लयमुक्त्वा यथानन्तरं शुद्धजीवस्य तस्य मुक्ति-

* तत्फलमिति क।

रेव भवतीति वक्तव्ये सत्याह सोम्य इत्यमित्यादिना स्वाश्रय-
मन्त्रेष्वप्रकटयन्तो कर्म यद्विरूपितवन्तो तत्कुत इत्याशङ्का
तयोराशयं निगूढं प्रकटयति ।

## तदाऽपीतेः संसारव्यपदेशात् ॥ ८ ॥

तदा नित्यलीलान्तःपातलक्षणपुष्टिमार्गीयमुक्तिदशायां मर्यादा-
मार्गीयाया अपीतेर्मुक्तेः संसारत्वाभावेऽपि पुरुषोत्तमभजना-
नन्दानुभवाभावात् संसार इत्येव पुष्टिमार्गे व्यपदेशो यतः
क्रियतेऽतस्तदभिसन्धाय तया रीत्या निरूपणं । अतएव श्री-
भागवते श्रीशिववचनं गीयते

नारायणपराः सर्व्वे न कुतश्चन बिभ्यति ।
स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिन इति ।

श्रीभगवद्गीतास्वपि देवान् देवयजो यान्ति मद्भक्ता यान्ति
मामपीति वाक्ये मर्यादामार्गीयभक्तमुक्तेरितरसाधारण्यमु-
च्यते । ननु संसारत्वमुक्तेरपि हेयत्वं यत्र तादृशं चेत् पुष्टिमार्गीयं
तत्त्वं तदा मुक्तिः पुरुषार्थत्वबोधिकायाः श्रुतेः प्रतारकत्वमापत-
तीति तद्बोधकप्रमाणानां तत्स्तुतिमात्रपरत्वमेवेति प्राप्त आह ।

## सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ ९ ॥

पुष्टिमार्गीयं तत्त्वं सूक्ष्मं दुर्ज्ञेयमित्यर्थः । अथायमाशयः ।
पुष्टिमर्यादामप्यतिक्रम्य पुष्टिपुष्टो प्रवेशे तत्तत्त्वमनुभवविषयो
भवति नान्यथा । तत्र प्रवेशस्त्वतिदुरापोऽतिशयितानुग्रहैतरा-
साध्यत्वादत उक्तैतराप्तेश्चमेव तद्भवति । तेषान्तु मुक्तिरेव फलं
तस्या एवेष्टत्वीद्राणिणां स्वर्गादिवत् । इष्टफलाप्राप्तौ हि प्रता-
रकत्वमन्यथा प्रवृत्तिमार्गीयफलबोधिकाया अपि श्रुतेः प्रतार-

कत्वं स्यात्। इच्छा चाधिकारानुसारिणीति नानुपपन्नं किञ्चिदिति। नन्वेवं विधार्थोऽस्त्वित्ये किं मानमित्याकाङ्क्षायामाह। प्रमाणत इत्यादि। प्रमाणं श्रुतिः सा तु यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह। आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चनेति एतए ह वाव न तपति। किमहं साधु नाकरवं। किमहं पापमकरवमिति। अत्र पूर्व्वार्द्धेन दुर्ज्ञेयत्वमुत्तरार्द्धेन तज्ज्ञता च बोध्यते। अन्यथा मनसोऽप्यप्राप्यस्य वेदनकथनं विरुद्धं स्यादतो दुर्ज्ञेयत्वेनैव धर्म्मियाहकमानसिद्धं तदित्यर्थः। चकारात् तादृशानामनुभवः परिगृह्यते। तर्हि ब्रह्मविदामिव तादृशानां भक्तानामपि स्वमार्गोपदेशनं क्वचित् श्रूयेत न चैवमतः पूर्व्वोक्तं न साधीय इति भातीत्युत्सूत्रमाशङ्क्य तत्र हेतुमाह।

## नोपमर्द्देनातः ॥ १० ॥

उपदेशनं यदा स्याद्यदि ब्रह्मविदामिव तेषां स्वास्थ्यं स्यात् यतस्तेषां विरहदिगामियसङ्गमदया चेति द्वयमेव भवति नान्या। पूर्व्वस्यास्वास्थ्यतिदुःसहत्वेन सर्व्वेषां भावानामुपमर्द्देन तिरोधानेनोपदेशो न भवतीत्यर्थः। सङ्गमे तु यतः पुरःप्रकटपरमानन्दस्वरूपाद्भगवत एव हेतोरुपदेशोऽप्यत्र न भवतीत्यर्थः। न हि भगवद्ये स सम्भवतीति भावः। ननु रसो वै सः रसए ह्येवायं लब्ध्वाऽऽनन्दीभवतीत्युपक्रम्यैष ह्येवानन्दयातीति श्रुतेरुक्तरूपानन्दप्राप्तौ दुःसहविरहतापे तस्य श्रुतिमानन्दतिरोधानस्य तत्सम्भवात्। तद्धेतोरसम्भवात् तत्प्राप्तिरेव न स्यादिति प्राप्त उत्तरं पठति।

## अस्यैव चोपपत्तेरूष्मा ॥ ११ ॥

आनन्दात्मकरसात्मकस्यास्यैव भगवतएव धर्म्मः ऊष्मा विरह-ताप इत्यर्थः । विरोधपरिहारायाह । उपपत्तेरिति । इदमुक्तं भवति । भगवद्विरहस्यासर्व्वसाधारणत्वेऽपि* स्थायिभावात्मक-रसरूपभगवत्प्रादुर्भावो यस्य† हृदि भवति तस्यैव तदप्राप्तिज-स्तापस्तदनन्तरं नियमतस्तत्प्राप्तिश्च भवति न त्वतथाभूत-स्येत्यन्वयव्यतिरेकाभ्यामुक्तरसस्यैवैष धर्म्म इति निर्णीयते । तस्य वस्तुत एव तथात्वात् तापोऽपि रसात्मकएव ।

## प्रतिषेधादिति चेन्न शारीरात् ॥ १२ ॥

ननु न पश्यो मृत्युं पश्यति न रोगं नोत दुःखमिति श्रुत्या‡ दुःखप्रतिषेधस्तादृशे भक्ते क्रियत इति तस्य दुःखित्वं न वक्तुं शक्यमित्याशङ्क्य प्रतिषेधति नेति । कुतः शारीरात् । शरीर-सम्बन्धिनो हेतोर्यद्दुःखं कर्म्मजनितमिति यावत् तस्यैव श्रुतौ प्रतिषेधात्तत्रानुपपत्तिरित्यर्थः । एतेन दुःखत्वेन कर्म्मजन्य-त्वानुमानमपि निरस्तं वेदितव्यं । लौकिकएव दुःखे तज्जन्यत्व-नियमात् ।

## स्पष्टोह्येकेषां ॥ १३ ॥

एकेषां शाखिनां भगवत्स्वरूपलाभानन्तरं दुःखतत्त्विव-

---

* सर्व्वसाधारणत्वेऽपीति ख ।
† यस्य हृदीति ख ।
‡ श्रुत्यात्वादृतेऽश्रौ श्रुतिनिति ख ।
तथा एतेन दुःख इति ख ।
रसात्मक निर्णीयते इति ख ।

त्तंनलक्षणोऽर्थः स्पष्टं पद्यते। तथाहि। रसोवै सः। रसछ्ह्येवायं लब्ध्वाऽनन्दीभवति। कोह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यात्। एष ह्येवानन्दयाति। अत्र रसात्मकभगवत्स्वरूपलाभे सत्यानन्दवत्त्वमुक्त्वा तस्यैव जीवनहेतुत्वं परमानन्दहेतुत्वं चोच्यते। मरणहेतूपस्थित्यभावे जीवनहेतुत्वं न वदेत्। स रसस्तु संयोगविप्रयोगभावाभ्यामेव पूर्णो भवत्यनुभूतो नेकतरेण। तत्र विरहतापस्यात्युपमर्दित्वेन तदा प्राणस्थितिरपि न स्याद्यदि रसात्मको भगवान् हृदि न स्यादित्याशयेनाह कोह्येवान्यादिति। यत् यदि एषः हृदि स्फुरद्रूप आकाशो भगवांश्च स्यात् कस्तदाऽन्यात्। अन प्राणने। को वा जीवयेच्च कोऽपीत्यर्थः। तादृशस्य भगवत्स्वरूपातिरिक्तस्य जीवनमिति ज्ञापनाय सामान्यपदं। ब्रह्मानन्दाधिकपूर्णानन्दविरहासन्नमरणनिवारणासामर्थ्यमतादृशस्योचितमेवेति ज्ञापनाय हि शब्दः। तादृशस्य जीवनसम्पादनं प्रभोरावश्यकमिति ज्ञापनायैवकारः। तापात्मकस्याप्यानन्दात्मकत्वमेवेति ज्ञापनायानन्दपदं। तदा प्रलापगुणगानादयो ये भवन्ति तेऽपि तद्धर्माएव। नीलाम्बुदश्यामोऽतिक्लेशवशाद्धृदयादपगच्छतीति भावेऽपि हृदयान्नापसारयितुं शक्य इति ज्ञापनाय चाकाशत्वमुक्तं। तदनन्तरं प्रकटीभूय तदन्यः को वा मकर्षेण दर्शनस्पर्शाश्लेषभाषणादिभिः स्वरूपानन्ददानेनान्यात् पूर्वतापनिवृत्तिपूर्वकमानन्दपूर्णं कुर्यादित्यर्थः। रसछ्ह्येवायं लब्ध्वाऽनन्दीभवतीति पूर्ववाक्येनैवान्वयव्यवच्छेदपूर्वकं भगवत्प्राप्तेरानन्दहेतुत्वप्राप्तावपि यत् पुनराह तत्रापि व्यतिरेकमुखेन तथापि जीवनहेतुत्वं तदपि सामान्यविशेषाभ्यां

वारद्वयं तेन विरहसामयिकोक्तरूपएवार्थः श्रुतेरभिप्रेत इति निर्णीयते । अन्यथा मरणहेतुत्वनुपस्थितौ जीवनहेतुत्वं न वदेदित्युक्तदवस्थापन्नः को वा पुरुषो जीवेदिति वार्थः ।

स्मर्य्यते च ॥ १४ ॥

भगवद्भावस्य मरणहेतुत्वं तेनैव च जीवनं तस्य ब्रह्मादिदुरापत्वञ्च श्रीभागवते स्मर्य्यते मय्यनस्का मय्याथा मदर्थे त्यक्तदैहिकाः यत्वक्तलोकधर्म्माय मदर्थे तान्बिभर्म्यहमित्युपक्रम्य धारयन्त्यथ कृच्छ्रेण प्रायः प्राणान् कथञ्चनेत्यादि श्रीप्रभुवचनं । श्रीमदुद्धववचनञ्च

एताः परन्तनुभृतो भुवि गोपवध्वो
गोविन्दएव निखिलात्मनि रूढ़भावाः ।
वाञ्छन्ति यं भवभियो मुनयोवयञ्च
किं ब्रह्मजन्मभिरनन्तकथारसस्य ॥ इत्यादि

तेन भगवतएव जीवनहेतुत्वं भावस्य च परमपुरुषार्थत्वन्दुरापत्वञ्च स्फुटमवगम्यते ।

तानि परे तथाह्याह ॥ १५ ॥

ननु यदि वहिरप रसात्मकभगवत्प्राकट्यं तद्दर्शनजनितो विरहभावस्तज्जनितव्रतापकेन मरणोऽस्थितिस्तन्निवर्त्तनं तदीत्कर्ष्यं सदा प्राकट्यं ततः पूर्णस्वरूपानन्ददानादिकं लोके क्वचिदपि,न दृष्टं श्रुतं वा वैकुण्ठे याति कुत इत्याशङ्कायामाह तानि उक्तानि वस्तूनि परे प्रकृतिकालाद्यतीते वैकुण्ठादप्युत्कृष्टे श्रीगोकुलमएव सन्तीति शेषः । तत्र प्रमाणमाह । तथाह्याह श्रुतिः । ऋग्वेदे पठ्यते ता वां वास्तून्युष्मसि गमध्यै यत्र गावो

भूरिशृङ्गा अयासः। अत्राह तदुरुगायस्य वृष्णः परमं पदमवभाति भूरि। ता तानि। वां भगवत्तदन्तरङ्गभक्तयोः सम्बन्धीनि वास्तूनि वस्तूनि गमध्यै प्राप्तुमुश्मसि कामयामहे। तानि कानीत्याकाङ्क्षायां गूढाभिसन्धिमुद्घाटयति। यत्र श्रीगोकुले गावो भूरिशृङ्गा बहुशृङ्गा वत्सप्रभृतयोस्तत्र वसन्तीति शेषः। अयासः शुभावहाः। तत् उरुगुणविशिष्टं उरुगीयत इत्युरुगायस्तस्य। गोप्यो हि सततं तं गायन्ति। अतएव तदादिभक्तेषु कामान् वर्षतीति वृषा तस्य परमं प्रकृतिकालाद्यतीतं पदं स्थानं भगवतो वैकुण्ठं भवति। तत्रैतादृगलीलाऽभावेन तस्मादपि परमंमुत्कृष्टं। अत्र भूमाववभाति प्रकाशत इत्यर्थः। तथापि त्वदृग्गोचरो न भवतीति खेदेन अहेत्याह श्रुतिः। उरुगीयते परं सर्वैत कामवर्षणं भक्तेष्वेवेति तात्पर्येण वा विशेषणद्वयमुक्तं। यमुनापुलिनतदुपवननिकुञ्जगह्वरप्रदेशाद्रिसान्वाद्यात्मकत्वेन भूरि बहुरूपं। तथा चैतादृशं यत् परमं पदमवभाति तत्सम्बन्धीनि वास्तूनि कामयामह इति वाक्यार्थः सम्पद्यते। ते पदार्थाः* इति वक्तव्ये सति तानीत्युक्तिर्या सा विषयवाक्याविरोधादिति ज्ञेयं। पुरुषोत्तमसम्बन्धर्थानां तत्प्राकट्यस्थानएव प्राकट्यं युक्तमिति हि भव्यैनाह।

## अविभागो वचनात्॥ १६॥

ननु लीलाया नित्यत्वेन तन्मध्यपातिनां तद्दर्शनं यथा नित्यं तथा तादृक्साधनाभावेऽपि निजानुकम्पया कदाचित् कमपि भक्तं तत्र नयति चेत् तदा कञ्चित्कालं स्थापयित्वा ततः†

* पदार्था इति ख।

† ...र्थविना तत इति ख पुस्तके नास्ति।

वियोजयति नवेति संशयः। नोपस्य कादाचित्कत्वात् तत्-साध्या तत्र स्थितिरपि तथैवेति वियोजयतीति पूर्व्वः पक्षस्तत्र सिद्धान्तमाह। तत्र प्रवेशितस्य तत्रात्(?)विभागएव। कुतः। वचनात्। तैत्तिरीयक उक्तार्थनन्तरमेव विष्णोः कर्माणि पश्यते-त्यृचा तत्र कृतानि कर्माण्युक्त्वा तद्ये वदति विष्णोः परमं पदं सदा पश्यन्ति सूरय इति। पुरुषोत्तमस्वरूपवित्त्वं सूरित्वं तच भक्तस्यैवेति सूरयो भक्ताएव तेषां सदा दर्शन-मुच्यते। अन्यथा लीलानित्यत्वेनैव पूर्व्वमर्थान्तर स्थितगवादीनां प्रभुकार्य्यविषयाणाञ्च भक्तानां सदा तद्दर्शनस्य प्राप्तत्वादिदं न वदेत्तस्मादविभागएव। एतेनापि लीलानित्यत्वं* सिध्यति। एतद्यथा तथा विद्वन्मण्डने प्रपञ्चितं। एवं पुष्टिमार्गीयभक्त-वृत्तान्तमुक्त्वा ज्ञानमार्गीयस्य तमाह।

तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात् तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॥ १७ ॥

पूर्व्वं भूतेषु तदपीतेरित्यादिना मर्य्यादामार्गीयस्य वागा-दिलय उक्तोऽधुना तस्य जीवात्मन उत्क्रमणप्रकार उच्यते। स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामतीति† श्रुतेरुक्तात्मन ओको आयतनं हृदयं तदग्रं पूर्व्वं प्रज्वलति पूर्व्वं यथाऽप्रकाशमभूत्तदिदानीमपि तदा प्रकाशत इति यावत्। तदा तत् प्रकाशितं द्वारं निर्गमनमार्गो यस्य तादृश उत्क्रामति।

---

* जीवा निलिनित वा पाठ।

† समभ्याददानो(?) इति वा।

यतः श्रुतिस्तथाह। तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन* प्रद्योतेनैष आत्मा निष्क्रामति चक्षुष्टो वा मूर्ध्नो वेत्यादि। यद्यप्येतावत् सर्व्वजीवसाधारणं तथापि विद्वांस्तु नेतरवदितरनाड्या निष्क्रामति किन्तु शताधिकया। एकशततम्या नाड्या मूर्द्धन्या निष्क्रामति। शतञ्चैका हृदयस्य नाड्यस्तासां मूर्द्धानमभिनिःसृतैका। तयोर्द्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्तीति यतः श्रुतिराह। अत्र हेतुमाह हार्द्दानुगृहीत इति हेतुगर्भं विशेषणं। गुहां प्रविष्टौ परमे परार्द्ध इति श्रुतेर्हृदयाकाशस्थस्तदीयः परमात्मा तदनुग्रहात् तथैव भवतीत्यर्थः। अनुवदे हेतुर्विद्यासामर्थ्यादिति। तस्याः विद्यायाः शेषभूताङ्गभूता या गतिः अर्च्चिरादिरूपा। तच्छेषभूतैव या भगवत्स्मृतिपरम्परा च ताभ्याञ्च यो भगवदनुग्रहस्तेन तथेत्यर्थः।

रश्म्यनुसारी॥१८॥

अथ या एता हृदयस्य नाड्यस्ताः पिङ्गलस्याणिम्नस्तिष्ठन्ति शुक्लस्य नीलस्य पीतस्य लोहितस्येत्यसौ वा आदित्यः पिङ्गल इत्युपक्रम्याग्रे पठ्यते। तमभित आसीना आहुर्जानासि मां जानासि मामिति। स यावदस्माच्छरीरादनुत्क्रान्तो भवति तावज्जानाति अथ यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्द्ध्वं आक्रमत इति। अत्र तमभित इत्याद्युक्तेः सर्व्वसाधारणमुत्क्रान्तिः प्राप्यते। पूर्व्वमादित्यत्वेनोक्तस्य पिङ्गलस्य रश्मिभिरुद्ध्वाक्रमणञ्च तथा। अत्र संशयः। लोकोऽयञ्ज्वलनादेरितर-

---

* नैष प्रद्योतेनेति क्व पुस्तके नास्ति।

साधारणेऽपि यथा हार्दानुग्रहादिलक्षणा गतिर्विदुष उक्ता तथा रश्म्यनुसारित्वमपीतरसाधारणमुताविद्वत्सत्वेति। तत्रावधारण-माह। रश्म्यनुसारी नियकामत्वयमेवेति।

निशि नेति चेन्न सम्बन्धस्य यावद्देह-भावित्वाद्दर्शयति च ॥ १९ ॥

विदुष उत्क्रमणे हार्दानुग्रहतो यथा* विशेषस्तथा कालवि-शेषतोऽपि विशेषो भविष्यतीत्याशङ्क्य तन्निरासमाह। तथाहि-रात्रतोऽयनतो वा स भवेत् तत्राद्यतो नास्तीत्याह नेति। तत्र हेतुः सम्बन्धस्येत्यादि। अनुग्रहहेतुभूतो यः पूर्वोक्तो गत्यनुस्मृतिसम्बन्धस्तस्य यावद्देहभावित्वात् तत्कार्यस्यानुग्रह-स्यापि तथात्वात् कालस्याप्रयोजकत्वमित्यर्थः। अत्र प्रमाण-माह। दर्शयति यतः श्रुतिः†। तमेव विदित्वा मुनिर्भवत्ये-तमेव प्रव्राजिनो लोकमीप्सन्तः प्रव्रजन्तीति। हार्दानुग्रहस्य मुक्तिहेतोर्विद्यमानत्वादयनविशेषोऽप्यप्रयोजक इत्याह।

अतश्चायनेऽपि दक्षिणे ॥ २० ॥

स्पष्टार्थमिदं। ननु यत्र काले त्वनावृत्तिमिति कालप्राधा-न्येनोपक्रम्य

अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणं।

तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः॥

इति भगवद्वाक्याद्ब्रह्मविदोऽप्युक्तकालापेक्षास्तीत्याशङ्क्य विषय-भेदेन समाधत्ते।

---

* ग्रे रिति दृ नि यं।

† दर्शयति श्रुतिरिति यं।

योगिनः प्रति स्मर्यते स्मार्त्ते चैते ॥ २१ ॥

ज्ञानमार्गाद्योगमार्गो हि भिन्नः। तथाच योगिनमुद्दिश्यैव कालविशेषस्य गतिविशेषहेतुत्वं स्मर्यते न तु ज्ञानमार्गीयस्य श्रौतस्य इतरनिरपेक्षत्वात्। न च योगसांख्ये अपि श्रौते एवेति वाच्यं। यतः स्मार्त्ते एते। चोहेत्वर्थे। एते योगसांख्ये। अग्निर्ज्योतिर्धूमो रात्रिरिति वाक्यद्वयोक्तगती वा। इदन्तु श्रुत्युक्तदेवयानपितृयानातिरिक्तमार्गमभिप्रेत्य समाहितं ते एव चेद्वाच्युच्येते शब्दभेदेन तदा न विरोधः।

इति श्रीवेदव्यासमतवर्त्तिश्रीवल्लभाचार्यविरचिते ब्रह्मसूत्राणुभाष्ये चतुर्थाध्यायस्य द्वितीयः पादः।

---

## तृतीयः पादः ।

### अर्चिरादिना तत्प्रथितेः ॥ १ ॥

ननु ज्ञानमार्गीयस्यैव मर्यादामार्गीयभक्तस्याप्यर्चिरादि-मार्गेणैव गमनमुत सद्योमुक्तिरेव भवति* संशयः । तत्र यथा ज्ञानिनो नियमाभावस्तथाचापीति प्राप्त आह । अर्चिरादि-मार्गेण । तस्य ज्ञानमार्गीयस्यैवोत्कर्षकथनात्† स एव तेन मार्गेण गच्छति न तु भक्तोऽपीत्यर्थः । तथाहि । पञ्चाग्निविद्याप्रकरणे तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिष-मभिसम्भवन्त्यर्चिषोऽहरह्न आपूर्य्यमाणपक्षमित्यत्रोपक्रमे भक्ताति-रिक्तानेवाधिकृत्य तथागतिरुच्यते । स्मृतावप्यग्निर्ज्योतिरहः शुक्ल इत्यत्र ब्रह्मविदोजना इति वचनेन ज्ञानमार्गीयस्यैव स पन्था उच्यते ।

अथेदं चिन्त्यते । सामोपनिषत्सु पठ्यते । अथ या एता हृद-यस्य नाड्यस्ताः पिङ्गलस्याणिम्नस्तिष्ठन्ति । शुक्लस्य नीलस्य पीतस्य लोहितस्येत्यसौ वा आदित्यः पिङ्गल इत्युपक्रम्यादित्यरूपस्य पिङ्ग-लस्य रश्मिरूपत्वं नाडीनामुक्त्वाऽग्रे यद्त्वथ यत्रैतदस्माच्छरी-रादुत्क्रामत्यथैतैरेव रश्मिभिरूर्द्ध्वं आक्रमते‡ इति नाडीरश्मि-

---

* भवतीति संशय इति पा॰ ।

† वीत्कर्षकथनादिति पा॰ ।

‡ अद्गामनोन्नादस्य आक्रमत इत्यत्र अयुगत भाति ।

सम्बन्धिनैका परलोकगतिः श्रूयते। अर्चिरादिका चान्या। तेऽर्चि-
षमभिसम्भवन्त्यर्चिषोऽहरित्यादिश्रुत्युक्ता। स एतं देवयानं
पन्थानमापद्याग्निलोकमागच्छतीति चापरा। स यदा वै पुरुषोऽ-
स्माल्लोकात् प्रैति स वायुमागच्छतीति चेतरा। सूर्यद्वारेण ते
विरजाः प्रयान्तीति चान्या। एवमनेकेषु मार्गेषु सत्स्वर्चिरा-
देरेवोक्तिः कुत इति। तत्र सर्वेषां पारिभाषिकमर्चिरादित्व-
मतएवाथैतयोः पथोर्न कतरेण च नेति मार्गद्वयभ्रष्टानामति-
कष्टं जायस्व म्रियस्वेति तृतीयं स्थानमित्युक्तं। अन्यथा अने-
केषां मार्गाणामुक्तानां श्रूयमाणत्वादस्य तृतीयत्वं नोच्येत। अतः
प्रकरणभेदाद्विद्योपासनभेदत्वात्*मिथोऽनपेक्षाः। भिन्ना एवैते
मार्गा ब्रह्मप्रापका इति मन्तव्यमिति चेत् तत्रोच्यते। न ह्येयं
परिभाषा सर्वेषु श्रुताऽस्ति यतस्तथोच्येत। अतो लाघवादनेक-
पर्वविशिष्ट एकएव मार्ग इति मन्तव्यं। ननु पर्वभेदेन
मार्गभेद इति। गौरवप्रसङ्गात्। न चैवमथैतैरेव रश्मिभिरित्यव-
धारणानुपपत्तिरिति वाच्यं। तस्याः श्रुतेरुत्क्रमणमात्रमार्ग-
निरूपकत्वात्। तथाहि। तत्रोपक्रमे अथ यत्रैतदस्माच्छरीरा-
दुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रमत इत्युच्यते। एतस्मात्
पुरस्ताद्य या एता हृदयस्य नाड्य इत्युपक्रम्य पिङ्गलस्यादित्य-
स्योक्ता तद्यथा महापथ आतत उभौ ग्रामौ गच्छतीमञ्चामुञ्चै-
वमेवैता आदित्यस्य रश्मय उभौ लोकौ गच्छन्तीमञ्चामुञ्चामुष्मादा-
दित्यात् प्रतायन्ते ता आसु नाडीषु सृप्ता आभ्यो नाडीभ्यः
प्रतायन्ते तेऽमुष्मिन्नादित्ये सृप्ता इत्यन्तेन यानि नाडीषु

---

* भिन्नोपासनमपेक्षत्वादिति [illegible]।

लाघवादेक एव स मन्तव्यः। स्वतःप्रमाणभूता हि श्रुतिः। सा येन यदा या श्रुता तदर्थावधारणे द्वितीयस्या अनुपस्थितत्वान्न लाघवगौरवतत्त्वविचारावसरः। कचिदुपस्थितौ चोक्तबाधकैरुपसंहारानवकाशः।

अपरञ्च। ब्रह्मविदः क्रमभुक्तौ गन्तव्यो मार्गोऽयमुपदिश्यते। तत्तल्लोके तदानन्दानुभवस्यावश्यकत्वात्तत्तदुपासनभेदात् फलभेदस्यावश्यकत्वात् मार्गभेदोऽपि तथेति सर्वेष्वेकरूपफलप्रसङ्गात् उपसंहारो न युक्तः। किञ्च। उपासने धर्मेषु चोपसंहारः संमतः। मार्गस्तु नान्यतररूपोऽतो यस्योपासकस्य येन मार्गेण गमनं स मार्ग उपदिश्यत इति नोपसंहारो युक्तः। अविधेयत्वादपि तथा। एतद्यथा तथा पुरस्तान्निरूपितमुपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने चेत्यत्र। एवं सत्यर्चिषमप्येनाचिंरूपलक्षितो मार्ग उच्यते। आदिपदेनान्ये सर्वे मार्गाः संगृह्यन्त इति नानुपपत्तिः काचिदिति चेत्। अत्र वदामः। अर्चिरादिभ्य इत्युक्तं भवेत्तदैतादृशी चेत् अभिमता भवेत्। तस्मान्नैवमित्यवधार्यते*। अर्चिरादिनेत्येकवचनान्यथानुपपत्त्या मार्गस्यैकत्वमवश्यमङ्गीकार्यमेवं सति श्रुतिषु यावन्ति पर्वाण्युक्तानि तानि सर्वाण्येकस्मिन्नेवार्चिरादिमार्गे वर्तमानान्यपि यस्योपासकस्य यावत्पर्वभोगाभावो तं प्रति तावत् पर्वोक्तिरस्य यावतां तेषां स न भावो तं प्रति न तदुक्तिस्तद्भोगाभावादिति नानुपपन्नं किञ्चित्। ननु त्वयाप्युक्तानां

---

* इत्येव धार्यते इति ख।

† तथाप्युक्तानामिति ख।

पर्व्वणां तत्र स्थितिं तदतोपसंहार एवोक्तो भवति मापकत्वेनेति चेत् । स्यादेतदेवं यदि तत्रैव गन्तुर्भोगाय तदपि पर्व्व तत्रोच्येत । न त्वेवं । किन्त्वेकवचनानुरोधान्मार्गैक्ये निश्चिते यं प्रति यत्पर्व्वोच्यते तत् तत्र वक्तोत्क्रमेवेति नोपसंहारापेक्षा । अचेऽन्यत्रोक्तानां पर्व्वणामनुक्तत्वे सविशेषोक्तापि सूत्रकाराभिमत एकएव मार्ग इति ज्ञायते । श्रुतौ सर्व्वत्र पूर्व्वपरामर्शादपि तथा ।

## वायुमब्दादविशेषविशेषाभ्यां ॥ २ ॥

छान्दोग्ये वायुर्न पठ्यते । कौषीतकिश्रुतौ तु स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकमिति वाय्वादयः श्रूयन्ते । तथाग्रिपोऽन्येषामेदाच्च विचारणीयमस्ति । वायुलोकं कस्माल्लोकात् गच्छतीत्याकाङ्क्षायामाह । वायुमब्दादिति । अर्च्चिषोऽहरह्न आपूर्य्यमाणपक्षमापूर्य्यमाणपक्षाद्यान् षड् दङ्ङेति मासांस्तान्मासेभ्यः संवत्सरं संवत्सरादादित्यमित्यत्र संवत्सरात्कालात्* परस्ताद्वायुलोको निवेशयितव्यस्तथाच संवत्सरलोकात् वायुलोकं गच्छतीत्यर्थः । तत्र विनिगमकमाह अविशेषविशेषाभ्यामिति । अत्रेदं ज्ञेयं । अग्निहोत्रादिकर्म्मभिश्चित्तशुद्धावुपासनाभिर्ज्ञानोदये क्रममुक्त्यधिकारी हि तत्तल्लोकं गत्वा भुक्त्वान्ते ब्रह्म प्राप्नोति । कर्म्म त्वग्निसाध्यं भूलोकएव च भवत्यत आदौ तस्याभोगस्ततस्तदुपरितनलोकानां । पृथिवी दीप्ता तयाऽग्निर्दीपया दीपितः । यथा पृथिव्यग्निगर्भेत्यादि

* संवत्सरलोकादिति ख ।

श्रुतिभ्यो भूरग्निप्रधाना भवत्यतोऽर्चिराख्यं अग्निलोकमादौ गच्छति। ततः कर्मोपासनयोरहरादिसंवत्सरान्ते काले विहितत्वात् तत्र तत्र* गत्वा भुंक्ते। तथाच संवत्सरान्तानां भूसम्बन्धित्वेनाविशेषात् तन्मध्ये वायोर्न प्रवेशः। भूलोकादुपर्य्यन्तरिक्षलोकस्तदुपरि द्युलोकस्तथाच वायुरन्तरिक्षस्याधिपतिरितिश्रुतेः सूर्य्यो दिवोऽधिपतिरिति श्रुतेस्तयोः पौर्वापर्य्ये विशेषो हेतुरस्त्यादित्यलोकात् पूर्व्वमुक्तरीत्या भूलोकमध्यपाति संवत्सरस्य परस्माच्च वायुर्निवेशयितव्य इत्यर्थः। ननु तेऽर्चिषमभिसम्भवन्त्यर्चिषोऽहरित्यादिश्रुतिक्रममुक्तमनूद्यानूद्यापादानत्वं वदन्ती पूर्व्वोत्तरयोरव्यवधानं सूचयतीति नोक्रमादरणीयमिति चेत्। सत्यं। यद्योपासकस्य न वायुलोकभोगस्तं प्रति सोक्तिर्यस्य तु तद्भोगस्तस्योक्तरीतिर्मार्गैक्यादिति नानुपपत्तिः काचित्। केचित्तु स एतं‡ देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकमित्यविशेषेण वायुरुपदिश्यते मिथः पौर्व्वापर्य्यप्रापकपदाभावात्। यदा वै पुरुषोऽस्माल्लोकात् प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्द्ध्व आक्रमते स आदित्यमागच्छतीति श्रुत्या आदित्यात् पूर्व्वो वायुर्विशेषेणोपदिश्यत इत्यब्दादित्ययोरन्तराले निवेशयितव्य इत्यर्थं वदन्ति। स चिन्त्यते। यथा तेन स ऊर्द्ध्व आक्रमते स आदित्यमागच्छतीति विशेषोपदेश इत्युच्यते तथा

---

* तत्र लोके गत्वा इति खं।

† वायुर्लोक इति खं।

‡ स एतमिति खं।

स वरुणलोकमित्यत्रापि वक्तुं शक्यं। न च स आदित्यमागच्छतीत्यत्र तच्छब्दस्य पूर्व्वपरामर्शित्वात् वायुलोकगतस्यैव पूर्व्वत्वात् तथेति वाच्यं। अग्निलोकमागच्छति स वायुलोकं स वरुणलोकमित्यत्रापि तुल्यत्वात्। किञ्चैवं अग्निलोकानन्तरं वायुलोक इत्यपि वक्तुं शक्यमतो विद्वद्भिरुपेक्ष्योऽयं। वाजसनेयिनस्तु मासेभ्यो देवलोकं देवलोकादादित्यमिति पठन्ति। तत्राप्यादित्यात् पूर्व्वो देवलोकात्परो वायुर्ज्ञेयः। एकत्रादित्यात् पूर्व्वत्वे सिद्धे मार्गैक्यादन्यत्रापि तथात्वस्य न्याय्यत्वात्। सूत्रकारेण तु छन्दोगश्रुत्यपेक्षयोक्तं वायुमब्दादिति। एवं सति मासेभ्यः परस्तादब्दनिवेशनं कार्यं। न च वायुमब्दादिति सूत्रान्मार्गभेदापत्तिः। देवलोकस्यादित्याधिष्ठेयत्वेनादित्यमध्यपातित्वमभिप्रेत्य छन्दोगश्रुतिस्तथोक्तवती। तदनुसारेण व्यासोऽप्यतो नानुपपत्तिः।

## तडितोऽधि वरुणः सम्बन्धात् ॥ ३ ॥

आदित्याच्चन्द्रमसं चन्द्रमसो विद्युतमित्यत्र पठितविद्युल्लोकात् परतो वरुणलोको निवेशनीयः। तत्र हेतुः सम्बन्धात्। तडितोऽपसम्बन्धित्वाद्वरुणस्य तत्पतित्वात् तथा।

## वरुणाच्चाधीन्द्रप्रजापती ॥ ४ ॥

स्पष्टमिदं। अर्चिरादिपाठे विद्युदनन्तरं तत्पुरुषो मानवः स एतान् ब्रह्म गमयतीति पठ्यते। तत्तु॰ यस्योपासकस्य वरुणादिलोकगमनापेक्षा नास्ति तमपेक्ष्येति ज्ञेयं। मार्गैक्य-

* तथेति सं।

† तमपेक्षेत्य इति सं।

नियममभिप्रेत्य सूत्रकारोऽन्यदीयानामन्येषामपि लोकानां तथैव निवेशनमाह ।

आतिवाहिकास्तल्लिङ्गात् ॥ ५ ॥

विद्युदनन्तरं* तत्पुरुषोऽमानवः स एतान् ब्रह्म गमयतीत्यत्र भवति संशयः । उक्तश्रुतेर्गमयितैव ब्रह्मप्राप्तिरिति निर्णीयते । स च विद्युदनन्तरमेव पठ्यते । एवं सति यस्य वरुणादिलोकगमनं तस्य वचनाभावेन गमयितृप्राप्तेर्ब्रह्मप्राप्तिर्भवति नवेति । तत्र वाचनिकस्य यावद्वचनत्वात् तदभावेन सा न भवतीति प्राप्त आह । आतिवाहिका इति । एतदुक्तं भवति । यस्योपासकस्य यावत् फलभोगानन्तरं ब्रह्मप्राप्तिर्भाविनी तस्य तावत् तद्भोगानन्तरं ब्रह्मप्राप्तिर्भवत्यत एव कौषीतकिश्रुतौ प्रजापतिलोकानन्तरं ब्रह्मलोकः पठ्यते । अन्यथा तत्साधनवैयर्थ्यं तेषां ब्रह्मप्राप्तिसाधनत्वबोधकश्रुतिविरोधश्च स्यात् । तथाच यद्यप्यातिवाहिकश्रुतिर्नास्ति तथाप्यातिवाहिको भगवदीय एव ब्रह्म प्रापयतीति ज्ञेयं । वस्तुतस्तु बहव एव तादृशाः सन्तीति ज्ञापनाय बहुवचनमथोक्तं । तन्मध्ये कश्चनागत्यैक एव नयतीति ज्ञापनाय श्रुतावेकवचनं । तत्र हेतुस्तल्लिङ्गात् । तत्पुरुषोऽमानव इत्यत्र ब्रह्मसम्बन्धित्वं लिङ्गमुच्यते । तेनेदं ज्ञाप्यते यथा विद्याबलात् तत्तल्लोकप्राप्तिस्तथैव ब्रह्मप्राप्तिरपीति न । किन्तु भगवदीयपुरुषानुग्रहेणैवेति । न च पूर्वपूर्वलोकाधिष्ठातृदेवा उत्तरोत्तरलोकं प्रत्यातिवाहिका यथा तथा ब्रह्मप्राप्त्यव्यवहितपूर्वलोकदेवा एव ब्रह्मप्रापका इति तत्पदेन

---

* स तत्पुरुष इति ख° ।

स लोक एवोच्यत इति वाच्य। तदेतरलोकेषु तदकथनं यथा तथाचापि न कथयेत्। लोकाधिष्ठातृदेवानामातिवाहिकत्वो-क्तावर्चिर्लोकप्रापकातिवाहिकस्याभावात् तत्प्राप्तिर्न स्यात्। तथा सति देवयानमार्ग एवोच्छिद्येत। अतो यथा विद्याबले-नैवार्चिरादिः प्राप्तिस्तथैतरेषामपीति बुध्यस्व। कस्यचिदग्निलोक-गत्यनन्तरमेव ब्रह्मप्राप्तिः कस्यचिद्बहुलोकगत्यनन्तरं सोच्यत इति भोगभूमित्वमेव तेषामवगन्तव्यम्। सर्वेषां सर्वत्र गमने देवयानं पन्थानं यदन्त्या* श्रुतेः सामित्वकथनमनुपपन्नं स्यात्। अत उपासनाभेदेन फलभेदं ज्ञापयन्ती तथा वदतीति युक्त-मुत्पश्यामः। ननु तेषामिह न पुनरावृत्तिरस्तीत्यादिश्रुतिभ्यो देवयानं पन्थानं प्राप्तानां पुंसां ब्रह्मवित्त्वमवश्यं वाच्यं। तेन सद्योमुक्तौ सम्भवन्त्यां† सत्यां चयिष्णुत्वेन क्षुद्रानन्दत्वेन च तेषामां परमफलप्राप्तिविलम्बहेतूनामर्चिरादिलोकानां कामना कुतो यतस्तद्धेतुभूतोपासनाः सम्भवन्ति। किञ्च। अर्चिरादिना तत्पथितैरित्यत्र यदुक्तं ज्ञानमार्गीयस्यैवार्चिरादिप्राप्तिर्न भक्ति-मार्गीयस्येति तदप्यनुपपन्नं। यत् कर्मभिर्यत् तपसा ज्ञान-वैराग्यतश्च यदित्युपक्रम्य

सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा।
स्वर्गापवर्गं मद्धाम कथञ्चिद्यदि वाञ्छति॥

इति भगवद्वाक्यादुक्तप्रकारेणतद्वाञ्छायामपि सम्भवतोऽन्यथा प्रभुर्न वदेत्। एवं सति भक्तिसुखं विना अन्यत्र कामनायां हेतुर्वाच्य इत्याकाङ्क्षायामाह।

---

* यदन्त्यामिति ख।

† सम्भवन्त्यामिति ख।

उभयव्यामोहात् तत्सिद्धेः ॥ ६ ॥

अत्रेदं ज्ञेयं। देवयानः पन्था अपि भगवतैव सृष्टोऽस्ति। तथाचोक्तहेतुभिः* तत्र कस्यापि कामाभावे तत्सृष्टिर्व्यर्था स्यादिति भगवानेव कांश्च व्यामोहयति ज्ञानिनः‡ मर्यादामार्गीयभक्तान्§ यातस्तत्कामप्राप्तिहेतुस्तत्फलभोग इति। यत्त्वर्चिरादेर्मार्गगन्तृणां देहवियोगेन संपिण्डितकरणग्रामत्वेनास्वातन्त्र्य व्यामोहः। अर्चिरादीनां चाचेतनत्वेनास्वातन्त्र्यं व्यामोहः कार्य्यकरणासामर्थ्यमिति यावत्। तेनार्चिराद्यधिष्ठातृदेवैरतिवाह्यन्त इति सिद्धमिति व्याख्यानं। तन्न साधीयः। व्यामोहशब्दस्यान्यथाज्ञानवाचकत्वेनासामर्थ्यावाचकत्वात्। तथा सत्यर्चिर्लोकमपि न प्राप्नुयात् प्रापकाभावादित्युक्तं। ननु विद्युतो वरुणादिलोकप्राप्त्यनन्तरं यस्य ब्रह्मप्राप्तिस्तस्य तल्लोकसम्बन्धी ब्रह्मप्रापकः पुरुषोऽस्तीति सः स्वतएव तत्प्राप्नोतीति संशय उत्तरं पठति।

वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ७ ॥

न हि ब्रह्मप्राप्तिर्विद्युल्लोकसम्बन्धिपुरुषसामर्थ्येनोच्यते किन्तु ब्रह्मसम्बन्धितत्सामर्थ्येन। तथाच यतएव लोकात् तत्प्राप्तिस्ततो ब्रह्मसम्बन्धिपुरुषादेव। एवं सति विद्युल्लोकात् तत्प्राप्तौ यो ब्रह्मसम्बन्धी पुरुषः प्रापक उक्तस्तेनैव ततो वरुणादिलोकेभ्योऽपि ब्रह्मप्राप्तिः। तत्र हेतुमाह। तच्छ्रुतेः। तान्वैद्युतात्

---

* तथाचोक्तहेतुभिरिति ख।

† तत्सृष्टिरिति ख।

‡ ज्ञानिना इति खं।

§ अत्र इति ख।

पुरुषो मानस एत्य ब्रह्मलोकान्गमयतीति श्रुतेः । अत्र एत्येति-वचनाद्यतएव लोकाद्ब्रह्मप्राप्तिर्भविष्यति तत्रैवागत्य ब्रह्म प्रापयतीति गम्यते । श्रुतौ वैद्युतं लोकमागत्य तस्माद्ब्रह्मलोकान्गमयतीत्युक्तमिति स पुरुषो वैद्युत इत्युच्यते । न तु तल्लोकवासित्वेन । तथा सत्येत्येति न वदेत्ततएव ब्रह्मप्रापणे । अतएव मानस इत्युक्तः । यदैव* भगवन्मनसि भवत्यथैनं मां प्रापयत्विति तदैव प्रापयतीति तथा । छान्दोग्ये त्वमानव इति पठ्यते । तत्रालौकिकत्वं तत्पुरुषरूपमेवेति न कश्चिद्विशेषः । वाजसनेयके ब्रह्मलोकान्गमयतीति पठ्यते । छान्दोग्ये तु ब्रह्मेति† । तत्रायं भावः । भक्तान्तु वैकुण्ठलोकं नयति ते बहुविधा इति ब्रह्मलोकानित्युक्तं । ज्ञानमार्गीयमक्षरं ब्रह्म प्रापयतीति ब्रह्मेत्युक्तं । अतएवोभयव्यामोह उक्त आचार्येण । अत्र सिद्धान्तदार्ढ्यार्थमुक्तमर्थं छलपिहितमिव कृत्वा बादरिमतं पूर्वपक्षत्वेनाह ।

## कार्यं बादरिरस्य गत्युपपत्तेः ॥ ८ ॥

स एतान् ब्रह्म गमयतीत्यत्र ब्रह्मपदेनाविकृतं‡ परमेव ब्रह्मोच्यत उत कार्यरूपो ब्रह्मलोक इति भवति संशयः । परस्य व्यापकत्वेन देशविशेषगमयित्रोरनपेक्षितयोरुक्तेः । कार्यरूपएव स ब्रह्मपदेनोच्यत इति बादरिराचार्यो मन्यते । कुतः । अस्य गत्युपपत्तेः । तस्य परिच्छिन्नत्वेन तत्प्राप्तिदेशं प्रत्यस्य गन्तुर्गतेरुपपत्तेरित्यर्थः ।

---

* यत्रैवमिति ख ।

† ब्रह्म तु ब्रह्मेति ख ।

‡ अविकृतमिति ख ।

## विशेषितत्वाच्च ॥ ९ ॥

ब्रह्मलोकानामयति ते तेषु ब्रह्मलोकेषु परा. परावतो वसन्तीति श्रुतौ बहुत्वेन वासाधिकरणत्वेन च विशेषिता लोका गन्तारश्च दूरदेशगत्या विशेषिता इति न परं ब्रह्म तत् किन्तु कार्य्यमेवेत्यर्थः। लोकपदं तज्जन्यभोगपरं। तेन तस्यैकत्वेऽपि विविधभोगज्ञापनाय बहुवचनं घटते। तत्र ब्रह्मशब्दप्रयोग*-हेतुमाह।

## सामीप्यात्तु तद्व्यपदेशः ॥ १० ॥

तल्लोकस्थिताना नान्यलोकव्यवधानं परप्राप्तौ किन्तु त एवेति परब्रह्मसामीप्याद्ब्रह्मत्वेन व्यपदेशः कृतः। तु शब्दस्तु वस्तुतो ब्रह्मत्वं व्यवच्छिनत्ति। नन्वाब्रह्मभवनाल्लोका पुनरावर्त्तिनोऽर्जुनेति वाक्यात् तत† पुनरावर्त्तते। अत्र तेषामिह न पुनरावृत्तिरस्तीति पचन इति परमेवात्र ब्रह्मशब्देनोच्यत इति मात्र उत्तरं पठति।

## कार्य्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॥ ११ ॥

कल्पशामसौ कार्य्यस्य ब्रह्मलोकस्य नाशे सति तदध्यक्षेण चतुर्मुखेन ब्रह्मणा सहातो ब्रह्मणः सकाशात् परमीश्वरं प्राप्नोत्यतोऽपुनरावृत्तिश्रुतिर्न विरुध्यते। अत्र प्रमाणमाह। अभिधानादिति। श्रुतौ तथाऽभिधानादित्यर्थः। सा तु

* प्रयोगे हेतुमाहेति ग।

† तत इति ख।

ब्रह्मलोकशब्देन कार्यं स उच्यत इति वक्तुं शक्यं पार्थक्येन प्रजापतिलोकस्योक्तत्वात् ।

अपरञ्च । ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसम्भवन्तीति छान्दोग्यश्रुतिं विषयीकृत्य अर्चिरादिना तत्प्रथितेरित्युपक्रम्य आचार्य्यैः ततोऽन्यत्रार्चिःशब्दस्याभावात् । तत्र चान्ते ब्रह्म गमयतीत्युच्यते । तथाच छान्दोग्येऽनुक्तानामन्यत्रोक्तानां लोकानां मार्गैक्यसिध्यर्थं तत्रैव सन्निवेशो वायुशब्दात् तडितोऽधिवरुणो वरुणाधीन्द्रप्रजापती इत्यन्तेनोक्तः । [एवं सत्यादावर्चिषं ततोऽहस्ततः सितपक्षं तत उदगयनं ततः संवत्सरं ततो वायुं ततो देवलोकं तत आदित्यं ततश्चन्द्रमसं ततो विद्युतं ततो वरुणं तत इन्द्रं ततः प्रजापतिं ततस्ततोऽमानवेन पुरुषेण ब्रह्मप्राप्तिरिति निर्णयः सम्पद्यते ।] एवं सति प्रजापतिलोकादन्यस्य कार्यब्रह्मलोकस्यासम्भवात् तत्पक्षोऽपि भवितुं नार्हतीति यद्यपि तथापि व्यासोक्तमार्गैक्यममन्वानस्तथाऽवददिति ज्ञायते । परन्तु वेदार्थनिर्णयार्थमेव प्रवृत्तत्वाद्भगवदवतारत्वाच्च तदुक्तमेव शास्त्रार्थं इति मन्तव्यं ।

किञ्च । स प्रजापतिलोकं स ब्रह्मलोकमित्यत्र ब्रह्मपदस्य परवाचकत्वं तेनापि वाच्यं चेत्तद्दृष्टान्तेनान्यत्रापि तथैव वाच्यं बाधकाभावात् । ननु परस्य व्यापकत्वान्निर्विशेषत्वाच्च न गन्तव्यतोपपद्यते । जीवस्याविद्योपाध्यवच्छिन्नतादशायां परब्रह्मणि गन्तृत्वासम्भवात् तन्नाशे च वस्तुतोऽभिन्नत्वात् स्वरूपेणावस्थानमेव भवतीति न गन्तृत्वमप्युपपद्यते तस्यैवाभावात् । जीवत्वदशायां उपाध्यवच्छेदात् गन्तृत्वं जीवस्यापरस्य ब्रह्मण-

धाविद्यकरूपनाशकत्वेन गन्तव्यता* चोपपद्यते । उपासना-फलत्वादस्य गमनस्योपास्यस्य च सगुणत्वेन तत्प्राप्तेरेवोचितत्वाच्च । निर्गुणब्रह्मविद्यावतो गन्तृत्वासम्भव इत्युक्तमतो बादरिमतमेव साधीयः । न च ब्रह्मपदस्य मुख्यार्थत्वमुक्तरीत्या यत्र सम्भवत्यतोऽत्रामुख्यार्थत्वमेवानुसर्त्तव्यमिति चेत् । स्यादेतदेवं यद्यौपाधिकमुपास्यरूपं जीवत्वं वा स्यात् । नत्वेवं । प्रकृतैतावत्त्वं हि प्रतिषेधतीत्यादिभिस्तद्गुणसारत्वात्तु तद्व्यपदेश इत्याद्यधिकरणैः श्रुत्यर्थनिर्णयेन ब्रह्मणि विशेषाणामौपाधिकत्वस्य जीवपुरुषोत्तमाभेदस्य च पुरस्तादेव निरस्तत्वात् । न च व्यापकत्वं गन्तव्यत्वे बाधकं । प्रारब्धभोगं विना तत्प्राप्त्यसम्भवात् यदा यत्र तद्भोगसमाप्तिस्तदा तत्र तत्प्राप्तेर्निःप्रत्यूहत्वात् ।

किञ्च । उपास्यरूपाणां सर्व्वेषां निर्गुणत्वमेवोपासकस्य परं सगुणत्वेन तत्तारतम्यात् फलतारतम्यं । यस्तु भगवदनुग्रहेण प्राकृतगुणरहितोऽभूत्स निर्गुणब्रह्मविद्यावानित्युच्यते । तादृशस्यैव मुक्तिप्रकारद्वयमुक्तं सद्योमुक्तिक्रममुक्तिभेदेन । न तस्मात् प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते ब्रह्मैव सन् ब्रह्माप्येतीत्यादि श्रुतिस्तु प्रारब्धरहितविषया । निर्गुणब्रह्मविद्यावतोऽपि प्रारब्धभोगस्तु त्वयापि वाच्यः । अन्यथा प्रवचनासम्भवेन ज्ञानमार्ग एवोच्छिद्येत । ते ब्रह्मलोकेषु परान्तकाले इति श्रुतिरपि परान्तकालएव येषां प्रारब्धभोगसमाप्तिस्तद्विषयिणीति मन्तव्यमन्यथा वेदान्तविज्ञानेत्याद्युक्तधर्म्मविशिष्टानां मुक्तौ विलम्बोनोपपद्यते इति दिक् ।

---

* गन्तव्यतामिति ख ।

† नोपपद्यतेति दिक् इति वा पाठ ।

न च कार्य्ये प्रतिपत्त्यभिसन्धिः ॥ १५ ॥

अपि च। ब्रह्मविदाप्नोति परमिति संक्षेपेणोक्त्वा तदेवाभ्युक्तेति तद्विवरिकामृच प्रस्तुत्य सोक्ता।

सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायां परमे व्योमन्।

सोऽश्नुते सर्व्वान् कामान् सह ब्रह्मणा विपश्चिता। इति सर्वोपक्रमानुरोधेन परेणैव ब्रह्मणा सह सर्व्वकामभोगलक्षणा प्रतिपत्तिरुच्यत इति कार्य्यरूपे वस्तुमात्रे प्रतिपत्तिर्न क्वापि श्रुतेरभिप्रेताऽतोऽत्रापि परमेव ब्रह्मपदेनोच्यते। अय-र्थस्त्वानन्दमयाधिकरणे प्रपञ्चित इति नात्रोक्तः।

अप्रतीकालम्बनान्नयतीति बादरायण उभयथाऽदोषात् तत्क्रतुश्च ॥ १६ ॥

क्रममुक्त्यधिकारिण प्रारब्धं भुंक्त्वा अमानवेन पुरुषेण प्रापिता परमेव ब्रह्म प्राप्नुवन्तीति सिद्धं। तत्रेदं सन्दिह्यते। अर्चिरादिलोकप्राप्तिर्हि उपासनाविशेषफलं। एवं सत्यमानवः पुरुषस्तान् सर्व्वान् ब्रह्म प्रापयत्युत कांश्चिदेवेति। किमत्र युक्तं सर्व्वानेवेति। यतोऽर्चिरादिमार्गगतानामन्ते ब्रह्मप्रापणार्थमेव स नियुक्तस्ततोऽन्यथाकरणे हेत्वभावात्। तथैव स करोतीति प्राप्त उच्यते। श्रुतौ ब्रह्मत्वेनैव सर्व्वोपासनाया उक्तत्वादुपास्येषु भगवद्विभूतिरूपत्वेन शुद्धब्रह्मरूपेष्वप्यतथात्वं ज्ञात्वा श्रुतिर्ब्रह्मत्वेनोपासनाया. फलसाधनत्वं वदति नतूपास्ये ब्रह्मतामपीति मन्वानाय उपासते ते प्रतीकालम्बना इत्युच्यन्ते। तथाच सत्यपि वेदविहितत्वेनोपासनाया।कृतत्वेन सफलत्वात् तत् फलत्वेनो-

पासकानामर्चिरादिलोकप्राप्तावपि तानमानवः पुरुषो ब्रह्म न प्रापयति किन्तु शुद्धब्रह्मत्वं ज्ञात्वा य उपासते तानेव ब्रह्म प्रापयतीति बादरायण आचार्यो मन्यते। तत्र हेतुमाह। उभयथा दोषादिति। वस्तुतो यद्ब्रह्मरूपं तत्राब्रह्मत्वनिश्चय उपासनार्थञ्च ब्रह्मत्वेन भावनं एवमुभयथाकरणे दोषः सम्पद्यत इति तस्य न ब्रह्मप्राप्तावधिकारोऽस्तीति युक्तं तदनयनमित्यर्थः। तथा च श्रुतिः। असन्नेव स भवति असद्ब्रह्मेति वेद चेदिति।

योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते।
किन्तेन न कृतं पापं चौरेणात्मापहारिणा॥ इति

एवं ज्ञानमार्गीयव्यवस्थामुक्त्वा भक्तिमार्गीयस्यापि तामाह तत्क्रतुश्चेति। सर्वं भक्तियोगेनेति वाक्यात् तस्योपासनापेक्षेति न प्रतीकादिसम्भावना तत्र। कथञ्चिद्यदि वाञ्छतीति वाक्यादिच्छामात्रेण तद्भोगकरणानन्तरं प्राचीनभगवद्भजनसम्पन्नस्तु नीयत इत्यर्थः। वस्तुतस्तु भक्तस्यामानवपुरुषापेक्षाभावात् स्वयमेव ब्रह्मलोकान् प्राप्नोतीति ज्ञापनाय प्रथमान्त उक्तः। ननु ब्रह्मणोऽधिकं न किञ्चिदस्ति। न तत्समश्चाभ्यधिकश्च दृश्यत इति श्रुतेः। एवं सति छान्दोग्ये सनत्कुमारनारदसंवादे स यो नाम ब्रह्मेत्युपास्त इत्यादिना नामवाङ्मनःसंकल्पचित्तध्यानविज्ञानादीनां ब्रह्मत्वेनोपासनमुत्तरोत्तरं पूर्व्वस्मात् पूर्व्वस्माद्भूयस्त्वं चोच्यतेऽतो न ब्रह्मत्वं सर्व्वेषामुपास्यानां वक्तुं शक्यमिति चेत्। नैवं। विभूतिरूपाणां नियतफलदातृत्वात् येन रूपेणाल्पफलदानं तत्राधिकगुणप्राकट्ये प्रयोजनाभावात् तावन्मात्रगुणप्रकटनं। येन रूपेण ततोऽधिकफलदानं तत्र ततोऽधिकगुणप्रकटनमिति पूर्व्वस्मादाधिक्यमुच्यते।

एवमेव सर्वत्र। नियतफलदानन्तु स्वतन्त्रेच्छत्वाधीनरूपमिति नानुपपन्नं किञ्चित्। प्रतिमादिष्वावाहनेन सन्निहिते विभूतिरूपे तद्भावनं पूजामार्गे। भक्तिमार्गे तु भक्त्या तत्र प्रकटे तथा गुरौ तु भाष्ये परे च निरूपितं ब्रह्मणीति विशेषणवत्त्वेन 'भगवदावेशात् तत्र तद्भावनमिति सर्वमवदातं।

अपि च। बादरिजैमिनिमतोक्त्यनन्तरं स्वमतोक्त्या तत्समानविषयत्वमत्रापीत्यवगम्यते। तत्र च कार्यब्रह्मलोकप्राप्तिपरब्रह्मप्राप्तिविषयत्वमुक्तं पूर्वोत्तरपक्षभेदेन। बादरिमते अविशेषस्यैवोपास्यत्वाद्विशेषाणामविवक्षितत्वादुपासनानां सर्वासां प्रतीकतद्रूपत्वमेव सिध्यति। एवं सत्यप्रतीकालम्बनान्नयतीति वदता व्यासेन बादरिमतानुसारिण उपासकस्य न कस्यापि ब्रह्मप्राप्तिरिति ज्ञाप्यते। वस्तुतस्तूपासनायामुपास्यस्वरूपज्ञानस्यावश्यकत्वात् तत्प्रतीकानामुक्तरीत्या तदभावेन निरहत्वादर्चिरादिप्राप्तिरपि न सम्भवति किं पुनर्ब्रह्मण इति निगूढाशयो व्यासस्य। एवं सति परप्राप्तावेवोपोद्बलकमुक्तं भवतीति सैव व्यासाभिमतेति सिद्धं। ये तु प्रतीकेष्वब्रह्मक्रतुत्वं वदन्तः पञ्चाग्निविद्यायास्तथात्वेऽपि वचनबलात् तद्वतो ब्रह्मप्राप्तिरिति वदन्ति तत्रेदमुच्यते। वचनन्तु वस्तुतः सतः पदार्थस्य बोधकं न तु कारकमतस्तद्बोधयति तदाऽप्रतीकालम्बनान्नयतीति व्यासोक्त्यविरोधाय तत्राप्यप्रतीकत्वमूरीकार्यमन्यथा पञ्चाग्निविद्यानिरूपिकां श्रुतिं पश्यन्नेव स न वदेत्। न चौत्सर्गिकं पक्षमाश्रित्य तथोक्तमिति वाच्यं। तस्य बाधकापनोद्यत्वाद्वचनस्य चोक्तन्यायेनाबाधकत्वात्। यत्र वचनस्य बाधकत्वमुच्यते तत्र बाधबोधकत्वमेव न तु तथात्वमित्युपे-

वपोपास्ते । ननु मनःप्रभृतीनां शुद्धब्रह्मत्वे मनो ब्रह्मोपास्व इति वदेन्न तु प्रकारवाचीति ग्रन्थिरस्तं ब्रह्मपदमत उपासनाप्रकारावच्छेदकत्वमेव ब्रह्मपदस्य न तु स्वरूपनिरूपकत्वमिति चेत् इत्थेदं शब्दार्थानवगमविजृम्भितमेव यतो मन उपास्वेत्युक्त्वा तदुपासनाफलं यावन्मनोगतं तत्रास्य कामचारो भवतीति वदिष्यंस्तदुपासनाया एतत्फलसाधकत्वे प्रयोजकरूपाकाङ्क्षायामाह मनो ब्रह्मेति। इति शब्दोऽत्र हेतुत्ववाची। तथाच यतो मनो ब्रह्म अतो हेतोस्तदुपासनं तादृक् फलसाधकमित्यर्थः। अतएव मनो हि ब्रह्म मन उपास्वेति पूर्व्वमुक्तं। सर्व्वत्रैवमेव ज्ञेयं।

## विशेषञ्च दर्शयति ॥ १७ ॥

सर्व्वाण्युपाख्यानि रूपाणि ब्रह्मरूपाण्येवेति तदुपासकानां परप्राप्तिरेवेति सिद्धं। तत्रेदं चिन्त्यते। ज्ञानमार्गीयाणां भक्तिमार्गीयाणाञ्चाविशेषेणैव परप्राप्तिरुत कश्चिद्विशेषोऽस्तीति। तत्रोभयोरपि ब्रह्मोपासकत्वेनाविशेषेणैव फलं भवतीति प्राप्ते प्रत्याह विशेषं च श्रुतिर्दर्शयति। तैत्तिरीयके पठ्यते। ब्रह्मविदाप्नोति परमिति गूढ़ाभिसन्धिना सामान्यत एतावदुक्त्वा गूढ़तमुद्घाटयत्यतिगोप्यत्वमभिप्रायेऽनुभवैकवेद्यत्वञ्च ज्ञापयन्नाह तदेषाभ्युक्ता। सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायां परमे व्योमन्। सोऽश्नुते सर्व्वान् कामान् सह ब्रह्मणा विपश्चितेति। तत् पूर्व्वोक्तं प्रतिपाद्यत्वेनाभिमुखोकृत्यैषर्गुक्ता तदनुभवकर्तृभिरिति शेषः। ब्रह्मविदप्नरब्रह्मविदाप्नोति सान्निध्यादपरमेवाप्नोति। एतावानर्थो यो वेदेत्यनयोक्तः। अथ पर-

माप्नोतीत्यस्यार्थ उच्यते निहितमित्यादिना। अतएव मध्ये क्रियापदमुभयसम्बन्धित्वज्ञापकवमुक्तम्। तत्राप्तिश्च मर्य्यादा-पुष्टिभेदेन द्वेधा। तत्रादौ मर्य्यादायामुच्यते। इहायमाशयो ज्ञेयः। नायमात्मा प्रवचनेनेति श्रुत्या भगवद्वरणातिरिक्त-साधननिरासः क्रियते पुरुषोत्तमप्राप्तौ। एवं सत्यक्षरब्रह्म-ज्ञानस्य तत्साधनत्व उच्यमाने तद्विरोधः स्यात् तेनैवमेतदर्थो निरूप्यते। ज्ञानमार्गीयाणामक्षरज्ञानेनाक्षरप्राप्तिस्तेषां तदेक-पर्य्यवसायित्वात्। भक्तानामेव पुरुषोत्तमपर्य्यवसायित्वात्। तदुक्तं भगवद्गीतासु। एवं सततयुक्ता ये इति मन्त्रे मय्यावेश्य मनो ये मां ये त्वक्षरमनिर्देश्यं। श्रीभागवते च। भक्त्याह-मेकया ग्राह्यः तस्मान् मद्भक्तियुक्तस्य मद्युपकस्य न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिहेत्यादिना। तथाच यश्चविद्द्वेद्भग-वान् वृणुते तदा भक्तिरुदेति। तत्पुरभावे सति स्वयं तद्धृदि प्रकटीभविष्णुः स्वस्थानभूतं व्यापि वैकुण्ठं तद्गुहायां हृदया-काशे प्रकटीकरोति तत्परमव्योमशब्देनोच्यते। अलौकिकप्रयोगेण तत्रालौकिकत्वं ज्ञाप्यते। यथा स्वस्थापितं वस्त्वशक्यं स्वद-र्शनयोग्यं भवति तथात्र भगवानपीति ज्ञापनाय निहित-मित्युक्तं। तथाच परमाप्नोतीति विवृतिरूपत्वादस्य गुहायां परमव्योम्नि निहितं यो वेद स नास्य प्राणा उत्क्रामन्तीहैव समवलीयन्ते ब्रह्मैव सन् ब्रह्माप्येतीति श्रुत्युक्तरीत्या परमाप्नो-तीत्यर्थः सम्पद्यते। अथ शुद्धपुष्टिमार्गेऽङ्गीकृतस्य व्यवस्थामाह सोऽश्नुत इत्यादिना। अत्रायमभिसन्धिः। यथा स्वयं प्रकटी-भूय लोके लीलां करोति तथात्मनुग्रहवशात् स्वान्तःस्थितमपि भक्तं प्रकटीकृत्य तत्स्नेहातिशयेन तद्वशः सन् स्वलीलारसानु-

भवं कारयतीति स भक्तो ब्रह्मणा परब्रह्मणा पुरुषोत्तमेन सह सर्व्वान् कामानश्नुत इति । चकारादुक्ता श्रुतिः स्मृतयश्च संगृह्यन्ते । एवं सति ज्ञानमार्गीयाणामक्षरप्राप्तिरेव भक्तानामेव पुरुषोत्तमप्राप्तिरिति सिद्धं ।

इति श्रीवेदव्यासमतवर्त्तिश्रीवल्लभाचार्य्यविरचिते ब्रह्मसूत्राणु-भाष्ये चतुर्थस्याध्यायस्य तृतीयः पादः समाप्तः ।

---

## चतुर्थः पादः ।

### संपद्याविर्भावः स्वेन शब्दात् ॥ १ ॥

ब्रह्मविदाप्नोति परमित्युपक्रम्य सोऽश्नुते सर्व्वान् कामान् सह ब्रह्मणा विपश्चितेति तैत्तीरीयके पठ्यते । तत्रेदं संदिह्यते । किमतः स्थितएवाश्नुत उत पुनर्जन्म प्राप्नोति । तत्राद्यस्त्वनुपपन्नः न स पुनरावर्त्तते । तेषामिह न पुनरावृत्तिरस्तीत्यादि-श्रुतिविरोधात् कर्म्माभावाच्चेति प्राप्ते प्रतिवदति । सम्पद्य ब्रह्म सम्पद्यापि स्थितस्य जीवस्य प्रभोरत्यनुग्रहवशात् स्वरूपात्मक-भजनानन्दलिप्सायां तज्जन आविर्भावो भवत्येव । आविर्भावस्य भगवदधीनत्वज्ञापनायास्य तत्र कर्तृत्वमोक्तं । ननूक्तं न स पुनरावर्त्तत इत्यादि श्रुतिविरोधः कर्म्माभावश्च बाधक इत्यत आह स्वेनेति । स्वशब्दोऽत्र भगवद्वाची । तथाच भगवत्स्वरूपबलेनैवाविर्भाव इत्यर्थः । एवं सत्युक्तश्रुतिर्मर्य्यादामार्गविषयिणीति न विरोध इति भावः । तेषामिह प्रपञ्चे न पुनरावृत्तिरस्तीति हि श्रुतिराह । लीलायाः प्रपञ्चातीतत्वात् तत्राविर्भावस्य निषेधाविषयत्वादपि न विरोधः । अत्र प्रमाणाकाङ्क्षायामाह शब्दादिति । सोऽश्नुते सर्व्वान् कामान् सह ब्रह्मणा विपश्चितेति श्रुतिः पुरुषोत्तमेन सह सर्व्वकामभोगं वदति । स च न विग्रहं विना सम्भवतीति श्रुतिबलादेव तथा मन्तव्यमित्यर्थः । हेत्वन्तरमाह ।

## मुक्तःप्रतिज्ञानात् ॥ २ ॥

सर्वोपक्रमे ब्रह्मविदाप्नोति परमिति वाक्येन परप्राप्ति-लक्षणां मुक्तिं प्रतिज्ञाय हि तद्विवृतिरेव सोऽश्नुत इत्यादिना क्रियते। तेन पुष्टिमार्गीयमुक्तिरूपत्वमेव तस्यानन्दस्य सिद्धत्वं तोऽपि हेतोरसदाविर्भावस्य न लौकिकत्वं न चाहन्तिरूपत्व-मित्यर्थः।

## आत्मा प्रकरणात् ॥ ३ ॥

ननु परस्य ब्रह्मणो निर्गुणत्वात् कामभोगस्य गुणसाध्यत्वात् सह ब्रह्मणेत्यत्र ब्रह्मपदं सगुणपरं। अतो न तस्य मुक्तिरूपत्व-मित्यत आह। अत्र ब्रह्मपदेनात्मा व्यापको मायातद्गुण-सम्बन्धरहितो यः स एवोच्यते। कुतः प्रकरणात्। ब्रह्मविदा-प्नोति परमित्युपक्रम्य सत्पाठाद्गुणातीतस्यैवैतत्प्रकरणमिति तदेवात्र ब्रह्मशब्देनोच्यत इत्यर्थः।

## अविभागेन दृष्टत्वात् ॥ ४ ॥

ननु ब्रह्मविदाप्नोति परमिति भिन्नं वाक्यमृग् भिन्नाऽतो-नैकं प्रकरणमिति सगुणमेव तत्र ब्रह्मपदेनोच्यत इत्याशङ्का प्रतिवदति। पूर्ववाक्येन समविभागेनैवेयमृक् पठिता न तु विभागेन। कुतः दृष्टत्वात्। ब्रह्मविदिति वाक्यानन्तरं तत् पूर्वोक्तमर्थं प्रतिपाद्यत्वेनाभिमुखीकृत्यैषर्गुक्तेति श्रुतिदृष्टमते तदेवाभ्युक्तेति। तेन पूर्वापरैकार्थमधिकृत्यैव ऋग् उच्यते इति गुणातीतमेव तदत्र वाच्यमित्यर्थः।

## ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ५ ॥

पूर्वं च मुक्तो जीवो भगवद्गुणगानेच्छातो बहिराविः

र्भूतो गुणातीतेन पुरुषोत्तमेनैव सह सर्व्वान् कामान् अश्नुते इति सिद्धं। अथ तत्रैवेदं विचार्य्यते। आविर्भूतो जीवः प्राकृतेन शरीरेण भुङ्क्ते उताप्राकृतेनेति। तत्र भोगस्य लौकिकत्वे तदायतनस्यापि तादृशेनैव भवितव्यमिति मन्वानं प्रत्याह। ब्राह्मेण ब्रह्मसम्बन्धिना। ब्रह्मणा भगवतैव स्वभोगानुरूपतया सम्पादितेन सत्यज्ञानानन्दात्मकेन शरीरेण पूर्व्वोक्तानश्नुत इति जैमिनिराचार्य्यो मनुते। तत्र हेतुरुपन्यासादिभ्य इति। ब्रह्मविदाप्नोति परमिति ब्रह्मविदः परप्राप्तिं प्रतिज्ञाय तदर्थ-स्यैवोपन्यासोऽभिमयर्चा क्रियते सोऽश्नुत इत्यादिना। तथाच परप्राप्तेर्मुक्तिरूपत्वात् पुष्टिमार्गीयायास्तस्या एवंरूपत्वाद्दहर-ब्रह्मणः पुरुषोत्तमायतनरूपत्वात् तदात्मकमेव शरीरं तस्य वक्तु-मुचितं न तु प्राकृतं। एतद्बोधनायैवान्योऽन्नमयादीनि विभूति-रूपाण्युक्तानि। अन्नशरीरे प्रतीयमानानामर्थानां विभूति-रूपत्वेन ब्रह्मात्मकत्वं तेन साधितं भवति। इदमेवादिपदेन बहुवचनेन च ज्ञाप्यते। एतदानन्दमयाधिकरणे प्रपञ्चितमतो नात्र पुनरुच्यते। यत्र कर्म्मवादी जैमिनिरेवं मनुते तत्रा-न्योपासकस्वीकारे किमाश्चर्य्यमिति ज्ञापनाय तन्मतोपन्यासः कृतः।

चिति तन्मात्रेण तदात्मकत्वादित्यौडुलोमिः॥ ६॥

स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवं वा अरे अयमात्मानन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन इति श्रुतौ घन-पदेन भोगात्मकविग्रहात्मत्वं ब्रह्मणो बोध्यतेऽन्यथा न वदेत् प्रयोजनाभावात्। तथाच तादृशेन सह भोगकर्त्ता तादृशेनैव

भाव्यमिति चिति चिद्रूपे ब्रह्मणि। तन्मात्रेण चिन्मात्रेण रूपेण कामान् भुङ्क्ते न तु विग्रहेण। श्रुतौ जीवस्य तथात्वस्यानुक्तेः। पूर्णानन्दत्वाद्भगवतस्तत्सम्बन्धेन तदानन्दाननुभवतीत्यर्थः सम्पद्यते। चिदात्मत्वं जीवस्य धर्मो नैसर्गिकमित्यौडुलोमिराचार्य्यो मनुते। अपरोरं वावेति श्रुतिरेतादृशान्यविषयिणीति ध्येयं। मुक्तिदशायां तदनुभवस्य भगवदिच्छाविषयत्वाभावाच्च तथा। तथाचैतदेतज्जातीयकानन्दानुभवोऽस्य भवत्विति भगवदिच्छैव श्रुतौ कामशब्देनोच्यते।

## एवमप्युपन्यासात् पूर्व्वभावादविरोधं बादरायणः ॥ ७ ॥

परमाचार्य्यो बादरायणस्तु नैवं मनुते। ब्रह्मविदाप्नोति परमित्यस्योपन्यास एवमपि। विग्रहवत्त्वेनापि कृतो यतः। तथाहि। यो वेद निहितं गुहायामित्यत्र गुहाया उक्तत्वात् तस्या विग्रह एव सम्भवात्। किञ्च। प्रथमान्तोपस्थितत्वेन प्राप्नोतीत्युक्त्या च ब्रह्मविदः परप्राप्तौ स्वातन्त्र्यं ख्याप्यते। तदेव ब्रह्मणा सहेति पदेनोपन्यस्तं। तेन ब्रह्मणोऽपि तत्समानक्रियावत्त्वं ख्याप्यते परत्वप्राधान्येन। तथाच भक्तस्येव कामा वस्तुभूतास्ते च न विग्रहं विना सम्भवन्ति। किञ्च। विपश्चितेति विशेषणेन विविधं पश्यच्चिद्रूपत्वमुच्यते। कामभोगोक्तिप्रस्ताव एव एतदुक्त्या तदुपयोग्येव सर्व्वं वाच्यं। एवं सति भक्त विविधभावान् पश्यति स्वयं भोगपरायणेत्युक्तं भवति। एतेनापि भक्तविग्रहः सिद्ध्यति। ननु विग्रहस्यागन्तुकत्वेन लौकिकत्वादलौकिकेन ब्रह्मणा

भोगोविरुद्ध इत्यत आह । पूर्व्वभावादिति । भक्तप्राप्तेः पूर्व्वमेव भगवदिच्छितभोगानुरूपविग्रहाणां सत्त्वान्न विरोधः । किञ्च । उक्तश्रुतिसूत्रैः पुरुषोत्तमेन सह भक्तस्य कामभोगोनिरूपितः । स यावतार्थेन विना नोपपद्यते तावान् स श्रुत्यभिमतं इति मन्तव्यं । तथाच ब्रह्मसम्बन्धयोग्यानि शरीराणि नित्यानि सन्त्येव । यथानुग्रहो यस्मिन् जीवे स तादृशं तदाविश्य भगवदानन्दमनुत इति सर्व्वमवदातं ।

## सङ्कल्पादेव च तच्छ्रुतेः ॥ ८ ॥

एवं परप्राप्तिः केषाचिदेव भवति तत्र हेत्वपेक्षायामाह । भजनानन्दं दातुं यमेव संकल्पविषयं करोति स एवैवं प्राप्नोतीति भगवत्संकल्पएव तत्र हेतुः । तत्र प्रमाणमाह । तच्छ्रुतेः । नायमात्मेत्युपक्रम्य यमेवैष वृणुते तेन लभ्य इति श्रुतिः श्रूयते । अतः सएवात्र हेतुः । श्रुतौ प्रवचनादिनिषेधः कृतः इत्यत्रापेवकार उक्तः । चकारात् तत्सङ्कल्पितैवैतद्गुरूपा परमाप्तिः संगृह्यते ।

## अतएव चानन्याधिपतिः ॥ ९ ॥

यतो हेतोः साधनं फलं चोक्तरीत्या स्वयमेव नान्योऽतो हेतोस्तेषां हृदि साधनत्वेन फलत्वेन प्रभुरेव स्फुरति नान्यस्तेनानन्यास्ते । तेषामेवाधिपतिः पुरुषोत्तमः । अन्यत्राधिपत्यं विभूतिरूपैः करोत्यतः सर्व्वस्याधिपतिरितिश्रुतिरपि तदभिप्रायैवेति भावः । चकारात् मदन्यत्ते न जानन्ति नाहन्तेभ्यो मनागपीति भगवद्वाक्यं संगृह्यते । अन्यथा सर्व्वस्याकुण्ठित-

ज्ञानभक्तेरेवं कथनमयुक्तं स्यादतः पुष्टिमार्गोऽनुग्रहैकसाध्यः प्रमाणमार्गाद्विलक्षणस्तत्र विश्वासश्च तथेति सिद्धं ।

## अभावं बादरिराह ह्येवं ॥ १० ॥

मुक्तोऽपि जीवः पुष्टिमार्गेऽङ्गीकृतो भगवद्दत्तं विग्रहं प्राप्य भजनानन्दं प्राप्नोतीति सिद्धं । अत्र प्रत्यवतिष्ठते* । बादरिराचार्यो मुक्तस्य देहाद्यभावं मनुते । तत्र हेतुराह ह्येवमिति । ब्रह्मविदो हि श्रुतिरुच्यते । यत्र हि द्वैतमिव भवति तदितर इतरं पश्यतीत्याद्युक्त्वा यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कम्पश्येदित्यादिना द्वितीयज्ञाननिषेधमाह ब्रह्मविदः श्रुतिः । तथाच तस्य कामभोगवार्त्ता दूरतरेति । मदाद्यैवदेहोऽपि तथा ।

## भावं जैमिनिर्विकल्पामननात् ॥ ११ ॥

जैमिनिराचार्यस्तु मुक्तस्य पुंसो देहादेर्भावं सत्तां मन्यते । तत्र हेतुर्विकल्पेत्यादि । ब्रह्मविदाप्नोति परमिति श्रुत्या ब्रह्मज्ञानस्य तत्प्राप्तिसाधनत्वमुच्यते । नायमात्मेति श्रुत्या तु वरणमात्रप्राप्यत्वं । सोऽश्नुत इत्यादिना च परमाप्त्युपन्यासः क्रियते । इहैव समवनीयन्ते ब्रह्मैव सन् ब्रह्माप्येतीति च पठ्यते । एवं सति मिथोविरोधे तद्भावाभावोभयव्याख्यानरीत्या ज्ञानमार्गीयस्य ब्रह्मज्ञानेनाक्षरब्रह्मप्राप्तिः । पुष्टिमार्गीयभक्तस्य तु सोऽश्नुत इत्यनेनोक्ता परमाप्तिरिति व्यवस्थितविकल्प एव सूत्राभिमत इति भायते । तेन नायमात्मेति श्रुतिः† परमाप्तिविषयिणी ।

---

* प्रत्यवतिष्ठतीति ख ।

† श्रुतेरिति ख ।

इत्येवेत्यादिश्रुतिस्तु मर्य्यादामार्गीयविषयिणीति मन्तव्यं। एवं सति पुष्टिमार्गीयस्य भोगसाधनात्मकविग्रहवत्त्वं निःप्रत्यूहं सिद्धति। तत् केन कं पश्येदित्यादिना तु ब्रह्मज्ञानसामयिकीं व्यवस्थामाह न तु तदुत्तरकालीनपरप्राप्तिसामयिकीमिति किमनुपपन्नं।

द्वादशाहवदुभयविधं बादराय-
णोऽतः॥ १२॥

ब्रह्मणा सह सर्व्वकामाशनप्रयोजकं शरीरं शरीरत्वस्य सर्व्व-भूतजन्यत्वव्याप्यत्वात् तदभावेनाशरीररूप। तद्भोगायतनत्वेन शरीररूपमपीति बादरायण आचार्य्यो मन्यते। अत्र हेतुरत इति। तथाविधश्रुतेरित्यर्थः। तथाहि। भूमैव विजिज्ञासितव्यमित्युक्त्वा तत्स्वरूपमाह यो वै भूमा तत् सुखमित्युपक्रम्य यत्र उच्यते यत्र नान्यत्पश्यति नान्यत् शृणोति नान्यद्विजानाति स भूमेत्यनेन केवलभावविषयत्वं पुरुषोत्तमलक्षणमुक्त्वा केवलभाववतो भक्तस्य विप्रयोगसामयिकीं व्यवस्थामाह स एवाधस्तात् स उपरिष्टात् स पश्चात् स पुरस्तादित्यादिना। ततः स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्निति पूर्व्वावस्थामनूद्य संयोगावस्थामाह आत्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्द इति वाक्येन सोऽश्नुत इति श्रुतिसंवादिनमर्थमुक्त्वा भक्तस्वरूपमाह तस्य ह वा एतस्यैवं पश्यत एवं मन्वानस्यैवं विजानत आत्मतः प्राण इत्युपक्रम्यात्मत एवेदं[illegible] तेनाशरी[illegible] सिद्धति। अध्ययप्रयोगेणाविकृतार[illegible]

विभाव उच्यते। अत्र ल्यब्लोपे पञ्चमी। पूर्व्वं विरहदशायां* प्राणादयो भगवत्येव लीना आसन्। ततस्तत्प्राकट्ये तत एव प्राणादयोऽपि सम्पन्नाः इति तत्प्राप्तिनिमित्तत्वं यतः विभूतिरूपाणामपि पुरुषोत्तमे लयो नानुपपन्नः। आत्मरतिरित्यादिना सोऽश्नुत इत्यनेन च शरीरत्वं। जैमिनिरप्यत एव भावमेवेति मनुते। एकस्य विरुद्धोभयधर्म्मवत्त्वसमर्थनं प्रति वैदिकं दृष्टान्तमाह द्वादशाहवदिति। यः कामयेत प्रजायेयेति स द्वादशरात्रेण यजेतेति चोदनया द्विरात्रेण यजेतेत्यादिवन्नियत-कर्तृकत्वेनाहीनत्वं† गम्यते द्वादशाहस्य‡। द्वादशाहमृद्धि-कामा उपेयुः य एवं विद्वांसः सत्रमुपयन्तीति श्रुत्या च सत्रत्वं बहुकर्तृकत्वं गम्यते। एवमेव द्वादशाहवच्छरीरेन्द्रियप्राणान्तःकर-णाद्यभिरस्तु इति समस्तुल्यत्वं। वस्तुतो भगवद्विभूतिरूपत्वेन ब्रह्मात्मत्वेनैकरूपत्वमतो द्वादशाहवदुभयविधं सत्रे प्रत्येकं चेत-नानां यजमानानां फलभागित्ववद्यथापि तादृक्भक्तदेहादीना-मपि ब्रह्मात्मकत्वाच्चेतनत्वमेवेत्यप्यनेन दृष्टान्तेन ज्ञाप्यते। अत-एव श्रीभागवते देहेन्द्रियासुहीनानां वैकुण्ठपुरवासिनामिति गीयते।

तन्वभावे सन्ध्यवदुपपत्तेः ॥ १३ ॥

अथेदं चिन्त्यते। भगवत्स्वरूपे प्राकृतशरीर इयावस्था दृश्यन्ते

---

* पूर्व्वं विरहदशायामिति पा०।
† सर्वमेव होमत्वमिति पा०।
‡ पुस्तकान्तरे द्वादशाहस्येति नास्ति।

तत्कालीने पुंभिरिति कथमप्राकृतत्वमुपपद्यत इति तत्रोप-
पत्तिमाह। तद्दर्शनस्य वास्तववस्तुविषयकत्वव्यवच्छेदेन पुरु-
षव्युदासाय तु शब्दः। तत् प्राकृततुल्यतादर्शनमभावे तथा-
त्वस्याभाव एव भवति न तु तत्र प्राकृता धर्माः सन्ति। ननु
अविद्यमानानामर्थानां* कथं दर्शनमुपपद्यत इत्यत आह। सन्ध्य-
वदिति। स्वप्ने यथा वासनावशादविद्यमानानामप्यर्थानां दर्शनं
भवति तथा भगवदिच्छावशात् तत्रापि प्राकृततुल्यत्वदर्शन-
स्योपपत्तेर्न प्राकृतत्वं तत्र शेयमित्यर्थः। तथाच श्रुतिः। सन्ध्यं
तृतीयं स्वप्नस्थानं। तस्मिन् सन्ध्ये स्थाने तिष्ठन्नुभे स्थाने पश्य-
तीदं च परलोकस्थानञ्च। अथ यथाक्रमोयं परलोकस्थाने
भवति तमाक्रममाक्रम्योभयान् पाप्मन आनन्दांश्च पश्यति स यत्रा-
यं प्रस्वपितीत्युपक्रम्य स्वयं विहत्य स्वयं निर्माय स्वेन भासा
स्वेन ज्योतिषा प्रस्वपित्यत्रायं पुरुषः स्वयंज्योतिर्भवति न तत्र रथा
न रथयोगा न पन्थानो भवन्तीत्यादिरूपा। एवमेव भगवाना-
सुराणां प्राकृतबुद्धिं तमस्येव दुःखात्मके लयं चिकीर्षुः स्वस्मिन्
प्राकृतत्वबुद्धिसम्पादनाय तादृशीमिव लीलां दर्शयतो न
प्राकृतत्वमदोषगन्धोऽप्यत्र। अतएव भगवतोक्तं मामात्मपर-
देहेषु प्रद्विषन्तोऽभ्यसूयका इत्युपक्रम्य ततो यान्त्यधमां गति-
मिति। तेषामासुरत्वेन मुक्त्यनधिकारित्वात् तथाकरणमतः
सद्रूपं सन्ध्यवदुपपत्तेरिति।

भावे जाग्रद्वत् ॥ १४ ॥

लौकिकव्यवहारसमाने लीलापदार्थे यद्दर्शनं भक्तानां तत्तु

* दर्शितमायार्थमिति पा।

े विषये विद्यमाने सति भवति। अत्र दृष्टान्तमाह चाक्ष-
। यथा मोहाभाववतः पुंसः सतएवार्थस्य दर्शनं तथेति।
भ्यां सूत्राभ्यामेतदुक्तं भवति। सोऽश्नुते सर्वान् कामान्
ं ब्रह्मणा विपश्चितेति श्रुत्वा भक्तकामपूरणाय भगवान्
लां करोतीति गम्यते। यद्दर्शनश्रवणस्मरणैर्भक्तानां दुःखं भवति
दृशीमपि तां करोतीति सूच्यते। यथा सौभयुद्धे मोहवचनानि
कादायुधच्युतिः प्रभासीयलीला च। उक्तरीत्या सोऽश्नुत इति
त्या परब्रह्मत्वमवगम्यते। उक्तलीलया तद्वैपरीत्यञ्च। एवं
लैकस्या वास्तवत्वमन्यस्या अवास्तवत्वं वाच्यं। ते ते धामान्यु-
सि। विष्णोः कर्म्माणि पश्यत। तद्विष्णोः परमं पदं। तद्-
श्मासो विपश्चत इत्यादिश्रुतिभिः

> सहस्रशीर्षं देवं विश्वाक्षं विश्वसम्भवं*।
> विश्वं नारायणं देवमक्षरं परमं पदं॥
> विश्वतः परमं नित्यं विश्वं नारायणं हरिं।
> विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवति।
> पतिं विश्वस्यात्मेश्वरं शाश्वतं शिवमच्युतं॥

इत्यादिभिश्च परब्रह्मणस्तद्विपरीतदर्शनेऽयुक्तं हेत्वभावः।
च लाघवव्यामोहनमेवेति पूर्वसूत्रेणोपपादितः†। भक्तेभ्यः
स्वरूपानन्ददानाय लोकवत्तु लीला कैवल्यमिति न्यायेन वा
लीलाः करोति यथारिंगणादिलीलाः भगवतो नैसर्गिकधर्म-
रूपानन्दात्मकत्वेन विद्यमानाएव ता भक्ताः पश्यन्तीति द्वितीय-

---

* विश्वसम्भव इत्यपि पुस्तकान्तरे दृश्यते।
† [illegible]

सूत्रेणोक्तं। अतएव लीलाया अनेकरूपत्वाद्ब्रह्मणश्च श्रुतौ सैन्धवदृष्टान्तेनैकरसत्वनिरूपणाच्छुद्धब्रह्मधर्मत्वं न सम्भवतीति शङ्कानिरासायकैवल्यमित्युक्तं। साक्षी चेता केवलो निर्गुण-श्चेत्यादि श्रुतिषु या अन्यधर्मराहित्यलक्षणा केवलतोक्ता सा लीलात्मिकैव। लीलाविशिष्टमेव शुद्धं परं ब्रह्म न कदाचित् तद्रहितमित्यर्थः पर्य्यवस्यति। तेन स्वरूपात्मकत्वं लीलायाः पर्य्यवस्यति तेन च नित्यत्वं। एतद्विद्वन्मण्डने प्रपञ्चितं। अथवा लीलैव कैवल्यं जीवानां मुक्तिरूपं* तत्र प्रवेशः परमा मुक्ति-रिति यावदित्यर्थः।

## प्रदीपवदावेशस्तथा हि दर्श-यति॥ १५॥

ननु पूर्णज्ञानक्रियाशक्तिमता ब्रह्मणा सुखभावेन तथापि प्रधानभावं प्राप्य कामभोगकरणमपूर्णज्ञानक्रियावतो भक्तस्या-नुपपन्नमित्याशङ्कायां तत्रोपपत्तिमाह। नहि तदा नैसर्गिक-ज्ञानक्रियाभ्यां तथा भोक्तुं शक्तो भवति। किन्तु भगवांस्तच्छ्रि-क्तावेशयति यदा तदाऽयमपि तथैव भवतीति सर्व्वमुपपद्यते। एतदेवाह प्रदीपवदिति। यथा प्राचीनः प्रकृष्टो दीपः स्नेह-युक्तायां वर्त्यामर्वाचीनायामाविष्टः स्वसमानकार्य्यक्षमां तां करोति स्नेहाधीनस्थितिश्च भवति स्वयं तथात्रापीत्यर्थः। अत्र प्रमाणमाह। तथाहि दर्शयति श्रुतिः। भर्त्ता सन्भ्रियमाणो विभर्त्ति एकोदेवोबहुधा निविष्ट इति। सर्व्वान् कामानित्युक्त-

---

* लीलैव कैवल्ये जीवानां मुक्तिरूपे इति ख।

लावस्य कामस्य भोगो यथा निवेशे इति भवति तत्तया तद्वा निवेश इति बहुधा निवेश उक्तः । अयं निवेशो नान्तर्यामित्वेन तस्येकधैव प्रवेशात् । निसर्गतः सर्वेषां जीवानां भगवान् भक्तौवे प्रभुत्वेऽपि तथापि,यं स्वीयत्वेन वृणुते तस्य विवाहितः पतिरिव भर्त्ता सन् वरणजस्नेहातिशयेन भक्तेनापि भ्रियमाणः सन् स इव स्वयमपि तं स्वस्मिन् बिभर्त्ति । अतएव स्नेहराहित्येनायोगोलकादिकं विहाय पतीयं दृष्टान्तमुक्तवान् व्यासः । अतएव देवपदमुक्तं । स्वरूपानन्ददानात् भावोद्दीपनात्पूतनादिमुक्तिदानेन स्वमाहात्म्यद्योतनाद्वैकुण्ठादिद्विभ्यसैव । तदुक्तं निरुक्ते । दिवो दानाद्वा दीपनाद्वा द्योतनाद्वा कस्य लो भवतीति वा यो देव इति । किञ्च । भक्तानां कामभोजनार्थं क्रीडाकरणात् क्रीडायामेव जयेच्छाकरणाद्भक्तैः सह व्यवहारकरणाद्भक्तेषु स्वमाहात्म्येच्छादिद्योतनाच्च पारयेऽहं न लाट्यौ प्रणयिनीमित्यादिभिः स्तुतिकरणाद्भक्त*प्रपत्तिदर्शनेन कालीयदमनादौ मोदकरणात् सेवैव भक्तिमदकरणात् ते स्वप्नेऽपि प्रियमेव पश्यन्तीति स्वप्नकरणात् तेषां कान्तिकरणादिच्छाकरणाद्वा तन्निकटे गमनादपि देवः । तदुक्तं धातुपाठे । दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिष्विति । एवं सति युक्तमेव तेषां तथात्वमिति हि शब्देनाह ।

नन्वस्थूलमनण्वह्रस्वमित्याद्यनन्तरं पठ्यते न तदश्नोति कश्चन न तदश्नोति कश्चनेति । शतश्रुतौ च ब्रह्मणा सह

---

* भक्ते प्रपत्तिदर्शनेनेति च ।

जीवस्य भोग उच्यते। तथाच सगुणनिर्गुणभेदेन विषयभेदो-ऽवश्यं वाच्यो विरोधपरिहारायेत्यत उत्तरं पठति।

स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ १६ ॥

इत्यायमाशयः। प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूय इत्याद्यधिकरणैः परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चेत्यादिश्रुतिभिश्च प्राकृताएव धर्मा निषिद्धन्ते ब्रह्मणप्राकृताएव बोध्यन्तेऽन्यथा तद्बोधनमेव न स्यान्निषेधकवाक्यएव तद्बोधनमपि न स्यादेतस्यैवाक्षरस्य प्रशासन इत्यादिरूपं। अतोऽचिन्त्यानन्तशक्तेर्भगवतः का वा कार्य्यक्षमता यया प्राकृतान् गुणानूरीकुर्य्यादतो निर्गुणमेव सदा सर्व्वत्र भगवद्रूपमिति मन्तव्यं।

एवं सति तद्यथापि हिरण्यं*निधिनिहितमक्षेत्रज्ञा उपर्य्युपरि सञ्चरन्तो न विदुरेवमेवेमाः सर्व्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विदन्तीति† छान्दोग्यश्रुतेः प्रश्नापदप्रायां न कश्चिद्दात्माप्नोति तत्र न कश्चनेति तद्विषयिणी निषेधिका श्रुतिर्ब्रह्मविदाप्नोति परमिति श्रुत्युक्तपरब्रह्मप्राप्तिदशाविषयिणी भोगबोधिका सेति न विरोधगन्धोऽपि। एतदेवाह। स्वाप्ययः प्रलापः स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षत इति श्रुतेः सम्पत्तिर्ब्रह्मसम्पत्तिरुक्तरीत्या पुष्टिमार्गीयो मोक्ष एतयोऽन्यतरापेक्षमुभयश्रुत्युक्तमित्यर्थः। भगवत्कर्तृकभोगस्य लीला-

---

* हिरण्यनिधिनिर्हितमिति ख'।

† न विदुरिति च।

रूपत्वात् तस्यास्र लोकवत्तु लीला कैवल्यमित्यत्र मुक्तिवेन निरूपणात् तत्प्राप्तेः सम्यद्रूपत्वं युक्ततरमिति हि मन्दार्थः ।

जगद्व्यापारवर्ज्यं प्रकरणादसन्निहित-
त्वाच्च ॥ १७ ॥

ब्रह्मणा सह भोगकरणं लौकिकव्यापारयुक्तमुत नेति संशये तद्युतमिति पूर्वः पक्षः । तथा सति मुक्तित्वभङ्गात् पूर्वोक्तमनुपपन्नमिति प्राप्त आह जगदित्यादि । पूर्वोक्तस्य जगत्सम्बन्धी लौकिको यो व्यापारः कायवाङ्मनसात्मकस्तद्वर्ज्यं तद्रहितं भोगकरणं* । तत्र हेतुमाह प्रकरणादसन्निहितत्वाच्चेति । ब्रह्मविदाप्नोति परमित्युपक्रमेण मुक्तिप्रकरणात् तत्र लौकिकव्यापारोऽसमाविष्टः ।

किञ्च । लीलायाः कालमायाद्यतीतत्वेन प्राकृतं जगत् दूरतरमितोऽपि हेतोर्न तत्सम्भवः । कदाचिल्लोके लीलाप्रकटनेच्छायां तदधिष्ठानत्वयोग्ये मथुरादिदेशेऽलिङ्गके गोलके चक्षुरिन्द्रियमिव स्थापयित्वा लीलां करोति । तदापि लीलामध्यपातिनां न लौकिकव्यापारसम्भवः । न हि चक्षुरिन्द्रियं गोलककार्यं करोति न वा तद्भागं गच्छति । एतत्सर्वं दिवीव चक्षुराततमिति श्रुतिव्याख्याने विद्वन्मण्डने प्रपञ्चितं । किञ्च । छान्दोग्ये भूमैव सुखं भूमात्वेव विजिज्ञासितव्य इत्युक्त्वा भूम्नो लक्षणमाह यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमेति । यत्र नान्यद्विजानातीत्येतावतैव चरितार्थेऽपि यत् इन्द्रियव्यापारं निषिध्य तावदन्यविषयकत्वेन भगवद्विषयकः स

* [illegible]

सिद्धो भवतीति जगद्व्यापाररहित्यं सिद्धं तत्र। तेन भगवतएव स्वतन्त्रफलत्वमुक्तं भवति न हि मुक्तस्यान्यप्रयोजनमस्ति।

प्रत्यक्षोपदेशादिति चेन्नाधिकारिक-
मण्डलस्थोक्तेः॥ १८॥

नन्वेतत्प्रकरणएव छान्दोग्ये पठ्यते सर्व्वंह पश्यतीति सर्व्वविषयकप्रत्यक्षमुपदिश्यत इत्यन्यविषयकव्यापार*राहित्यं नोपपद्यत इत्याशङ्का समाधत्ते नाधिकारिकेत्यादिना। अयेद-मुच्यते। सोऽश्नुते लोकमत्र लीला कैवल्यमित्यादिभिर्नित्यलीला-मध्यपातित्वं तस्योच्यते। नान्यत्पश्यतीत्यादिश्रुतिभ्यश्च जगद्व्या-पारवर्ज्जं भोगकरणं पूर्व्वसूत्रेणोक्तं। अयेदं विचार्य्यते। नान्यत् पश्यतीति प्रकरणएव सर्व्वं ह पश्यतीति सर्व्वविषयकं दर्शन-मुच्यते। तत्कथं पूर्व्वोक्तमुपपद्यत इति। किञ्च। एकस्यैव भक्तस्य देशकालभेदेन क्रियमाणानेकलीलासम्बन्धित्वं भवति। तच्च लीलानित्यतायां न घटते। यतस्तत्तद्देशस्तत्तत्कालसम्बन्धिनी सा नित्या। एवं सत्येकस्यानेकरूपत्वं जीवस्य न सम्भवतीति तन्नित्यत्वमपि न सिध्यतीति। तत्रोच्यते। श्रुतौ सर्व्वपदेन न जगदुच्यते। किन्तु यस्यां यस्यां लीलायां देशकालभेदेन क्रिय-माणायामधिकृतो य एको भक्तस्तस्यैव तावन्ति रूपाणि सन्ति। तान्याधिकारिकाणीत्युच्यन्ते। तेषां मण्डलं समूहस्तत्र स्थितवस्तुमात्रमुच्यत इति नानुपपन्नं किञ्चित्। अतएवाग्रे पठ्यते सर्व्वमाप्नोति सर्व्वश इति †।

---

* अन्यविषयव्यापार इति पुस्तकान्तरपाठः।

† सर्व्वमाप्नोति सर्व्वं इति ख।

स एकधा भवति त्रिधा भवति पञ्चधा भवति ।
सप्तधा नवधा चैव पुनश्चैकादशः स्मृतः ।
शतञ्च दश चैकञ्च सहस्राणि च विंशतिरिति ।

यथा मण्डलवर्त्तिषु पुंसु नैकस्य प्राथम्येन प्राधान्यं वक्तुं शक्यं तथैतेष्वपि रूपेष्विति ज्ञापनाय मण्डलपदमुक्तं ।

## विकारावर्त्ति च तथाहि स्थितिमाह ॥ १९ ॥

नन्वेवं सति मस्वच्छेदमायाद्य इति प्रभुणोक्ते तदाशया तत्स्थितिर्नोपपद्यते नित्यत्वात् लीलायास्तस्य कालस्य तदागमनस्य च तदापि वर्त्तमानत्वात् तथा प्रभूक्तिरपि नोपपद्यत इत्याशङ्क्य समाधत्ते । इह भगवल्लीला भक्तिस्तद्विषयोऽयं विकार इत्युच्यते । तत्र न वर्त्तते तज्ज्ञानं तादृशस्य भवति । यत्स्वरूपं प्रति तथा वदति तस्य स्वगेहे तदा भगवत्स्थितिज्ञानं न भवतीत्यर्थः । उपलक्षणं चैतद्यतोऽप्युपदेशकालविशिष्टा यादृशी या लीला तस्यास्तादृश्याएव तल्लीलामध्यपातिनो भक्तस्य ज्ञानं नान्यविषयकमिति ज्ञेयं । अतएव द्वितीयस्यापि मध्ये पूर्व्वमुक्तमासीत्तेनागत इत्येव ज्ञानं भवति । तदेव हि रसोदयोऽसौ रसस्वरूपमध्यपातित्वाल्लीलाया रसस्य च भगवदात्मकत्वाद्भगवद्रूपत्वेन सर्व्वमुपपद्यते लीलायां । अत्र प्रमाणमाह । तथाहि स्थितिमाहेति । सर्व्वमाप्नोति सर्व्वम इति श्रुतिरेकस्यैव भक्तस्य सर्व्वशः सर्व्वैः प्रकारैः सर्व्वलीलारसमाप्नोतीति वदन्त्युक्तरीत्यैव लीलायां स्थितिमाहेत्यर्थः । अतो वस्त्वेवेदमलौकिकमीदृशमिति मन्तव्यं वैदिकैरिति भावः । अलौकिकेऽर्थे लौकिकरीत्यनुसरणं न युक्तं किन्त्वलौकिकरीत्यनु-

स्वरूपमेव युक्तमिति हि शब्देन बोध्यते । एतेन रसो वै स इति श्रुतेर्लीलाविशिष्टएव प्रभुस्तथेति तादृशएव परमफलमिति ज्ञापितं भवति ।

## दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ २० ॥

न च लौकिकयुक्तिविरोधोऽत्र बाधकत्वेन मन्तव्यः किन्तु साधकत्वेन । यतः प्रत्यक्षानुमाने श्रुतिस्मृती अपि लौकिकयुक्त्यप्रसारेणालौकिके* भगवत्सम्बन्धिन्यर्थेऽन्यथाभावनं निषेधति । नैषा तर्केण मतिरापनेया । परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च । अलौकिकास्तु ये भावा न तांस्तर्केण योजयेत् । श्रीभागवते च । न हि विरोध उभयं भगवत्यपरिगणितगुणगण ईश्वरेऽनवगाह्यमाहात्म्येऽर्वाचीनविकल्पवितर्कविचारप्रमाणाभासकुतर्कशास्त्रकलिलान्तःकरणाशयदुरवग्रहवादिनां विवादानवसर इत्यादिवाक्यैरचिन्त्यानन्तशक्तिमत्त्वेन भगवत्स्वरूपस्यैव परमफलत्वं प्रदर्श्यते ।

किञ्च । ता वां वास्तून्युश्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः अत्राह तदुरुगायस्य वृष्णः परमं पदमवभाति भूरी-त्यृग्वेदे पठ्यते । किञ्चित्पाठभेदेन यजुःशाखायामपि । ता तानि वास्तूनि वां गोपीमाधवयोः सम्बन्धीनि गमध्यै प्रसादत्वेन प्राप्तुमुश्मसि कामयामहे । तानि कानीत्याकाङ्क्षायां गूढाभिसन्धिमुद्घाटयति । यत्र श्रीगोकुले गावो भूरिशृङ्गा

* अलौकिकभगवत्सम्बन्धिनीति क्वचित् दृश्यते ।

† कलिका इति पुस्तकान्तरस्थः पाठः ।

‡ अयासद्रव इति च ।

बहुशृङ्गा महत्तयो वसन्तीति शेषः। ग्राम्यारण्यपशूपलक्षणार्थमुभयोरेव ग्रहणं। अत्राह भूमाविव तदुरुगायस्य बहुगीयमानस्य वृष्णः भक्तेषु कामान् वर्षतीति वृषा तस्य परं स्थानं वैकुण्ठं ततोऽपि परममधिकमत्र विचित्रलीलाकरणात्। भूरि यमुनापुलिननिकुञ्जगोवर्द्धनादिरूपत्वेन बहुरूपं। तथाच तत्रत्यानि तानि कामयामह इति वाक्यार्थः सम्पद्यते। एतेन लीलासम्बन्धिवस्तूनां यत्र फलत्वेन* बहुरूपप्रार्थनं तत्तल्लीलाकर्त्तुः परमफलत्वे किं वाच्यमित्याशयो ज्ञाप्यते। यत्र ह वाव तव महिमामृतसमुद्रविप्रुषा सकृल्लीढया स्वमनसि निष्यन्दमानानवरतसुखेन विस्मारितदृष्टश्रुतसुखलेशाभासाः परमभागवता इति श्रीभागवते। एतेनापि कैमुतिकन्यायेन प्रभोरेव स्वतः पुरुषार्थत्वं ज्ञाप्यते। फलप्रकरणत्वात्तदेवाधिकरणतात्पर्य्य विषय इति ज्ञायते।

भोगमात्रसाम्यलिङ्गाच्च ॥ २१ ॥

इतोऽपि हेतोः पुरुषोत्तमस्वरूपमेव परमं फलमिति ज्ञायते। यतः सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेति श्रुतौ भक्तसाम्यमुच्यते। तत्र पुरुषोत्तमएव स्वभजति यतः सख्यं दत्त्वा तत्तदात्मनिवेदनमङ्गीकुर्वन्नतिकृपणः स्वस्वरूपानन्दमनुभावयंस्तां प्रधानीकरोति अन्यथा भक्तोऽनुभवितुं न शक्नुयात्। युक्तं चैतत्। प्राप्तं फलं स्वाधीनं भवत्येवान्यथा फलत्वमेव न स्यात्। तथाचाप्यासिद्धादपि प्रभोरेव परमफलत्वं सिध्यति न तत्समश्चाभ्यधिकश्च दृश्यत इति श्रुतिविरोधपरिहाराय मात्रपदं। न

---

* बहुरूपेण प्रार्थनमिति पा०।

चाच कामभोगस्य फलत्वं भ्रष्टव्यं। आप्नोति परमित्येतद्व्या-
ख्यातिरूपत्वात् स्वरूपानुभवरूपत्वात् भोगस्य। अनुभूयमानस्यैव
हि सुखस्य लोके* पुरुषार्थत्वोक्तेः ।

एवं भगवतः स्वतः पुरुषार्थरूपत्वमुक्त्वा कर्मफलभोगानन्तरं
मावृत्तिवदवाप्त्यावृत्तिर्भविष्यतीत्याशङ्कानिरासायोत्तरं पठति।

## अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ २२ ॥

अनावृत्तिर्भक्तानां श्रानिनाचोच्यते। तत्र मानं शब्दः। स च
तयोर्ध्वमायन्नमृतत्वमेति। न तेषां पुनरावृत्तिरेतेन प्रतिपद्य-
माना इमं मानवमावर्त्तं नावर्त्तन्ते। ब्रह्मलोकमभिसम्पद्यते न
च पुनरावर्त्तते इत्यादिरूपस्तु श्रानिनान्तामाह। न हि
भक्तानां नाद्यादिप्रयुक्तममृतत्वं ।

तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः ।
न ज्ञानं न च वैराग्यं प्रायः श्रेयोभवेदिह ।

इत्यादिवाक्येभ्य किन्तु यमेवेति श्रुतेर्वरणमात्रलभ्यः पुरुषो-
त्तमः एवं सति ब्रह्मविदाप्नोति परमिति श्रुतेर्विरोधपरिहार-
पूर्व्वकोक्तव्याख्यानरीत्या भक्तस्य परं ब्रह्म प्राप्तस्य निर्दोषत्वादा-
वृत्तिहेतुभावात् प्रपञ्चे नावृत्तिः सम्भवति। तादृशं प्रतीश्वरे-
च्छापि न तथा भवितुमर्हति।

ये दारागारपुत्राप्तप्राणान्वित्तमिमं परं ।
हित्वा मां शरणं याताः कथं तांस्त्यक्तुमुत्सहे ॥

इति भगवद्वाक्यात्। परप्राप्तिरूपत्वाच भोगस्य न नाश॰

* लोकैरिति खं ।

सम्भावना* । किञ्च । यदैकस्यैव भक्तस्य देशकालभेदेनानेकविधलीलासम्बन्धित्वेऽपि तत्तल्लीलासम्बन्धित्वमनश्वरमुच्यते तत्र सर्वथा तदभावः कथं वक्तुं शक्यो ब्रह्मणापि । अपरञ्च । कालसाध्यो हि नश्वरः स्यात् हि पुरुषोत्तमे कालः प्रभवितुं शक्नोति । न यत्र कालो निमिषां परः प्रभुरित्यादि वाक्येभ्यः । तथाच ज्ञानमार्गीयभक्तिमार्गीययोरनावृत्तौ तुल्यत्वेऽपि फलप्राप्तौ वैलक्षण्यात् पूर्व्ववाक्येन भक्तानामावृत्तिमुत्तरवाक्येन ज्ञानिनामिति ज्ञायते । न च फलप्रकरणात्तेनावृत्तेः संसाराभावएव जीवस्य परमं फलमित्याचार्याभिप्रायोज्ञायते इति वाच्यं । ब्रह्मविदः परमाप्तिं फलत्वेनोक्ता तत्स्वरूपस्य सर्व्वकामभोगत्वेन श्रुत्या निरूपणात् । स च स्वस्वाधिकारानुसारेण निवेदितार्थाङ्गीकाररूपएवेति ज्ञेयं । तेन सएव परमं फलमनावृत्तिस्त्वर्थिको परंत्वावृत्तौ सम्भवत्या परमफलत्वं नोपपद्यत इति ज्ञानदुर्व्वलशङ्कानिरासायेयमुक्ता । पुष्टिमार्गीयभक्तविशेषप्रवर्त्तकनिवर्त्तकवेणुशब्दात् भगवन्निकटगतानामावृत्तिः पूर्व्वेणोक्ता मर्य्यादामार्गीयाणां वेदरूपाच्छब्दात्तदुक्तसाधनादनावृत्तिं द्वितीयेनेत्यपि तात्पर्य्यविषयः श्लिष्टो ज्ञेयः । तथा सति परमफलमग्रे स्वतएव भावीति भाव इत्यलं विस्तरेण ।

जानीत परमं तत्त्वं यशोदोत्सङ्गलालितं ।
तदन्यदिति ये प्राहुरासुरांस्तानहो बुधाः ॥
नानामतध्वान्तविनाशनक्षमवेदान्तसिद्धान्तविकासने पटुः ।
आविष्कृतोऽयं भुवि भाष्यभास्करोमुधा बुधा धावत मान्यवर्त्मसु ।

* भाष्ये सम्भावना इति पाठस्तु क्वचित् ... पुस्तकान्तरे च भाष्यं सम्भवादिति ।

पुरन्दरमदोद्भवप्रचुरवृष्टिसंपीडित
स्वकीयव्रगोकुलावनपरायणो लीलया।
स्मितामृतसुदृष्टिभिः परिपुपोष तान्योगिरिं
दधार च स एव हि श्रुतिशिरःसु संराजते॥
श्रीकृष्णकृपयैवायं सिद्धान्तो हृदि भासते।
तेनाधिकं वरोवर्त्ति न वक्तव्यं हरे नृणां॥
भाष्यपुष्पाञ्जलिः श्रीमदाचार्य्यचरणाम्बुजे।
निवेदितस्तेन तुष्टा भवन्तु मयि ते सदा॥

इति श्रीवेदव्यासमतवर्त्तिश्रीवल्लभाचार्य्यविरचिते ब्रह्मसूत्राणु-
भाष्ये चतुर्थस्याध्यायस्य चतुर्थपादः समाप्तः।

---